मुकुन्दकोषस्थ—

# लिङ्गानुशासनवर्गः

# LIṀGĀNUŚĀSANAVARGAḤ

श्रीमद्गढवालदेशान्तर्गतदेवप्रयागसमीपवर्तिखण्डग्रामनिवासिना श्रीमत्पण्डित-
रघुवरदत्ततनुजनुषा मुकुन्दशर्मणा विरचितो लिङ्गानुशासनवर्गः ।

स च—

निजनिर्मितया विमलाख्यया संस्कृत-व्याख्यया संस्कृतटिप्पण्या च समलङ्कृतः ।

( BY MUKUND SHARMA )

WITH THE FINANCIAL ASSISTANCE OF THE MINISTRY OF EDUCATION,
GOVERNMENT OF INDIA

प्रथमावृत्तिः १०००

शकाब्दाः १८८४
खिष्टाब्दाः १९६२

# भूमिका

काचन जातिः किमपि राष्ट्रं वा यथा यथोन्नतिपथमारोहति तथा तथास्या अस्य वा वाङ्मयमप्युन्नमते। वाङ्मयवृद्धौ तद्भाषाशब्दानामपि वृद्धिर्नैसर्गिकी। नवनवार्थेषूदीयमानेषु नवनवास्तद्वाचका शब्दा अपि उदयन्ते। इत्थं क्रमेण शब्दसागरे परिवर्धमाने तदवगाहन-सौकर्याय कोषा अप्याविर्भवन्ति। अतिपुरातने वैदिके काले निघण्टुनामानः शब्दकोषा आसन्। इमे कोषा एकदेशिनः केवलं वैदिकानेव शब्दान् समगृह्णन्, न पुनर् लौकिकानपि। तदनु क्रमेण लौकिकभाषाशब्दसंग्राहका अपि कोषाः निरमीयन्त, इयं तदानीन्तनी लौकिकभाषा देवभाषा आसीत्, या वयमिदानीं 'संस्कृतम्' इत्याचक्ष्महे।

इमे संस्कृतभाषाशब्दकोषा अर्थानां वर्गान् प्रकल्प्य तत्क्रमेणैव पद्येषु व्यरच्यन्त, न पुनराधुनिकशैल्या अर्थवर्गप्रक्लृप्तिमकृत्वा उदर्थशृङ्खलम् अकारादिवर्णक्रममाश्रित्य। वर्गक्रमेण निर्मितेषु कोशेषु एकार्थवाचकाः शब्दा एकत्रोपलभ्यन्ते, तेन लेखकैः प्रसङ्गोपयोगिशब्दानां विचयः साधु शीघ्रं च कर्तुं शक्यते, वर्णमात्रक्रमेण प्रणीतेषु कोषेषु तु समानार्थानां शब्दानां यत्र तत्र विकीर्णत्वाद् एकत्रानुपलम्भात् तथा कर्तुं न पार्यते। शीघ्रं शब्दार्थमात्रजिज्ञासाशान्तये तु वर्ण-क्रमेणैव रचिताः कोशा उपयोगिन इति निर्विवादम्।

अद्यत्वे वर्गक्रमेण ग्रथिता अमर-केशव-यादव-हलायुध-त्रिकाण्डशेषादयः त्रिंशत्पञ्चत्रिंशाः संस्कृतशब्दकोशा उपलभ्यन्ते, ते सर्वेऽपि लघुकायाः सन्ति। व्याडिर्नाम कश्चित् प्राचीनो विद्वान् लक्षश्लोकात्मकं संस्कृतभाषाकोशं निर्ममे—इति श्रूयते, परं न स इदानीमुपलभ्यते। पातञ्जले महाभाष्ये चर्चितः संग्रहनामको व्याकरणग्रन्थोऽपि व्याडिनैव कृत इति शब्दशास्त्रविदो विद्वांस आहुः, सोऽपि च ग्रन्थो लक्षश्लोकात्मक एव, न चाद्यत्वे समुपलभ्यते। लक्षसंख्याप्रियाविमौ कोशकार-संग्रहकारावुभावपि व्याडी किमेकैव व्यक्तिः ? उत द्वे व्यक्ती ? इति न निश्चित्य वक्तुं शक्नुमः।

अलमनया अप्रकृतचिन्तया, प्रकृतमनुसरामः। अमर-विश्वादयः कोशा अत्यल्पशब्दधनाः न कवीनाकृष्टुं क्षमाः, शब्दकल्पद्रुमादयो बृहत्कायाः कोषा अपि वर्गक्रमेणाप्रणीतत्वाद् न कवीन् न वा लेखकान् आकर्षन्ति—इति कञ्चन विपुलशब्दराशिसंग्राहकं पद्यात्मकं वर्गक्रमबन्तं कोषं विरचयितुमनसः, ज्योतिर्विदां मूर्धन्याः, नैकेषां लघीयसां महीयसां च ज्योतिर्ग्रन्थानां प्रणेतारः, गढवालमण्डलान्तर्गत–सुरतरङ्गिणीतीरविराजितखण्डग्रामवास्तव्याः, द्विजकुलजेगीयमानयश-श्चक्रवालबडेथवालवंशविभूषकाः, श्रीमुकुन्दपादारविन्दमधुव्रताः, विद्वद्गणगीतमहिमानः श्रीमुकुन्दरामशर्माणः त्रिंशद्वर्षाण्यविरतं परिश्रम्य अद्य यावदुपलब्धान् सर्वान् कोशान् निपुणमधीत्य बृहद्वपुषं मुकुन्दकोषं विरचितवन्तः।

अस्य महाकोषस्य भागद्वयं वर्तते—पर्यायभागश्च अनेकार्थभागश्चेति। तत्र पर्यायभागे पञ्चाधिकशतं (१०५) वर्गाः सन्ति, अनेकार्थभागे च द्वौ वर्गौ वैद्यकानेकार्थवर्ग, साहित्यानेकार्थवर्गश्चेति। इत्थं सप्ताधिकशत(१०७)वर्गात्मकोऽयं महानभिधानसंग्रहोऽद्य यावत् प्रकाशितान् सर्वानप्यभिधानसंग्रहान् अतिशेते।

अस्य महाग्रन्थस्य केवलमेकं पञ्चाधिकशततमोऽयं (१०५ वां) लिङ्गानुशासनवर्ग. भारत-शासन (भारत-सरकार) साहाय्येन प्रकाशितं पाठकानां हस्तयोर्वर्तते। आशास्यते भारत-शासनमस्यावशिष्टान् अशेषानपि भागान् प्रकाशयितुं साहाय्यं वितरिष्यति।

अस्मिन् लिङ्गानुशासनवर्गे हेमचन्द्राचार्यादिविरचितानि लिङ्गानुशासनानि सकलय्य ग्रन्थकृता स्वकृतया विमलाख्यया व्याख्यया सोदाहरणं व्याख्यातानि।

ग्रन्थकर्तुर्विद्वद्वरस्यास्य कोशाध्ययनमत्यन्तप्रियम्। स्वयमेवायमाह—'मुकुन्दस्य प्रतिज्ञे द्वे कोषं गङ्गां च न त्यजेत्' इति। एतेनैव पाठका एतदनुमातुं शक्नुवन्ति यदेतन्महाकोशप्रणयने ग्रन्थकृता कियन्मनोयोगेन कियत् परिश्रान्तं भवेदिति। एतेन कोशेन सस्कृतभाषाया तदुपनिबद्धस्य वाङ्मयस्य च श्रीवृद्धिर्भविष्यतीत्यसंशयं वचः। अन्ते च प्रार्थ्यते—

मुकुन्द इव लोकेऽयं मुकुन्दविदुदीरित.।
मुकुन्दकोषः सततं जायतां विदुषां मुदे॥

परमेश्वरानन्दः
महामहोपाध्यायः, विद्याभास्करः
केन्द्र-संस्कृत-मण्डलस्य भूतपूर्व-सदस्यः

कार्तिक कृ. ५मी, बुधवार,
संवत् २०१९ वि०, इन्द्रप्रस्थ।

॥ श्री ॥

# आभार-प्रदर्शनम्

एतस्य लिङ्गानुशासनवर्गस्य प्रकाशन भारतशासनदत्तद्रव्यसाहाय्येनैव शक्यसंभवमभूदिति भारतशासन प्रति सविनय कृतज्ञतामात्मन, प्रकाशयाम, ।

विद्यानुरागिण, प्राचीनभारतीयसस्कृतौ द्रढीयसी श्रद्धां दधाना विनयमूर्तयो भूतपूर्व-राष्ट्रपतय: श्रीराजेन्द्रप्रसादमहाभागा', वाग्मिना धुरि कीर्तनीया:, अगण्यगुणग्रामा:, साप्रत-भारत-राष्ट्रपतिभद्रासन विभूषयन्त श्रीराधाकृष्णमहाभागा, भारतस्य प्रधानमन्त्रिण. श्रीजवाहरलाल महोदया, भूतपूर्वगृहमन्त्रिण स्वर्गीयश्रीगोविन्दवल्लभपन्तमहोदया, वर्तमानगृहमन्त्रिण: श्री लालबहादुरशास्त्रिण:, वित्तमन्त्रिण श्रीमुरारजी देसाई महाभागा, शिक्षामन्त्रिण: श्रीकालूलाल श्रीमालिनोमहाभागा, योजनामन्त्रिण. श्रीगुलजारीलालनन्दामहाभागा, गृहसचिवश्रीबलवन्तनागेश दातारमहोदया', शिक्षासचिवालये सयुक्तसचिवास्पदमलङ्कुर्वन्त श्रीरमाप्रसन्ननायक-महाभागा, तत्रैवोपसचिवपदे श्रीमदभिमन्युकुमार जैन महोदया', उत्तर-प्रदेशप्रशासनस्य वर्तमान मुख्यमन्त्रिण' श्रीचन्द्रभानुगुप्त महाभागा', भूतपूर्वमुख्यमन्त्रिण: श्रीसम्पूर्णानन्द महाभागा', डाक्टर सिद्धेश्वरवर्ममहाभागा', लोकसभासदस्या: श्रीभक्तदर्शन महोदया', सस्कृत-भाषासंबन्धे भूतपूर्वविशेषाधिकारिण. श्रीसरस्वतीप्रसाद चतुर्वेदिन., तत्रैव वर्तमानविशेषाधिकारिण: श्री डाक्टर रामकरणशर्म महाभागा', पद्मभूषणोपाधिसमलङ्कृता ज्योतिर्विच्चक्रचूडामणय' श्रीसूर्यनारायणव्यासमहोदया', दैवज्ञशिरोमणय आचार्यचक्रधरजोशीमहाभागा, श्रीनारायण-स्वामिनो महात्मान, श्रीकिशोरीलालशर्माणो महोदया, श्रीहरदेव शर्माणो ज्योतिषाचार्य-महोदया, कविवर्य' श्रीबालकृष्णभट्ट महोदया दर्शनकेशरिण', श्रीवृन्दावन ध्यानी महोदयाश्च एतद्ग्रन्थप्रकाशनकर्मणि स्वसहानुभूति–सत्सम्मत्यादिप्रदानेन अस्मान् बलवदुपकृतवन्त इति तेषामपि धन्यवादपुरस्सरं वयमाभारिण स्म ।

श्रीश्रीधरप्रसादशास्त्रिणापि एतत् पुस्तकप्रूफसंशोधनादिकर्मणि अस्माक साहाय्य प्रतिपन्नमिति सोपि महाभागोऽस्माभि: सादरमभिनन्द्यते धन्यवादैश्च पुरस्क्रियते। अन्ते च महामहोपाध्यायविरुदभाज:, केन्द्र-सस्कृत-मण्डलस्य भूतपूर्वसदस्यान् श्रीपरमेश्वरानन्दशास्त्रिमहाभागान् प्रत्यपि वय कृतज्ञता वहाम', यैर्ग्रन्थमिममधीत्यास्य भूमिकालेखनक्लेश: सहर्षं सोढ ।

मुकुन्द आश्रम •
गढ़वाल (उत्तर प्रदेश)
कार्तिक कृ· पञ्चमी, सव्वत् २०१९

विदुषां वशवदो विनीत.
'ग्रन्थ-प्रणेता
मुकुन्द.

# विषयानुक्रमणिका

# मुकुन्दकोषः

अस्य

# लिङ्गानुशासनवर्गः ।

श्री नन्दनन्दनाय नम ।

प्रणम्य शिरसा नन्दनन्दनाङ्घ्रिसरोरुहम् ।
लिङ्गानुशासनं रम्यं कुर्वेऽहं लिङ्गविन्मुदे ।।

अथास्मिन्कोशे जाति–गुण–यदृच्छाशब्दा सन्ति। तत्र वनौषधिसम्बन्धिषु वृक्षादिवर्गेषु सङ्गीतवर्गे च व्युत्पत्तिरहिता यदृच्छा—(प्राकृत) शब्दा बहव. सन्ति। अतस्तद्ग्रहणनिर्दोषत्वं प्राह नरहरि—(राजनिर्घण्टावभिधानचूडामणीत्यपरपर्य्याये पृ० १ श्लो० ६, ७, ८)

"किरातगोपालकतापसाद्या वनेचरास्तत्कुशलास्तथाऽन्ये ।
विदन्ति नानाविधभेषजानां प्रमाणवर्णाऽऽकृतिनामजातीः ।।
तेभ्यः सकाशादुपलभ्य वैद्यः पश्चाच्च शास्त्रेषु विमृश्य बुद्ध्या ।
विकल्पयेद्द्रव्यरसप्रभावा-न्विपाकवीर्य्याणि तथा प्रयोगात् ।।
प्रायो जनाः सन्ति वनेचरास्ते गोपादयः प्राकृतनामसञ्ज्ञाः ।
प्रयोजनार्था वचनप्रवृत्तिर्यस्मात्ततः प्राकृतमित्यदोषः ।।" इति ।।

किरात इति । तेभ्य इति । प्राय इति च । एषा विवृति. सुगमा ।

ननु पाणिनि—कात्यायनप्रभृतिकृतानि लिङ्गानुशासनानि सन्ति किमनेनेत्युच्यते दुर्गसिंहेन—(दुर्गसिंहकृते लिङ्गानुशासने पृ० १ श्लो० २)

"स्त्रीपुन्नपुंसकानि स्वार्थैः सिद्धानि लोकतो यानि ।
तानि त्यक्त्वाऽऽर्य्याभिः क्रमशो वक्ष्येऽवशिष्टानि ॥" इति ॥

स्त्रीति। सिद्धशब्दोऽत्र प्रसिद्धवचन । अन्यत्सुगमम् । यादवोऽप्याह–(वैजयन्त्या पृ० २८९ श्लो० १)

"नाम्नां पूर्वमिहोक्तानामनुक्तानां च कृत्स्नश. ।
सामान्यैर्लक्षणैः कैश्चित् क्रियते लिङ्गसंग्रहः ॥" इति ॥

नाम्नामिति । अस्य व्याख्या तु सुगमा ।

इह विशेषमाहामरसिह —(अमरकोषे नामलिङ्गानुशासनेत्यपरपर्य्याये पृ० ४४९ श्लो० १॥)

"सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ।
अनुक्तैः संग्रहे लिङ्गं सङ्कीर्णवदिहोन्नयेत् ॥

अस्य व्याख्या—

सलिङ्गेति । सलिङ्गशास्त्रै —लिङ्गविधानसहितानि यानि सूत्राणि (शास्त्राणि) 'स्त्रियांक्ति'–न्नादीनि तै. सहितै सन्नादिप्रत्ययजैश्चिकीर्षा–लोलूया–पुत्रकाम्यादिशब्दै, कृज्जै श्वपाक-भूति-इष्टि-कृति-स्मृति-प्रभृतिशब्दैः, तद्धितप्रत्ययजैरणाद्यन्तै औपगव–औपगवी–गार्ग्य–गार्ग्यादिशब्दै, समासजैरदन्तोत्तरपदो द्विगुरित्यादिनोक्तै सञ्ज्ञापरिभाषबदरामलकादिशब्दै, बाहुल्येन पूर्वमनुक्तैः शब्दैश्चाय सग्रह क्रियत इति शेष । अस्मिन् लिङ्गानुशासनवर्गे सङ्कीर्णवत् प्रागुक्तसङ्कीर्णवर्गसमान प्रकृति–प्रत्यय–क्रियाविशेषणैर्लिङ्ग पुलिङ्गादिकमुन्नयेदूहेत् । (सु० व्या०)

लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ॥" इति ॥

अस्य व्याख्या—

लिङ्गेति । लिङ्गस्य पुंलिङ्गप्रभृते शेषोऽवशिष्ट तस्य विधिर्विधान व्यापी व्याप्नोति स्वविषयस्य व्यापको भवति। उत्सर्गत्वात् । विशेषैरिहोक्तै पूर्वोक्तैश्च यदि विशेषविधिभिर्बाधित स्यात्तर्ह्येव व्यापी । अर्थादपवादविषयमपहाय सर्वत्र प्रवर्त्तत इत्यर्थ । अनेनास्य लिङ्गविशेषविधेरुत्सर्गभूतस्य शब्दादिवर्गा अपवादा ज्ञेया । तत्र पूर्वोक्ताना विशेषाणा द्विरुक्तिदोषभयान्न पुनरत्र विधानम् इति। (सु० व्या०)

तथा च यादवः—(वै० पृ० २८९ श्लो० २)

## लिङ्गानुशासनवर्गः ।

"अबाधिते विशेषोक्त्या भवेत्सामान्यलक्षणम् ।" इति ।

अबाधित इति । अस्य व्याख्या तु पूर्ववद् बोध्या।

अथेह शब्दस्य सलिङ्गोऽलिङ्गश्चेत्येतौ द्वौ भेदावाह–युरुगपादण्डाधिनाथ —(नानार्थ-रत्नमालाया पृ० २ प० ५)

"अमी सलिङ्गनिर्लिङ्गभेदाद् द्वेधा भवन्ति हि ।" इति ।

अमीति । अस्य विवृति सुगमा ।

तत्राऽऽदौ स एव सलिङ्गशब्दाना सप्तविधत्व प्राह—(ना० र० मा० पृ० २ प० ६,७)

"सलिङ्गाः सप्तधाऽऽवृत्या स्त्रियां पुंसि नपुंसके ।
स्त्रीपुंसयोः क्लीबपुसोः स्त्रीनपुंसकयोस्त्रिषु ।।" इति ।।

अस्य व्याख्या—

सलिङ्गा इति । सलिङ्गा लिङ्गसहिता. शब्दा सप्तधाऽऽवृत्या सप्तविधा भवन्ति तद्यथा—(१) स्त्रियाम् = स्त्रीलिङ्ग (२) पुमि = पुलिङ्ग (३) नपुसके = क्लीबलिङ्ग (४) स्त्रीपुसयो = योषिन्नरलिङ्ग (५) क्लीबपुसो = षण्डपुलिङ्ग (६) स्त्रीनपुसकयो = योषाक्लीबलिङ्ग. (७) त्रिषु = त्रिलिङ्गश्चे ते सलिङ्गशब्दानां सप्तभेदा. स्यु ।

यादवस्तु सलिङ्गशब्दानामष्टविधत्वमाचष्टे—(वै० पृ० १ श्लो० २, ३)

"प्रकाश्याष्टविधं लिङ्गं निर्लिङ्गं वचनानि च ।
स्त्रीपुन्नपुंसक लिङ्गं सङ्कीर्णं तच्च पञ्चधा ।।
नृस्त्री नृषण्डः षण्डस्त्री त्रिलिङ्गं वाच्यलिङ्गकम् ।" इति ।

अस्य व्याख्या—

प्रकाश्येति । (१) स्त्रीलिङ्ग (२) पुलिङ्ग (३) नपुसकलिङ्ग (४) पुंस्त्रीलिङ्ग. (५) नरक्लीबलिङ्ग (६) क्लीबयोषिल्लिङ्ग (७) त्रिलिङ्गम् = पुंस्त्रीक्लीबलिङ्ग (८) वाच्य-लिङ्गोऽभिधेयलिङ्गश्चेत्येते सलिङ्गशब्दानामष्टभेदा स्युरित्यर्थः ।

अथादौ क–ट–णादिवर्णोपान्तान् साद्यन्तान्, इमन्नादिप्रत्ययान्तांश्च पुलिङ्गवाचक-शब्दानाह हेमचन्द्राचार्य्य —(अभिधानसग्रहे लिङ्गानुशासने पृ० १ श्लो ०१)

पुलिङ्गं क–ट–ण–थ–प–भ–म–य–र–ष–स–स्वन्त,–
मिमन–लौं, कि,–श्तिब्, । न–नङौ, घ–घञौ, दः कि–
भावे रवो,–ऽकर्त्तरि च कः स्यात् ।।१।।" इति ।

अस्य व्याख्या—

पुलिङ्ग[१]मिति। अत्र वक्ष्यमाण विशेषविधानमन्तरा पुलिङ्ग. स्यादित्यन्वयः। अका[२]रान्तेषु शब्देषु को[३]पधा आनक–स्फटिक–शुक–वराटका–ङ्क–शोक–लोका–कादिय । टो[४]पधा विट–कर-हाट–कुट–घट–करट–पट–सरटादय.। णो[५]पधा गुण–क्षण–काण–शाण–किरण–पाषाण–गुणादयः। थो[६]पधा रोमन्थ–वेपथु–निशीथो–पस्थ–स्वयथु–नाथ–सार्थ–रथ–शपथादय । पो[७]पधा दर्प–कल्प–बाष्प–सर्प–शूर्प–कूप–यूप–सूर्प–कलापादय । भो[८]पधा–दर्भ–निकुम्भ–स्तम्भ–कौस्तुभ–शलभ–कुम्भ–सरभ–गर्दभादय । मो[९]पधा–गोधूम–डिण्डिम–धूम–सोम–होम–व्याम–गुल्म–ग्रामादय । यो[१०]पधा लय–तण्डुलीय–विनया–पनय–प्रणय–व्यया–ऽऽय–तन्तुवाय–सख्यादय. । रो[११]पधा. कडङ्गर–कुटर–झर्झर–सीकर–सीर–श्वशुरा–ऽङ्कुर–समीरादय । षो[१२]पधा –शिरीष–घोष–माष–तुष–तोष–पोष–रोषौ–ष–प्लोष–प्लक्ष–यक्ष–वाताक्ष–गवाक्ष–जिनाक्ष–यानाक्षादय.। सो[१३]पधाः कूर्पास–हस–कुत्स–सर्जरस–रस–हास–पनसादय । सकारान्ताः पुरुदशो–दमुन–श्चन्द्रमो–ऽङ्गिरो–ऽनेह–उशनो–वेध प्रभृतय । नकारा[१४]न्ता कृष्णवर्त्म–प्रतिदिव–मघव–वृष–उक्ष–प्लीह–ग्राव–सुपर्वादय.। उकारा[१५]न्तास्तर्कु–धातु–वायु–जायु–मेरु–जन्तु–पीलु–सेतु–गोमायु–पायुप्रभृतय.। अन्तान्ताः सीमन्त–पर्य्यन्त–दिष्टान्त–सिद्धान्तादय ।

---

(१) पाणिनीयेऽपि '(पुमान्)' अधिकारोऽयम् । (सि० कौ० पृ० ३९८ सू० ३५) (२) तत्रैव—'(प्राग्रश्मेरकारान्तं)' '(रश्मिर्दिवसाभिधानम्)' इति वक्ष्यति । प्रागेतस्मादकारान्त इत्यधिक्रियते ॥ (सि० कौ० पृ० ३९९ सू० ५९ । (३) (कोपधः) ॥ कोपधोऽकारान्त. पुसि स्यात् । स्तवकः=गुच्छक । कल्क = घृत–तैलादिशेष । सि० कौ० पृ० ३९९ सू० ६० । (४) [टोपध] ॥ टोपधोऽकारान्त पुसि स्यात् । घट = कुम्भ । पटः=शोभनवस्त्रम् । सि० कौ० पृ० ३९९ सू० ६३ । (५) (णोपध)॥ णोपधोऽकारान्त पुसि स्यात् । गुण =मौर्वी । गण =रुद्रानुचर । पाषाणः=प्रस्तर । सि० कौ० पृ० ४०० सू० ६६ । (६) (थोपधः) ॥ अदन्तः पुसि । रथः=स्यन्दनः । वेपथुः=वेपनम् । सि० कौ० पृ० ४०० सू० ६९ । (६अ) (नोपधः) ॥ अदन्तः पुसि । इन =सूर्य्यः । फेनः=समुद्रफेनः । सि० कौ० पृ० ४०० सू० ७३ । (७) (पोपधः) ॥ यूपः= यज्ञस्तभः । दीपः=वर्तिस्थज्वलदग्निशिखा । सर्पः=अहिः । सि० कौ० पृ० ४०० सू० ७६ । (८) (भोपधः) ॥ अदन्त पुसि । स्तभ =स्थूणा । कुभः=कलसः । सि० कौ० पृ० ४०० सू० ७९ । (९) (मोपधः) ॥ अदन्त पुसि । सोम =चन्द्रमा । भीम =द्वितीयपाण्डव । सि० कौ० पृ० ४०० सू० ८२ । (१०) (योपध)॥ अदन्त. पुंसि । समय =कालः । हय =घोटक । सि० कौ० पृ० ४०० सू० ८५ । (११) (रोपध)॥ अदन्त पुंसि । क्षुर =लोमच्छेदनद्रव्यम् । अङ्कुर =अभिनवोद्भिद् । सि० कौ० पृ० ४०० सू० ८८ । (१२) (षोपध)॥ अदन्त पुसि । वृष =बलीवर्द । वृक्षः=द्रुम । सि० कौ० पृ० ४०० सू० ९२ । (१३) (सोपध) अदन्तः पुसि । वत्स =सक्तत्करि । वायस =काक । महानस =पाकस्थानम् । सि० कौ० पृ० ४०१ सू० ९५ । (१४) (नान्त)॥ नान्त पुसि । राजा=नृप । तक्षा=वर्द्धकि । सि० कौ० पृ० ३९९ सू० ४८ (१५) ('उकारान्तः') ॥ अय पुसि स्यात् । प्रभुः ईश्वर, स्वामी वा । इक्षुः=मधुतृणम्, गुडतृणम् । सि०

इमन्प्रत्ययान्ता --पृथोर्भाव =प्रथिमा । मृदोर्भाव =म्रदिमा । महत कर्म भावो वा= महिमा । चण्डस्य कर्म भावो वाचण्डिमा । दृढस्य भाव =द्रढिमा, इत्यादय: । अल्[16] (अच्[17]) (अच्) प्रत्ययान्ता --कर-गर-लव-प्लव-स्तव-नय-प्रभव-नियम-चय-जयादय । कि (इक्) प्रत्ययान्ता -पनिप्रभृतय । ति (श्ति) प् प्रत्ययान्ता पचति-भवति-गदति-गच्छति-करोत्यादय । नप्रत्ययान्ता स्वप्न-यत्नादय । मतान्तरे स्वप्नस्तु नन्[1]प्रत्ययान्त । नङ्[2] (ञ्) प्रत्ययान्ता प्रश्न-विश्न-यत्न-यज्ञादय । घप्र[3]त्ययान्ता दन्तच्छद-निगम-प्रच्छदो-रुच्छदादय । घञ्[4]प्रत्ययान्ता पाद-रोग-राग-पाक-स्पर्शौ-क प्रासाद[5]-प्रास[6]-ऽऽम्नाय-वेद[7]-प्रपा[8]त-प्रस्तार-लोभ-त्याग-दाय-वेश-धाय-भाव-माघादय । दा (घु) सञ्ज्ञकाद्विहितकिप्र[9]त्ययान्ता आधि-व्याधि-शरधि-विधि-निधि-प्रधि-जलध्यु-दध्यादय । भावार्थक-खप्रत्ययान्ता आशित भवा-दय । कर्त्तृभिन्नार्थक-(घञर्थक) कप्रत्ययान्ता आखू[10]त्थ-प्रस्थ शलभोत्थ-विघ्नप्रभृतय. ।' इति ॥

इह किञ्चिद्विशेषमाहामर—(अम० लि० पृ० ४५३ श्लो० १४, १५)

"क-ष-ण-भ-म-रोपान्ता यद्यदन्ता अमी अथ ।
प-थ-न-य-स-टोपान्ता गोत्राख्या-श्चरणाह्वया: ॥
नाम्न्य-कर्त्तरि, भावे च घञ-ज-ब्-नङ्-ण-घा-थुच: ।
ल्यु: कर्त्तरी,-मनिज्भावे, को, घो कि: प्रादितोऽन्यत: ॥" इति ॥

अनयोर्व्याख्या—

कषणेति । ककारादिषड्वर्णोपधा अमी एते अबाधिता यदि चेददन्ता अकारान्तास्तर्हि

---

कौ० पृ० ३९९ । सू० ५१ । "हनुर्हट्टविलासिन्या नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे—" इति मेदिनी । "करेणुरिभ्या स्त्री नेभे" इत्यमर । एवं जातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः । उक्तं च । "लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः" इति । एवमन्यत्रापि । (१६) (घञबन्तः)॥ करः=हस्त । गरः=विषम् । सि० कौ० पृ० ३९८ सू० ३६ । (१७) (घाजन्तश्च) चय =समूह । जयः=विजयः। सि०कौ०पृ०३९८सू० ३७ ।

(१) पाणिनीयेऽपि । (स्वपोनन्)॥ स्वप्नः=निद्रा । (सि० कौ० पृ० ३३६ पं० १) (२) (नङन्तः) ॥ नङ्प्रत्ययान्त पुंसि स्यात् । यज्ञः=यागः । यत्नः=प्रयत्नः । उद्योगश्च । (सि० कौ० पृ० ३९८ सू० ३९ । (३) (घान्तः) ॥ विस्तरः=विस्तारः । गोचरः=इन्द्रियार्थः । सि० कौ० पृ० )॥ (४) (घञन्तः)। पाकः =परिणतिः। त्यागः=दानम् । (५) प्रासादः=प्रसीदन्त्यस्मिन्मनांसि । (६) प्रास =प्रास्यते इति । (७) वेदः =विदन्त्यनेन । (८)प्रपात =प्रपतत्यस्मात् । (९) (क्यन्तो घुः) ॥ किप्रत्ययान्तो घु पुंसि स्यात् । आधिः=मन पीड़ा । निधि =सेशेवधि । उदधि.=समुद्र. । क्यन्त किम् । दानम् । घु किम् । जक्षि —बीजम् । सि० कौ० पृ० ३९८ सू० ४१ । (६) (कप्रत्ययान्त )॥ (१०) आखूत्थ.=आखूनामुत्थानम् । सि० कौ० पृ०२८९ प० २९

नरि भवन्ति। एषामुदाहरणानि प्रागेवोक्तानि पश्येति। पकारादिवर्णषट्कोपधा यद्यबाधितास्तदा पुंसि स्युः। नोपधा फेन–ब्रध्ना–पघनें–न–भानु–जनादय। शेषवर्णाना-मुदाहरणानि प्रागुक्तानि मकुटस्तु प कारादिवर्णषट्कोपान्तेषु अदन्ता अकारान्ता' इति न सम्ब-ध्यते, अथादित्वात् –इत्याह। गोमायु–जायु–पाय्वादीनुदाहरति च। गोत्रेति। गोत्र वशस्तस्मि-न्नाख्या सञ्ज्ञा येषां ते गोत्राख्या ऋषिसञ्ज्ञका गोत्रस्य प्रथमपुरुषा ये प्रवराध्यायोक्ता येऽपीतरे अपत्यप्रत्यय विहाय गोत्रवाचित्वेन लोके प्रसिद्धास्ते नरि भवन्ति। यथा। भरद्वाज गोत्रमस्मा-कम्। एव गौतम–वशिष्ठ–कश्यप–वत्सा–त्रिप्रभृतय। क्षीरस्वामी तु 'अपत्यप्रत्ययान्ता' इति व्याख्यत्। तन्न। 'अपत्यप्रत्ययान्त' इत्यनेन द्विरुक्तिप्रसङ्गात्। चरणेति। चरणाना श्रुति-शाखाना आह्वया अभिधानानि नरि भवन्ति। यथा। कलाप कठ, बह्वृच इत्यादि। नाम्नीति। णप्रत्ययो यथा। न्यादनम्=न्याद, आहार। अवश्याय=नीहार। ल्युरिति। कर्त्तरि नन्द्या-दिभ्यो विहितोल्यु पुंसि स्यात्। नन्दयतीति नन्दन=पुत्र। इन्द्रोद्यानम्। सुखदायक। रमते इति रमण=पति। कामदेव। मधु सूदयतीति मधुसूदन=विष्णु। सञ्ज्ञायामिदम्। असञ्ज्ञाया तु 'कृतः कर्त्तर्य्यसञ्ज्ञायाम्' इति सिद्धम्। यस्तु औणादिक कर्त्तरि व्युत्पद्यतेऽभियुक्तै (स्वामिमुकुटादिभि) स्तस्य वाच्य (अभिधेय) लिङ्गतैव—भरिमा=पृथ्वी। वरिमा= तपस्वी। स्तरिमा=शय्या। इहान्यत्सर्वं प्राग्वज्ज्ञेयम्।

दुर्गोऽपि किञ्चिद्विशेषमाह—(दु० लि० पृ० १९ श्लो० ३८, ३९)

"... ... ... ... ... ... ... किना दाश्च।
भावे को णो ऽथुरलो घघञावुक्तौ सहेम्ना नञ्॥
प्राग्वंश क–ष–ण–भ–म–र–प–थ–स–ट–न–योपधक-
वोपधमदन्तम्। क्षत्रियवचनो नाभिश्चेत्पुंलिङ्गा इति समाप्ता॥" इति।

अनयोर्व्याख्या—

किन्नेति। किना किप्रत्ययेन युक्तो घुसञ्ज्ञक (दा) (च) भावेऽर्थे कप्रत्ययः (च) णप्रत्ययश्च अथुप्रत्ययश्च अलप्रत्ययेन सह नृलिङ्गा भवन्ति। घप्रत्ययघञ्प्रत्ययौ च इमन् प्रत्ययेन सह नञ् प्रत्ययश्चैतेऽपि नृलिङ्गा भवन्ति। एषामुदाहरणानि प्रागेवोक्तानि। प्राग्वश इति। प्राग्वशश्च कादिद्वादशवर्णोपधकश्च वोपधश्चेति समाहारो द्वन्द्व। अत् अन्तो यस्य तद् अद-न्तम्। प्राग्वशशब्द (च) ककारादिद्वादशवर्णोपध च शब्दरूप क्षत्रियवचनो नाभिश्च यदि भवति तदैते नृलिङ्गाः स्युः। प्राग्वश=यज्ञगृहम्।

तथा च प्रयोग —

"पत्यु प्राग्वंशवासिन" इति काव्ये (दु० लि० टिप्पण्यां पृ० १९ प० २७)

वोपधा उद्याव—वासवादय । परन्त्वयमपाणिनीय । नाभि =क्षत्रिय । प्राण्यङ्गं तु नाभिरियम् । इदन्तत्वात् । अन्यत्सर्वं पूर्ववज्ज्ञेयम् ।

तथा च यादव —(वै० पृ० १३ श्लो० ९ त १४ या०) ।

"अदन्ता. पुंस्यु–पान्ता–श्चे–त्क–णौ भ–र–म–टा–स्त–थौ ।
ष–सौ च सान्ता ये च स्यु–रुदन्ताः प्राशयो नरः ।

अदन्ता इति । पाठोऽयमपाणिनीय । अत्र पाठान्तरम्—(मत्कृतमिदम्)

अदन्ताः पुंस्यु–पान्ता–श्चे–त्क–णौ भ–र–म–टाः प–थौ ।
ष–सौ न–यौ सान्ता य उदन्ता. प्रायशो नरः ॥

अस्य व्याख्या—

अदन्ता इति । अदन्ता ककारादिद्वादशवर्णा उपान्ताश्चेत्तर्हि पुंसि पुलिङ्गे स्यु । ककारादीनामुपधास्तु प्राग्वद् बोध्या । ये सान्ता सकारान्ता उदन्ता उकारान्ता. शब्दाश्च ते सर्वे प्रायशो बहुधा नर पुमास पुलिङ्गवाचका इत्यर्थ यथा। सान्ता कस–मास–दास–चास-प्रभृतय । उदन्ता शम्भु-भानु-विधु-धातुप्रभृतयः।

इदन्तेष्व–रति–र्वर्मि–र्वर्णि–र्वाहि–र्ग्रहिः प्रहिः ।
स्तम्भिः कपि. सनी रालि–रर्दनि–र्वमतिर्नर. ॥

अस्य व्याख्या—

इदन्तेष्विति । इदन्तेषु इकारान्तेषु अरत्यादयो द्वादशशब्दा नर पुमांसः स्युः पुलिङ्ग-वाचका इत्यर्थ । अरति =क्रुद् । वर्मि =मत्स्यविशेष । वर्णि =वलि । वाहि = । ग्रहि = । प्रहि.=कूप । स्तम्भि =(भि ) समुद्र । कपि =वानर । सनि = दानम् । पूजा च । रालि =युद्धम् । अर्दनि = अग्नि । वमति =वान्ति ।

अङ्याबन्ताश्च वृक्षार्थाः प्रायो रोहित्तरत्तथा ।
शैलनामाह्वयाः सर्वे गोत्राख्याश्चरणाह्वयाः ॥

अस्य व्याख्या—

अङ्चेति। ङीबन्ताश्च आबन्ताश्च ते ङ्यावन्ता न ङ्याबन्ता अङ्याबन्ता । ङ्याबन्तवर्जिता इत्यर्थ । ङ्याबन्तरहिता वृक्षार्था वृक्षार्थवाचका ये शब्दा ते प्रायो बहुधा पुलिङ्गा भवन्ति।

यथा। तरु-शाखि-पादपप्रभृतय । रोहित्-तरत्, शैलनामाह्वया, गोत्राख्या, चरणाह्वयाश्च एते सर्वे पुमांसो भवन्ति । रोहित्=हरिणविशेष । तरत्=कारण्डपक्षी। शैलनामाह्वया =पर्वत-सञ्ज्ञकाः । यथा । अद्रि-गिरि-अग-नगप्रभृतय । गोत्रचरणाख्यशब्दा प्रागुक्तवद् बोध्याः ।

कन्यन्ता राजतक्षाद्या, ऋदोरपि करादयः, ।
इकश्तिपोः शासिशास्त्याद्याः, स्युरेरचि जयादयः, ॥
अवश्यायादयो णान्ता, घान्ता दन्तच्छदादयः, ।
प्रध्याद्याः प्रादितो घोः कौ स्यु,-र्वेमथ्वादयोऽथुचि, ॥
प्रश्नाद्या नङि, पाकाद्या घञि, ल्यौ नन्दनादयः, ।
प्रथिमाद्या इमनिचि, कुणप् पीलुकुणादयः ॥" इति ।

एषाँ व्याख्या—

कन्यन्ता इति । कन्यन्ता कनिप्रत्ययान्ता राजा=नरेन्द्र (नृप) । तक्षा=वर्द्धकिः (त्वष्टा) । सुपर्वा=देवता इत्याद्या । ऋद ऋकारान्तात् अपि अप्प्रत्यये कर =हस्त (पाणि) इत्यादय । इजन्ता इक्प्रत्ययान्ता शासि = । श्तिबन्ता श्तिप्प्रत्ययान्ता शास्ति = शासनम् । दण्डश्च । इत्यादय । कुणबन्ता कुणप्प्रत्ययान्ता. पीलुकुण=पीलूना पाक । तस्य पाकमूल -इत्यादिना कुणप्प्रत्यय । खदिरकुण =खदिराणा पाक । इत्यादय.। शेष प्राग्वत् ।

अमरोऽप्यन्यान् पुलिङ्गवाचकाञ्छ्रीवेष्टादिशब्दानाह—(अम० लि० पृ० ४५३ श्लो० १३, १४)

"श्रीवेष्टाद्याश्च निर्यासा असनन्ता अबाधिताः ।
कशेरु-जतु-वस्तूनि हित्वा तु-रु विरामकाः ॥

अस्य व्याख्या—

श्रीति । श्रीवेष्टादयो ये निर्यासास्तरुद्रवास्ते नरि भवन्ति । श्रीवेष्ट (श्रीपिष्ट), सरल, द्रव, श्रीवास, वृकधूप, गुग्गुलु, सिह्लक इत्यादय । अबाधिता असन्ता अन्नन्ताश्च नरि भवन्ति । उदाहरण तु प्राग्वत् । अबाधिता इति किम् । इद=अवस्था । जलौकस =जन्तु-विशेष । अप्सरस.=स्वर्वेश्या । सुमनस.=देवा । इद लोम=रोम । साम=वेदविशेष । वर्म=कवचम् । कशेर्विति । कशेरु-जतु-वस्तूनि हित्वाऽपहाय तुरुविरामका. तुशब्दान्ताश्च

पाणिनीयेऽपि—(१) (रुलन्त) ॥ मेरु.=हेमाद्रि । सेतु =जलबन्ध सञ्चर । (सि० कौ० पृ० ३९९ सू० ५६)

रुशब्दान्ताश्च पुंसि स्युः । यथा हेतुः=कारणम् । सेतुः=जलबन्धः, सञ्चर । "पुल" इति भाषायाम् । धातुः=शब्दयोनिः । भ्वेधादिः । मन्तुः=अपराधः । तन्तुः=सूत्रम् । इत्यादयः । कुरुः=देशविशेषः । चन्द्रवंशीयराजविशेषो वा । मेरुः=सुरालयः । किशारुः=धान्याग्रभागः । त्सरुः=खड्गादिमुष्टिः । इत्यादि । कशेर्वाद्युपलक्षणं दारुश्मश्रुप्रभृतीनाम् । तत्र कशेरुः=अस्थि-विशेषः । तृणविशेषो वा । जतु=लाक्षा । वस्तु=द्रव्यम् पदार्थश्च ।

द्वन्द्वेऽश्ववडवावश्ववडवानसमाहृते ।

कान्तः सूर्य्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि च ॥" इति ॥

अस्य व्याख्या—

द्वन्द्व इति । असमाहृते समाहाररहिते द्वन्द्वे द्वन्द्वसमासेऽश्ववडवौ नरि । अश्वश्च वडवा च अश्ववडवौ । एवमश्ववडवान् । अश्ववडवैरित्यादिप्रयोगः । असमाहारे किम् । अश्ववडव-मिति क्लीबम् । कान्त इति । यदि कान्तशब्दो रविचन्द्रपर्यायपूर्वकस्तर्हि नरि स्यात् । यथा—सूर्यकान्त, अर्ककान्तः । चन्द्रकान्त, इन्दुकान्त, सोमकान्तः । यदि कान्तोऽयोवाचकपूर्वक-स्तदापि नरि । अयस्कान्त, लोहकान्तः ।

तथा च हेम—(अ० स० लिं० पृ० १ श्लो० ६)

"कान्तश्चन्द्रार्कनामाऽयः परो यानार्थतो युगः ।

यश्च स्यादसमाहारे द्वन्द्वोऽश्ववडवाविति ॥२॥" इति ।

अस्य व्याख्या—

कान्त इति । अत्र चन्द्रकान्तादयः प्राग्वत् । यानार्थतः परश्चेद्युगशब्दः स्यात्तर्हि पुंलिङ्गे भवति । यथा—यानयुगः=रथहलप्रभृत्यङ्गम् । "जुआ" इति भाषायाम् । अश्वश्च वडवा च । 'पूर्ववदश्ववडवौ' इति परवल्लिङ्गतापवादः । यादवस्तु किञ्चिद्विशेषमाह—(वै० पृ० २९३ श्लो० ५१)

द्वन्द्वस्तत्पुरुषोऽप्यन्त्यलिङ्गोऽश्ववडवौ नरि ।

तथैवोक्षवशौ" इति ॥

अस्य व्याख्या—

द्वन्द्व इति । द्वन्द्वस्तत्पुरुषोऽप्यन्त्यलिङ्गो ('परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' सू० २।४।२६) अश्ववडवौ तु नरि पुंसि । तथैवोक्षवशौ । उक्षा च वशा चोक्षवशौ । उक्षा=बलीवर्दः । वशा=वन्ध्यगौः ।

अथेदानीमन्यान् सभेदान् हस्तादीन् पुलिङ्गवाचकशब्दानाह हेमचन्द्रः—(अभि० सं० लिं० पृ० १ श्लो० २, ३)

हस्त[1]–स्तनौ–ष्ठ–नख–दन्त–कपोल–गुल्फ–
केशा–ऽध्व–गुच्छ–दिवस[2]–र्त्तु–पतद्ग्रहाणाम् ।
निर्यास–नाक–रस–कण्ठ–कुठार–कोष्ठ–
हैमा–ऽरि–वर्ष–विष–बोल–रथा–ऽशनीनाम् ॥३॥
श्वेत–प्लवाऽऽत्म–गुरुजा–ऽसि–कफा–ऽभ्र–पङ्क–
मन्थ–त्विषां जलधि–शेवधि–देहभाजाम् ।
मान[3]–द्रुमा–ऽद्रि–विषया–ऽऽशुग–शोण–मास–
धान्या–ऽध्वरा–ऽग्नि–मरुतां[4] सभिदां तु नाम ॥४॥

अनयोर्व्याख्या—

हस्तेति । श्वेतेति च । सभेदानां हस्तादीनां निर्यासादीना श्वेतादीना जलध्यादीना मानादीना च नाम पर्य्याय पुलिङ्ग स्यादित्यन्वय । तत्र हस्तः=पाणि, शय इत्यादय । करिकर । सप्रकोष्ठकरश्च । स्तनः=कुच, पयोधर· । ओष्ठः=दन्तच्छद·, अधर· । नखः=कररुह:, करज·, पुनर्भव । 'नखरोऽस्त्रियाम्' इति बाध .। दन्तः=दशन, रद, रदन । दन्तभेद.=जम्भः । कपोलः=गण्ड, करट । गुल्फ—घुट (नि) स्तोद, पादग्रन्थि । केशः—कच, मूर्धजः । अध्वा—मार्ग·, पन्था. । गुच्छः—हारभेद । 'स्याद् गुच्छ स्तवके स्तम्बे हारभेदकलापयोः ।' इति मेदिनीकोशो नानार्थशब्दकोशोऽपरपर्याय (पृ० २९ श्लो० ३ । ) दिवस—घस्र', वासरः । 'दिनाहनी वा तु क्लीबे दिवसवासरौ ।' इति बाध· । ऋतुः=हेमन्तादय । 'ऋतुर्वर्षादिषट्सु च । आर्तवे भासि च पुमान्' इति (मेदिनी पृ० ५४ श्लो० ६) पतद्ग्रह =सनिष्ठीवताम्बुलादिचवर्णनिक्षेपपात्रम्, निष्ठीवनपात्रम् । "पीकदानी" इति भाषायाम् । निर्यासोऽय प्राग्वत् । नाकः=स्वर्ग·, त्रिदिव इत्यादि । द्योदिवौ द्वे स्त्रिया, क्लीबे त्रिविष्टपमिति बाधकं बलवत्तर, तद्भिना पुस्त्वम् । रसनाम रसा श्रृङ्गारादयस्तन्नाम । 'रसो गन्धरसे जले । श्रृङ्गारादौ विषे वीर्य्ये तिक्तादौ द्रवरागयो. ।' इति–(मेदिनी पृ० १७० श्लो० ९) । कण्ठः=गल । 'कण्ठो

---

पाणिनीयेऽपि— (१) (हस्तकुन्तान्तव्रातवातदूतधूर्त्तसूतचूतमुहूर्त्ताः) ॥ एते पुसि । हस्त =पाणिः । कुन्तः=प्रासः, भल्लः । अन्तः=नाशः । व्रातः=सघ । वातः=वायुः । दूतः=सन्देशहरः । धूर्त्तः=धूस्तूरः । सूत =सारथि । चूत =आम्र । मुहूर्त्त.=द्वादशक्षणात्मक. काल । अमरस्तु "मुहूर्त्तो द्वादशाऽस्त्रियाम्" इत्याह । सि० कौ० पृ० ४०१ सू० ११० । (२) (रश्मिदिवसाभिधानानि) ॥ एतानि पुसि स्यु । रश्मि =किरण । दिवस.=घस्र इत्यादि । सि० कौ० पृ० ४०१ सू० ९९ । (३) (मानाभिधानानि) ॥ एतानि पुंसि स्यु । कुडव =धान्यमानभेद., मुष्टिचतुष्टयम् । प्रस्थ = चतुष्कुडवरूपो धान्यमानभेद । सि० कौ० पृ० ४०१ सू० १०२ । (४) (मरुद्गरत्तरदृत्विज·) ॥ एते पुंसि स्यु । मरुत्=देव· । गरुत =पक्ष । तरद् =कारण्डवपक्षी । ऋत्विक्=याजक. । सि० कौ० पृ० ४०१ सू० १०७ ।

ध्वनौ सन्निधाने ग्रीवाया मदनद्रुमे ॥' इति-(अनेकार्थसंग्रहे पृ० १० श्लो० १०४) । **कुठारः** = परशुः । 'कुठारः परशौ मत ।' इति (शब्दरत्नसमन्वये राजकोशेत्यपरपर्याये पृ०२६८प०१) कोष्ठ =कुसूल । 'कोष्ठ कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च ।' इति-(मे० पृ० ३९ श्लो० ४) । हैम = काण्डतिक्त । 'किराततिक्तौ हैमश्च काण्डतिक्त किरातक ।' इति (अभि० स० लि० टिप्पण्या पृ० १ प० २२)। अरि = शत्रु, अराति । भेदा = आततायायादि । वर्ष. = द्वादशमासात्मक काल, सॅव्वत्सर, वत्सर, अब्द । जम्बुद्वीप । जम्बुद्वीपाशभेदश्च । भेदा — ऋतु, मास, पक्ष । दिनतिथ्यादौ बाध । **विषः** = क्ष्वेड, गर । 'विष जलेऽतिविषाया स्त्रिया क्ष्वेडे तु न स्त्रियाम् ।' इति-- (मे० पृ० १६७ श्लो० २५) । अमरस्तु क्ष्वेडभेदानेव पुस्याह-क्ष्वेडभेदा इति। क्ष्वेडभेदा विषभेदा विषविशेषा पुस्त्वे स्यु । सौराष्ट्रिक, शौक्लिकेय, ब्रह्मपुत्र । अत्र गरल विष पुसि क्लीबे च काकोल इत्यादि बाधितम् । बोल = गन्धरस । 'बोलगन्धरसप्राणपिण्डगोपरसा समा ।' इति- (अम० पृ० ३३६ श्लो० १०४) । रथ = स्यन्दन । 'रथ पुमानवयवे स्यन्दने वेतसेऽपि च ।' इति- (मे० पृ० ७२ श्लो० १२) अशनि = वज्रम् । श्वेत = कपर्दस्तन्नाम । प्लव = कपि, भेक, भेलश्च । 'प्लव प्लक्षे प्लुतौ भेके चण्डाले कुलके कपौ । क्रमनिम्नमहीभागे भेलके जलवायसे ॥' इति-(अनेकार्थतिलके पृ० २२ श्लो० १७९) । आत्मा = जीव, अन्तर्भोक्ता । शरीरमित्यादय. । गुरुज = कच । अश्वत्थामा च । 'कच शुष्कव्रणे बन्धे केशे व्रणेऽपि च । कुष्ठे गुरो. सुते' इति-(नानार्थमञ्जर्या पृ० १८ प० १७) । असिः = खड्गः । मण्डलाग्रः । भेदा.— नन्दक, चन्द्रहास । 'कटित्रम्' इत्यादिश्च बाध. । कफ = श्लेष्मा । अभ्रः = मेघ. । अमरस्त्वभ्रशब्द क्लीबमाह--'अभ्र मेघो वारिवाह' इति । घन, जलद इत्यादय पुसि। भेदा.— पुष्करावर्तकादय. । अभ्रस्य तु अभ्रं मेघ इति क्लीबपाठो बाधक । मूलपाठे तु 'कफाब्द' इति सुपाठ । पङ्कः = कर्दमः, निषद्वर त्यादयः । 'पङ्कोऽस्त्री कर्दमे पापे' इति—(मे० पृ० ३ श्लो० २९) । मन्थ = मन्थान, साक्तव, दिवाकरश्च । 'मन्थौ साक्तवमन्थानौ' इति-- (नानार्थरत्नमालाया पृ० ३२ प० ५) । त्विट् = व्यवसाय. । 'त्विट् शोभायां जिगीषाया व्यवसाये रुचौ गिरि ।' इति--(अ० स० पृ० २ श्लो० १७) । जलधि = समुद्र, सागरः, अब्धि । भेदाः--क्षीरोद, लवणोद । शेवधि = निधि । भेदा.--पद्मशंखादय. । देहभाक् = जन्तु, जीव, प्राणी । भेदा —मर्त्य, हस्ती, महिष., गौरित्यादय । मान = प्रस्थादय. । द्रुम = वृक्ष, शाखी । भेदा --प्लक्ष, वट, आम्र इत्यादय । अत्रापि क्वचिद्रूपभेदादिना "पाटलाशिशिपादौ" अपवाद (बाध) उक्त । अद्रि = पर्वतः, गिरिरित्यादय । भेदा.--मेरु, हिमवान्, सह्य । 'गन्धमादनम्' अपवाद । विषय. = जनपद, देश, गोचरश्च । 'विषयो गोचरे देशे तथा जनपदेऽपि च ।' इति—(मे० पृ० १२० श्लो० १०६) । आशुग = बाण, सायक., शर, विशिख इत्यादय. । भेदाः—नाराच, काण्ड, भल्ल । 'इषुर्द्वयो.' अपवादः । शोण = नदविशेषः । भेदा.- सिन्धु, भैरव, दामोदर., ब्रह्मपुत्र इत्यादय. । मास. = पक्षद्वयात्मक. काल. । भेदा.--पक्ष.,

घस् । धान्यम्=व्रीहि । भेदा.—शालि, कलम, सुगन्धिक, षष्टिक, नीवार, तिल, माष, श्यामाक, मुद्ग, मसूर इत्यादय । विषभेदवद् धान्यभेदा अपि पुंसि स्यु । धान्यशब्दस्तु नपुंसकलिङ्गवाचक । अध्वर =यज्ञ, याग, मख, क्रतु । तद्भेदा —उष्णा–तिरात्रा–ग्निष्टोमा–श्वमेधा । इष्ट्यादेर्बाधितत्त्व वक्ष्यति । अग्नि.=वह्नि, कृशानु, पावक, अनल इत्यादय । 'अपित्तम्' अपवाद । तद्भेदा —गार्हपत्य, आहवनीय, दक्षिणाग्निरित्यादय । मरुत्=देव, सुर, अमर, निर्जर इत्यादय । 'दैवतानि' 'देवता' इत्यपवाद । तद्भेदा –तुषिता, साध्या, आभास्वरा इन्द्र, शक्र, मरुत्वान्, मघवा। सूर, सूर्य, अर्य्यमा, आदित्य । देवानुचरा –हाहा, हूहू, तुम्बरु, नारद, मातलि । विष्णोरनुचरा —जय–विजयप्रभृतय । रुद्रानुचरा –नन्दिकेश्वरादय ।

तथा चामर–(अ० ना० पृ० ४५३ श्लो० ११, १२)

"पुंस्त्वे सभेदानुचराः सपर्य्यायाः सुरासुराः ।
स्वर्ग–यागा–ऽद्रि–मेघाऽब्धि–द्रु–काला–ऽसि–शरा–ऽरयः ॥
कर–गण्डो–ष्ठ–दो–र्दन्त–कण्ठ–केश–नख–स्तनाः ॥" इति ॥

अस्य व्याख्या—

पुंस्त्व इति । करेति च । भेदास्तुषितसाध्यादय. । अनुचरा: सुनन्दादय तै सहिता सुरासुराः देवदैत्या. पर्यायै सह पुंसि । असुरा =दैत्या, दानवा, दैतेया इत्यादय । तद्भेदा — बलि, नमुचि, जम्भ इत्यादय. । तदनुचरा —कूष्माण्ड, मुण्ड, कुम्भाण्ड इत्यादय । स्वर्गादय एकोनविंशतिः सभेदा सपर्यायाश्च नरि भवन्ति । कर.=राजग्राह्यो भाग । 'करो वर्षोपले पाणौ शुण्डायां किरणे बलौ ।' इति—(ना० र० पृ० ४५ प० १९), रश्मि, पाणिश्च । मरीच्यादीनां तु बाधः । गण्ड =कट. । खड्गी च । दो =प्रवेष्ट । भुजादे 'द्वयो' इति बाध । अन्यत्सर्वं प्रागुक्तवत् ।

दुर्गसिंहोऽपि—(दु० लि० पृ० १७ श्लो० ३६, ३७, ३८)

"स्वर्ग–दिन–मान–संवत्सर–नर–यज्ञ–कुच–केश–मास–र्त्तु ।
अरि–गिरि–जलद–जलधि–विष–सुर–ऽसुरा–ऽस्या–ऽऽत्म–भुज-भुजङ्गा ॥

---

फणिनीयेऽपि— (१) (देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि) ॥ एतानि पुंसि स्यु । देवा =सुरा । असुरा =दैत्याः । आत्मा=क्षेत्रज्ञ । स्वर्ग =नाक । गिरि =पर्वत । समुद्र =अब्धि । नख =कररुह । केश =शिरोरुह । दन्त =दशन । स्तन =कुच । भुज =दो । कण्ठ = गल । खड्गः=करवाल । शर =मार्गण । पङ्कः=कर्दम —इत्यादिः । (सि० कौ० पृ० ३९९ सू० ४३ ।)

पाणिनीयेऽपि—(२) (ऋतुपुरुषकपोलगुल्फमेघाभिधाभिधानानि) ॥ एतानि पुंसिस्यु । ऋतुः= अध्वर । पुरुषः=नर । कपोल =गण्ड । गुल्फ =प्रपद । मेघ =नीरद —इत्यादिः । (सि० कौ० पृ० ३९९ सू० ४९) ।

शर–नखर–कपोलक–दन्त–पङ्क–गुल्फौ–ष्ठ–कण्ठ–रश्म्य–निलाः।
एषां सञ्ज्ञा धान्यान्युक्तो नाडीव्रणः पण्डः …… ॥
असवो दारा लाजा बह्वर्था बल्वजाः … ।" इति।

अनयो सार्द्धद्वयपद्ययोर्व्याख्या—

स्वर्गेति। शरेति। असव इति च। एषा स्वर्गादीना पर्याया सभेदाः सानुचरा धान्यानि व्रीहयश्च नाडीव्रण पण्डश्चैते नरि स्यु। नरं = मर्त्य, मानव, मनुष्य, मानुष इत्यादय। भुजङ्ग = सर्प, पन्नग, फणी, अहिरित्यादय। रश्मि = किरण, उस्र, मयूख इत्यादय। 'मरीचि' 'दीधिति'श्चेति बाध। अनिल = वायु, वात, पवन इत्यादय। नाडीव्रण = व्रणविशेष पुन्नपसकत्वाद् व्रणस्य वचनम्। पण्ड = नपुसकम्। अस्वादयो नृलिङ्गा बहुवचनान्ता नित्य स्यु। असव = प्राणा। दारा = भार्या। मतान्तरे तु टाबन्तोऽव्यय शब्द। 'क्रोडा हारा तथा दारा त्रय एते यथाक्रमम्। क्रोडे हारे च दारेषु शब्दा प्रोक्ता मनीषिभि ॥' इति व्याडिशुभाङ्कौ—इति विष्णुदत्त। (अमरस्य नामचन्द्रिकाख्याया व्याख्यायाँ पृ० ११२ प० १३)। लाजा = भृष्टधान्यविशेष। बल्वजा = तृणविशेष.। अङ्गा, वङ्गा, कलिङ्गा इत्यादयस्तु लोकत एव सिद्धा। अन्यत्प्राग्वत्।

अथेदानी पूर्वाह्णादिशब्दाना पुलिङ्गतामाहामर—(अम० ना० लि० पृ० ४५३ श्लो० १२)।

"अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ॥" इति।

अस्य व्याख्या—

अह्नेति। अह्नश्च अहश्च अन्ते एषा ते नरि भवन्ति। परवल्लिङ्गापवादोऽयम्। अह्न पूर्वम्—पूर्वाह्णः। अह्न अपरम्—अपराह्णः। अह्न मध्यम्—मध्याह्न। एव पराह्ण, सायाह्न, अत्यह्न, सर्वाह्ण, सख्याताह्न इत्यादय.। द्वे अहनी समाहृते द्वचह। त्रीणि अहानि समाहृतानि त्र्यहः। अथवा द्वयोरह्नो. समाहारो द्व्य। त्रयाणामह्ना समाहारो त्र्यह। एवमेकाह, सप्ताह, उत्तमाह, परमाह, सख्याताह इत्यादय। अत्र स नपुसकम्' इत्यस्यापवाद। क्ष्वेडभेदास्तु प्राग्वद् बोध्या रात्रान्ता इति। समासान्तस्यैकदेशानुकरणम्। एवमुत्तरत्रापि। रात्रोऽन्तो येषा ते चेत्प्राक् असख्यावाचकशब्दवर्जितास्तदा नरि भवन्ति। परवल्लिङ्गताऽपवादोऽयम्। अहश्च रात्रिश्च अहोरात्र। एव सर्वरात्र, पूर्वरात्र, अपरराात्र, मध्यरात्र, अर्द्धरात्र, चिररात्र, पुण्यरात्र, दीर्घरात्र, वर्षरात्र, सख्यातरात्र, अतिरात्र, गणरात्र इत्यादय। 'प्रागसंख्यका.' इति किम्। पञ्चानां रात्रीणां समाहारः 'पञ्चरात्रम्'। द्वयो रात्र्यो समाहार 'द्विरात्रम्। एका चासौ रात्रिश्च 'एकरात्रम्'। त्रयाणा रात्रीणां समाहारः 'त्रिरात्रम्'। एवं अहोरात्रम्। द्विरात्रम्। गणरात्रम्। पुण्यरात्रस्यार्धर्चादिपाठात् क्लीबत्वं च।

अथेदानी बर्हादीना शब्दाना पुस्त्वमाह हेम·—(अभि० स० लि० पृ० १ श्लो० ४, ५)

बर्होऽच्छदे,ऽहिर्वप्रे, व्रीह्यग्न्योर्हायनबर्हिषौ, ।
मस्तु सक्तौ, स्फटिकेऽच्छो, नीलमित्रौ मणीनयोः, ॥५॥
कोणेऽस्र,-श्चषके कोश,-स्तल-तालचपेटयोः, ।
अनातोद्ये घनो, भूम्नि दा'र्प्राणासुबल्वजाः, ॥६॥ इति ।

अनयोर्व्याख्या—

बर्ह इति। कोण इति च। अच्छदे बर्ह·, क्रमेण व्रीह्यग्न्यो हायनबर्हिषौ, सक्तौ मस्तु, स्फटिके अच्छ, क्रमेण मणीनयो. नीलमित्रौ, कोणेऽस्र, चषके कोश, तालचपेटयोस्तल·, अनातोद्ये घनश्चैते बर्हादय शब्दा उक्तार्थे पुसि भवन्ति। दारादयस्तु भूम्नि बहुवचन एव नरि स्यु। बर्ह =परिवार, परिजन =पोष्यवर्ग.। मयूरपिच्छ च। 'बर्हस्तु प्रचलाककलापकौ।' इति यादव—(वै० पृ० २९ श्लो० ३९) बर्ह पिच्छे दलेऽस्त्रियाम्। इति मेदिनी च (नानार्थ-शब्दकोशे पृ० १७५ श्लो० ६)। एव वप्रेवप्रार्थे अहि·=सर्पः। व्रीहग्न्यो· व्रीहि =शालिः। अग्निः=वह्नि। तदर्थे क्रमेण हायनबर्हिषौ। तत्र हायन·=व्रीहि·। बर्हि·=अग्नि। सक्तौ भृष्टयवादिचूर्णे मस्तु =दधिभवमण्डम्, दधिजलम्। स्फटिके मणिविशेषे अच्छ.=निर्मलम्। मणीनयो· मणि·=अश्मजाति, रत्नम्। इन·=सूर्य। तदर्थे क्रमेण नीलमित्रौ। तत्र नीलः= निधिप्रभेद। मित्र.=सूर्य। कोणे=गृहैकभागे अस्र। चषके सुरापानपात्रे कोश। तालचपेटयोः ताले=वृक्षविशेषे। चपेटे=विस्तृताङ्गुलिपाणौ। तदर्थे तल। अनातोधे आतोधरहितेऽर्थे घन = मेघ। शेषं प्राग्वत्। स एव इत पर स्वरान्त—व्यञ्जनान्तक्रमेण शब्दानुदाहरिष्यन्ते, तत्र ककारोपान्त्याकारान्ता उदाह्रियन्ते—

"वाकोत्तरा नक्तकरल्लकाङ्काः"। इति

अस्य व्याख्या—

वाकेति। वाको वाकशब्द उत्तरा अन्ते येषा ते नृलिङ्गा भवन्ति। यथा। अनुवाक = शास्त्रम्, अप्रगीतऋग्जातम्। शंयुवाक =शुभान्वितवचनम्, सकल्याणवचनम्। सूक्तवाक.= इद द्यावापृथिवीभद्रमभूदित्यादिको वैदिकमत्र.। मत्रमात्रम्। सुभाषितम्। नक्तक = कपर्दम्, लक्तक इति। रल्लक =कम्बल। अङ्क.=रूपकभेद·। एकादिरेखा। अङ्कचिह्नं चेत्यादयः।

अमरोऽपि—(अम० ना० लि० पृ० ४५४ श्लो० १७)।

---

पाणिनीयेऽपि—(१) (दाराक्षतलाजासूनां बहुत्वं च)॥ दाराः=स्त्री। अक्षता =अखण्डतण्डुला। लाजा.=भृष्टधान्यम्। असव =प्राणा। (सि० कौ० पृ० ४०१ सू० १०५।)

"वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः।" इति

अस्य व्याख्या—

वटक इति। वटकः=पिष्टकभेद, मासपिष्टविकार, 'वरा' इति लोके। अनुवाक = वेदावयवः, ऋग्यजु समूह। कुडङ्गक=वृक्षलतागहनम्। 'कुडङ्गको ना छदि पिटम्' इति बोपालितः—(अम० लिं० सुधाख्याव्याख्यायां पृ० ४५४ प० १२)। 'वृक्ष-लतागृहम्' इति क्षीरस्वामी। 'कुटङ्गक' इति क्वचित्पाठः।

अथेदानी खान्तशब्दानाह हेम—(अभि० स० लि० पृ० १ श्लो० ७)

"न्युङ्खोत्तरा।" इति

न्युङ्खेति। न्युखो न्युखशब्द उत्तरा अन्ते येषा ते पुसि स्यु। उदाहरणं तु कोशान्तरतोऽवगम्यम्।

अमरोऽपि—(अम० ना० लि० पृ० ४५४ श्लो० १७)

"पुङ्खो न्यूङ्खः।" इति

पुङ्ख इति। पुङ्ख=काण्डमूलम्, बाणावयव। न्यूङ्ख=सामवेदे निपातित ओङ्कारः। सम्यङ् मनोज्ञश्च। "न्युखः" इति ह्रस्वोकारोऽपि। 'न्युङ्ख सम्यङ् मनोज्ञे च साम्नः षट्-प्रवणेऽपि च।' इति—(मे० पृ० २० श्लो० २)

अथाधुना गान्तघान्तशब्दानाह हेम—(अभि० स० लि० पृ० १ श्लो० ७, ८)

"... ... ...सङ्ग–तरङ्ग–रङ्गाः।
पराग–पूगौ–सृग–मस्तुलुङ्ग–
कुडङ्ग–कालिङ्ग–तमङ्ग–मङ्गाः ॥७॥" इति

अस्य व्याख्या—

सङ्गेति। सङ्ग=सङ्गम, मेलनम्। तरङ्ग=कल्लोलः। रङ्ग=रागः। नृत्यम्। नृत्यस्थानम्। रणभूमिश्च। पराग=सुमनोरज, सुमनोरेणु। 'पराग कौसुमे (सुमनो) रेणौ धूलिस्नानीयोरपि ॥ गिरिप्रभेदे विख्यातावुपरागे च चन्दने।' इति—(मे० पृ० २४ श्लो० ४०, ४१) पूग=क्रमुकः, सघातश्च। 'पूगस्तु क्रमुके वृन्दे' इति—(मे० पृ० २० श्लो० १०) सृग=भिन्दिपाल। मस्तुलुङ्ग=मस्तकस्य घृताकारस्नेह, मस्तिष्कम्। कुडङ्गः=निकुञ्जः। 'कुडङ्गोऽस्त्री निकुञ्जोऽस्त्री कुञ्जो वृक्षवृतान्तरे।' इति यादव—(वै० पृ० ४१ श्लो० १०)। कालिङ्ग=भूमिकर्कारुः, दन्तावल, सर्पश्च। 'कालिङ्गो भूमिकर्कारौ दन्तावलभुजङ्गयो।' इति—(मे० पृ० २४ श्लो० ३२)। तमङ्गः=इन्द्रकोश। मङ्ग=धर्म्म। नौशिरश्च।

"वेग–समुद्गा–वपाङ्ग–वर्गौ–घा–र्घाः।" इति

अस्य व्याख्या—

वेग = जव । प्रवाहश्च । 'वेगो जवे प्रवाहे च महाकालफलेऽपि च ।' (मे० पृ० २३ श्लो० २४) । समुद्ग = सम्पुटक । अपाङ्ग = नेत्रप्रान्त, चक्षुरन्ता । वर्ग. = समूह । ओघ = समूह । अर्घ = मूल्यम् । पूजाविशेषश्च ।

अमरोऽपि—(अम० ना० लि० पृ० ४५४ श्लो० १७)

"समुद्गश्च ।" इति

अस्य व्याख्या—

समुद्ग इति । समुद्ग इत्यस्य व्याख्या प्रागुक्ता ।

अथ साम्प्रत चान्तादीन् छान्तान्तान् पुलिङ्गवाचकशब्दानाह हेम—(अभि० स० लि० पृ० २ श्लो० ८)

"मञ्च–सपुच्छ–पिच्छ–गुच्छाः ।" इति

अस्य व्याख्या—

मञ्चेति । मञ्च. = काष्ठमयाधारविशेष', पर्य्यङ्क । 'भवेन्मञ्चस्तु पर्य्यङ्के' इति—(शब्दरत्नसमन्वये पृ० ७१ पं० १५) । पुच्छ = पश्चात्प्रदेश । पिच्छ = मयूरकलाप. । गुच्छ = हारभेद. । कलापश्च । 'स्याद्गुच्छस्तवके स्तम्बे हारभेदकलापयो ।' इति—(मे० पृ० २९ श्लो० ३ ।)

अथ सम्प्रति जान्तादीन्नान्तान्तान् पुलिङ्गवाचकशब्दानाह हेम—(अभि० स० लि० पृ० २ श्लो० ८, ९, १०, ११) ।

वाजौ–ज–किलिञ्ज–पुञ्ज[१]–मुञ्जा,
अवट–पट्ट–हठ–प्रकोष्ठ–कोष्ठाः ॥८॥
अङ्गुष्ठ–गण्डौ लगुड–प्रगण्ड–
करण्ड–कूष्माण्ड–गुडाः शिखण्डः ।
वरण्ड–रुण्डौ च पिचण्ड,–नाडी[२]–
व्रणौ गुण–भ्रूण–मलक्त–कुन्तौ ॥९॥
पोतः पिष्टातः पृषत–श्चोत्पात–त्राता–वर्थ–कपर्दौ ।
बुद्बुद–गद–मगदो मकरन्दो जनपद–गन्ध–स्कन्ध–मगाधः ॥१०॥

---

पाणिनीयेऽपि—(१) (ध्वजगजमुञ्जपुञ्जा) ॥ एते पुसि स्यु । ध्वज = शौण्डिक । गज = हस्ती । मुञ्ज = स्थूलदर्भ । पुञ्ज = राशि । सि० कौ० पृ० ४०१ सू० १०९ । (२) (नाड्यपजनोपपदानि व्रणाङ्ग-पदानि) ॥ यथासख्य नाड्युपपदानि व्रणादीनि पुसि स्यु । नाडीव्रण = सदागलद्व्रण । अपाङ्ग = नेत्रान्त । जनपद = देश । सि० कौ० पृ० ४०१ सू० १०६ ।

अर्ध-सुदर्शन-देवन-मल्ला-भिजन-जनाः परिघातन-फेनौ।' इति ।

एषा व्याख्या—

वाजेति। वाजः=वेगः। निस्वनः। पक्षश्च। 'वाजो निस्वनपक्षयोः। वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु।' इति—(मे० पृ० ३० श्लो० १५, १६)। ओज=विषमसंख्या 'ओजे नौज सम पादे' इति भरतादयः इति—(शब्दार्थचिन्तामणौ पृ० ४४२ स्तम्भे २ पङ्क्तौ ४)। किलिञ्ज=कटः, वीरणादिकटः। पुञ्जः=वृन्दम्, धान्याद्युच्छ्रितवृन्दम्, राशिः। मुञ्जः=शरेषिका, तृणविशेषः, स्थूलदर्भः। अवट=गर्तः कूपो वा। पट्ट=काष्ठादिविरचित आसनविशेषः। हठ=योगविशेषः। बलात्कारश्च। प्रकोष्ठः=मणिबन्धकूर्पयोरन्तरम्। यूपकक्षान्तरम्। भुजश्च। कोष्ठ=कुसूलः। आश्रयश्च। अङ्गुष्ठ=अङ्गुलिविशेषः, वृद्धाङ्गुलिः। गण्ड=कपोलः। रोगविशेषः। प्राणिविशेषश्च। प्राणिवचनस्य तु स्त्रीपुंस्त्व चतुष्पदनामत्वात्। लगुड=वंशादिदण्डः। लोहमयप्रहरणं च। प्रगण्ड=कूर्परोपरिकक्षपर्य्यन्तभागः, भुजमध्योपरिभागः। करण्ड=वंशादिकृतभाण्डभेदः। कूष्माण्ड=कर्काहः। गणान्तरम्। भ्रूणान्तरं च। गुड=इक्षुविकारः। शिखण्ड=चूडा, मयूरकलापः। वरण्ड=मुखरोगः। शरादिसंघातविशेषश्च। रुण्ड=कबन्धः। 'रुण्डोऽशिरा कबन्धोऽस्त्री' इति यादवः—(वै० पृ० १२२ श्लो० २१६)। पिचण्ड=उदरम्। पशोरवयवश्च। 'पिचिण्ड' इत्यपि। 'पिचण्ड उदरे पशोरवयवे पुमान्,।' इति—(मे० पृ० ४२ श्लो० ३२)। नाडीव्रणः=सदागलद्व्रणः। पुन्नपुंसकत्वाद् व्रणस्य वचनम्। "नाडीस्रवः" इति "नासूर" इति च लोके। गुणः=धनुषो मौर्वी। रज्जुमात्रम्। ज्ञानविनयादयश्च। 'मौर्व्यां द्रव्याश्रिते सत्त्वशौर्य्यसत्त्वादिके गुणः।' इति—(अम० ना० लिं० पृ० ४०५ श्लोक ४७)। 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागे शौर्य्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु। शुक्लादावपि वटचा च' इति (मे० पृ० ४५ श्लोक १०)। भ्रूणः=स्त्रीगर्भः। नौकारूप यानम्। डिम्भ, बालश्च। 'भ्रूणः स्त्रीगर्भडिम्भयोः।' इति—(मे० पृ० ४६ श्लोक २३)। अलक्त=लाक्षारसः। लाक्षा च। 'यावो द्रुमामयोऽलक्तो लाक्षा रक्ता जतु क्रिमिः॥' इति यादवः—(वै० पृ० १७१ श्लोक १५३)। कुन्तः=आयुधविशेषः, प्रासः। "भाला" इति लोके। 'प्रासस्तु कुन्तः' इति (अम० ना० लिं० पृ० २९५ श्लोक ९३)। पोतः=शिशुः। 'पोतः शिशौ वहित्रे च गृहस्थाने च वाससि' इति—(मे० पृ० ५६ श्लोक ३८)। पिष्टातः=पटवासकः, धूलिगुच्छकः, वस्त्रादिवासनार्थमेकीकृत गन्धद्रव्यचूर्णम्। "अवीर" इति। "बुक्का" इति च लोके। 'पिष्टातो धूलिगुच्छकः' इति पुरुषोत्तमदेवः—(त्रिकाण्डशेषे पृ० २९३ श्लो० ४४)। 'पिष्टातः पटवासकः' इत्यमरश्च—(अम० ना० लिं० पृ० २५० श्लो० १३९)। पृषतः=पृषाकमृगः, चित्रमृगः। 'पृषतश्चन्द्रबिन्दुः स्याद्धरिणात्किञ्चिदल्पकः।' इतिग्रन्थान्तरेपि

इति (शब्दार्थचिन्तामणौ पृ० २०९ स्तम्भे १ पक्तौ ३०)। उत्पात = उपद्रव ,अजन्यम्। 'विदुरजन्यमुत्पातम्' इति पुरुषोत्तमदेव —(हारावल्याम् पृ० ४०६ श्लोक २१०)। व्रात = समूह। अर्थ¹ = धनादि। विषय। अर्थना। कारणम्। वस्तु च। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु। मोक्षकारणयोश्च' इति—(ना० म० पृ० ४० प० २३)। कपर्द = वराटक। शिवस्य जटाजूटश्च। 'कपर्द पार्वतीनाथजटाजूटे वराटके।' इति महीप —(अने० तिल० पृ०४६ श्लो० ८०)। बुद्बूद = जलविकार, जलादिसस्थानविशेष, जलस्फोट ,वर्तुलाकारो जलविकार। "बुलबुला" इति लोके। गर्भस्थावयवविशेष। चार्चिक्यम्, स्थासकश्च। 'स्थासको बुद्बुदो भवेत्।' इति पुरुषोत्तमदेव —(हारावल्या पृ० ४०४ श्लो० १६५)। गद = रोग। कृष्णभ्राता च। 'गदो रोगहरिभ्रात्रो, इति—(नाना० र० पृ० ३३ प० १८)। अगद = औषधम्। मकरन्द = पुष्परस। गणकविशेषश्च। जनपद = देश, नीवृत्। जनश्च। "जानपद" इत्यपि। 'भवेज्जनपदो जानपदोऽपि जनदेशयो.।' इति—(मे० पृ० ७८ श्लो० ४८)। गन्ध = गुणविशेष, आमोद। गन्धकश्च। 'गन्ध प्रतिवेश्यामोदलेशसम्बन्धगन्धके।' इति—(मे० पृ० ७९ श्लोक ५)। स्कन्ध = असदेश। अगाध = अतलस्पर्श। 'अगाधमतलस्पर्शे त्रिषु, क्लीबे त्वय बिले।' इति—(नाना० र० पृ०८७ पक्तौ १७)। अर्ध = असमभाग, खण्ड, भित्तम्। 'अर्द्ध खण्डे बुधैर्दृष्टमर्द्ध मानसमान्यो।' इति—(अने० ति० पृ० ७ श्लो० १७)। सुदर्शन = हरेश्चक्रम्। मेरु। वशश्च। देवन = पाशक। 'देवनोऽक्षेतु पुसि स्यात्' इति—(मे० पृ० ८८ श्लो० ७६)। अह्लादेशान्ता पूर्वाह्णप्रभृतय.। अह्न पूर्वम्—पूर्वाह्ण' इति प्राग्वत्। अभिजन = कुलम्। ख्याति.। जन्मभूमि। कुलध्वजश्च। 'कुले त्वभिजनो जन्मभूमौ च' इति यादव —(वै०पृ० २६६ श्लो० १२)। 'जन्मभूमावभिजनो विख्यातावन्वये च स।' इति च–(नाना० र० मा० पृ० १२० प० ६)। जन = लोक। जगद्भेद:। पृथग्जनश्च। 'जनो लोके जगद्भेदे पृथग्जने।' इति–(अने० तिल० पृ० १७ श्लो०१२०) 'जनो जनपदे प्रोक्त' इति हलायुध –(अभिधानरत्नमालायाम् पृ० श्लो०)। परिघातन = परिघ., लोहबद्धलगुड। लोहबद्धयष्टिश्च। फेन = जलविकार, समुद्रफेन। तरलद्रव्योपर्य्युत्थितबुद्बुदाकारवस्तु। 'झाग" इति लोके। ब्रध्नश्च।

अमरोऽपि—(अम० ना० लि० पृ० ४५४ श्लो० १७, १८, १९)

... . . . विट-पट्ट-घटा: खट: ॥
कोट्टा-ऽरघट्ट:-हट्टाश्च पिण्ड-गोण्ड-पिचण्डवत्।
गडु. करडो लगुडो वरण्डश्च किणो घुण: ॥

---

(१) पाणिनीयेऽपि–(सीरार्थौदना पुंसि) ॥ सीर = हलम्। अर्थ: = द्रव्यम्। ओदन: = अन्नम्। सि० कौ० पृ० ४०२ सू० १३९।

दृति–सीमन्त–हरितो रोमन्थो–द्गीथ–बुद्बुदाः ।
कासमर्दोऽर्बुदः कुंदः फेनः' इति ।

एषा व्याख्या

विटेति । कोट्टेति । दृतीति च । विट =धूर्त । 'विट स्याल्लवणे षिङ्गे मूत्रके खदिरे गिरौ ।'इति—(ना० र० पृ० १९ प० ७) । घट =तुला । 'घटो दिव्ये तुलाया स्याद्, घटी चीरे च वाससि ।' इति—(मे० पृ० ३४ श्लो० १८) । 'परीक्षार्थतुलाया च घट सूरिभिरिष्यते ।' इति—(विश्वप्रकाशे पृ० ३८ श्लोक २६) । खट =अन्धकूपादय । 'खटोऽन्धकूपककयो प्रहारान्तरटङ्कयो ।' इति—मे० पृ० ३४ श्लोक ९) । 'खट. श्लेष्मण्यन्धकूपे प्रहारान्तरटङ्कयो ,।।' इति पुरुषोत्तमदेवश्च—(हा० व० पृ० ४०७ श्लोक २२९) । कोट्ट =दुर्गपुरम् । अरघट्ट =कूपभेद । अरैश्चक्रावयवसदृशै काष्ठविशेषैर्घट्यते रच्यते सोऽरघट्ट । ''राहट'' इति प्रसिद्ध इत्यन्ये । कस्यचिन्मते टकारान्तेष्वपि 'भट्टग्राम' इति न्यायेन रेफान्तोऽपि 'कोट्टार' इति त्र्यक्षरो निबद्धः । 'कोट्टारो नागरे कूपे पुष्करण्याश्च पाटके ।' इति—(मे० पृ० १३३ श्लोक १४४) । एत्र रभसेऽपि । पुरुषोत्तमदेवेन हारावल्या पाठन्तरमुक्तम् । 'कोट्टारो नागरे कूपे पुष्करण्या च पाटके ।' इति—(हा० व० पृ० ४०७ श्लोक २३१) । घट्ट =घाट इति प्रसिद्ध । हट्ट. =क्रयविक्रयस्थानम् । 'हट्टस्तु पण्यभू ।' इति यादव —(वै० पृ० १६१ श्लोक ३५)। पिण्ड =मृदादिसघात । 'पिण्डो वृत्ते तनौ गुडे ।' इति—(वै० पृ० २१६ श्लोक ३१)। गोण्ड =नाभि, पामरजातिश्च । 'गोण्ड. पामरजातौ च, वृद्धनाभौ च तद्वति ।' इति—(मे० पृ० ४१ श्लोक ११) । 'गोण्ड पामरजातौ च वृद्धनाभौ च सम्मत ।' इति रुद्र —(अमरस्यामरविवेकटीकाया पृ० ३६४ प०१२) । पिचण्डवद् गड्वादयोऽपि पुसि स्युरितिवता निर्दिश्यते । गडु =गलगण्ड । पृष्ठगुड । कुब्जश्च । 'कुब्जे पृष्ठगुडे गडु ।' इति शाश्वत —(अनेकार्थसमुच्चये पृष्ठे ६३ श्लोक ७१७) । किण = व्रणजचिह्नम्, मासग्रन्थिभेद । घुण, ओसनभेदश्च । 'किणो रूढ व्रणस्थाने' इति—(वै० पृ० १२२ श्लोक २१७) । 'एकाङ्गुष्ठग्रहात्किण ।' इति च यादव —(वै०पृ० १०१ श्लोक २२१)। 'व्रणचिह्ने घुणे किण' इति—(हा० व० पृ० ४०८ श्लोक २५४) । घुण =काष्ठकृमि । कुटजगन्धश्च । 'घुण कृमिः काष्ठभवा' इति—(वै० पृ० १५१ श्लोक ३६) । 'कुटजे घुण' इति च—(वै० पृ० २०० श्लोक ४९) 'घुण स्यात्काष्ठवेधके ।' इति रत्नकोष —(अम० सुधा० पृ० ४५५ प० ३३) । दृति=चर्म्मपुटक । मत्स्यश्च । 'दृतिश्चर्म्मपुटे मत्स्ये ना' इति—(मे० पृ० ५५ श्लोक २६)। हरित्=पालाशवर्ण. । दिक् । तृणभेद । अश्वविशेषश्च । 'हरिद्दिशि हयान्तरे । तृणभेदे भवेद्वर्णे' इति—(अने० नि० पृ० ३७ श्लोक २५२) । रोमन्थ =पशूना चर्वितचवर्णम् । 'रोमन्थन तु रोमन्थरोमोर्णोर्णास्तुकोऽपि च ।' इति यादव.–(वै० पृ० ७१ श्लोक ७४) ।

उद्गीथ =सामभेदः । 'उद्गीथः प्रवण. सामवेदध्वनि' इत्यरुण—(अम० सुधा० पृष्ठे ४५५ पंक्तौ १३) । कासमर्दः = गुल्मभेद । अर्बुद =शतकोटयः । पर्वतश्च । 'अर्बुद पर्वते मासे संख्याया मासकीलके ।' इति—(अने० ति० पृष्ठ ३९ श्लोक ७) । अर्दनिरिति पाठे अर्दनि = अग्नि । कुन्द = शिल्पभाण्डम् । निधिभेद । मुकुन्दश्च । 'कुन्द माध्ये च, कुन्दो ना निधिभेदमुरद्विषो ।' इति—(ना० र० पृष्ठ ३३ पं० १९) । 'पुष्पे क्लीब, भ्रमौ कुन्द.' इति पुरुषोत्तमदेवश्च—(त्रि० शे० पृ० ३४४ श्लोक २०५) । शेषशब्दानां व्याख्यानं तु प्राग्वत् ।

अथेदानी पान्तादीन् रान्तान्तान् पुलिङ्ग-वाचकशब्दानाह हेम—(अभि० सं० हेम० लि० पृ० २ श्लोकः ११, १२) ।

पूपा-ऽपूपौ सूप-कलापौ रेफः शोफ-स्तम्ब-नितम्बाः ॥ ११ ॥
शम्बा-ऽम्बौ पाञ्चजन्य-तिष्यौ पुष्यः सिचय-निकाय्य-रात्र-वृत्राः ।
मंत्रा-ऽमित्रौः-कटप्रू-पुण्ड्रा-ऽऽराः, इति ।

अस्य सार्द्धपद्यस्य व्याख्या-

पूपेति । शम्बेति च । पूप.=अपूप, पिष्टक । "पूआ" इति लोके । 'पूपस्तु पिष्टकोऽपूपः' इति—(वै० पृ० १६४ श्लो० ७२) । अपूप =पिष्टक. । गोधूमश्च । सूप =दाली । व्यञ्जनम् । भाण्डम् । सूदश्च । 'सूपो व्यञ्जनभेदे च सूपकारे च सूपवत् ।' इति—(ना० र० पृ० ३७ प० ३) । कलाप.=समूहः । बर्हः । काञ्ची च । 'कलाप सहतौ बर्हे काञ्चीतूणीरयोरपि ।' इति शाश्वत—अने० स० पृ० २० श्लोक २१६) । रेफ =रवर्ण, अक्षरविशेष, यवर्गस्य द्वितीयाक्षरम् । पापम् । रागश्च । 'रेफो वर्णे च पुसि, स्यात्कुत्सिते पुनरन्यवत् ।' इति—(मे०पृ० १०४ श्लोक २) । शोफ=शोथ, श्वयथु । 'शोफ ओषधिभेदे स्याद्रुक्कृते त्वग्विवर्द्धने ।' इति हैम—(अने० स० पृ०२६ श्लो० ३०६) । स्तम्ब =व्रीह्यादीनां प्रकाण्डविशेष । नितम्ब =कटिप्रदेशः । शम्बः—=पवि । अम्ब =सरकादीनां प्रकाण्डविशेष । पाञ्चजन्य.=श्रीकृष्णस्य शख । अग्निश्च । पुष्पः=तिष्य. । तिष्य=नक्षत्रविशेष. । सिचय =वस्त्रम् । जीर्णवस्त्र च । निकाय्य=गृहम् । कृत्समासान्तरात्रशब्दान्त पूर्वरात्रप्रभृतय । वृत्र =असुरविशेषः । मत्र =ऋगादिलक्षण. । अमित्र =शत्रु । कटप्रू =महादेव । विद्याधरश्च । 'कटप्रू पुसि राक्षसे । विद्याधरे महादेवे तथा स्याद-

पाणिनीयेऽपि—(१) (रात्राह्नाहा पुसि) ॥ एते पुसि स्यु । पूर्वरात्रः । अपररात्रः । पूर्वाह्ण । अपराह्णः । एकाह । सप्ताह । उत्तमाह । सि० कौ० पृ० ४०२ सू १३११ (२) (भृत्रामित्रच्छात्रपुत्रमत्रवृत्रमेढ्रोष्ट्रा पुंसि) ॥ एते पुसि स्यु । भृत्र =दास । न मित्रम् अमित्र =शत्रु । "तस्य मित्राण्यमित्रास्ते" इति माघ । "स्याताममित्रौ मित्रे च" इति च । छात्र =शिष्य. । पुत्र.=आत्मज । मत्र =ऋगादिलक्षण. । वृत्रः=असुरविशेष । मेढ्रः=शिश्न । उष्ट्रः=करभः । सि० कौ० पृ० ४०३ सू० १५७ ।

क्षदेवने ।' इति—(मे० पृ० १४१ श्लोक १९९) । पुण्ड्र =इक्षुभेद । देशभेदश्च । 'पुण्ड्रो देशेक्षुतिलकं भेदे क्रिम्यतिमुक्तयो ।' इति—(ना० र० पृ ४६० प० १९)। आर =भौमग्रह: । शनिग्रहश्च।' कुजारमङ्गलाङ्गारा' इति—(वै०पृ०१९ श्लोक ३१) । 'आरस्तु भूसुते ।' इति—(ना० र० पृ० ४८ पं० १४)। 'आरा चर्म्मप्रभेदिन्या, पुसि भौमे शनैश्चरे ।' इति च—(मे० पृ० १२३ श्लोक ७) ।

अमरोऽपि—(अम० ना० लि० पृ० ४५५ श्लोक १९, २०)

. . . . . . . स्तूपौ सपूपकौ ॥
आतपः क्षत्रिये नाभिः कणप-क्षुर-केदराः ।
पूर-क्षुरप्र-चुक्राश्च, इति ।

एतयोर्व्याख्या—

स्तूपाविति । आतप इति च । स्तूप.=वायु । रण । मृदादिकूट', राशिकृतमृत्तिकादि: । उच्छ्राय:, समुच्छ्रायश्च । 'स्तूपा वायुरणोच्छ्राया:' इति—(वै० पृ० २१९ श्लोक ६७) । पूपक: ="पूआ" इति लोके । क्षीरस्वामी तु 'यूप' शब्द पठति । यूप =यज्ञस्तम्भ: । 'यूपोऽस्त्री सस्कृतस्तम्भ.' इति—(वै०पृ०९१ श्लो० १०३) । आतप =सूर्यालोक: । नाभिशब्दस्तु प्रागुक्त । कणप =प्रासविशेष. । क्वचित् 'कुणप' इति पाठ । कुणप =शवभेद । 'कुणप पूतिगन्धौ शवेऽपि च ।' इति—(मे० पृ० १०३ श्लोक २०) । क्षुर =वपनशस्त्रम् । 'क्षुरस्तुच्छेदनद्रव्ये गोक्षुरे कोकिलाक्षके ।' इति—(ना० र० पृ० ४६ प० ३) । केदर =क्षेत्रम् । सव्यवहारपदार्थश्च । 'वृक्षभेद' इत्यन्ये । 'केदार केदर. क्षेत्रम्' इति—(वै० पृ० १२४ श्लोक १७) । पूर =जलप्रवाह: । 'पूर स्यादम्भसा वृद्धौ व्रणसंशुद्धिखाद्ययो ।' इति—(अने० सं० पृ० ३६ श्लोक ४५२) । क्षुरप्र =बाणभेद । मुकुटस्तु 'खुरप्र' इति कवर्गद्वितीयादि पठति । यथा—'दशाननक्षिप्रखुरप्रखडित. क्वचिद्गतार्धो हिमदीधितिर्यथा' इति हरविलास.—इति च लिखति (अम० सु० व्या० टिप्पण्या पृ० ४५६ प० ३१) । चुक्र =शाकभेद । 'चुक्रस्त्वम्लेऽम्लवेतसे ।' इति—(अने० सं० पृ० ३५ श्लोक: ४३२) ।

अथाधुना लान्तादीन् हान्तान्तान् पुलिङ्गवाचकशब्दानाह हेम.—(अभि० सं० लि० पृ० २ श्लोक १२, १३, १४, १५)

. . .कल्लोलौ-ल्लौ च खल्ल-तल्लौ ॥१२॥
कण्डोल-पोटगल-पुद्गल-काल-बाला

वेलो गळो जगल–हिङ्गुल–गोल–फालाः ।
स्याद्देवलो बहुल–तण्डुल–पत्रपाल–
वातूल–ताल–जडुलाः सृमलो निचोलः ॥१३॥
कामल–कुद्दाला–ऽवयव–स्वाः
शिव–रौरव–यावाः–शिवि–दावौ ।
माधव–पणवा–ऽऽदीनव–हाव–
ध्रुव–कोटीशा–ऽशाः स्पश–वंशौ ॥१४॥
कुशो–ड्डीश–पुरोडाश–वृष –कुल्मास–निष्कुहाः ।
अह–निर्यूह–कलहाः, इति ।

एषा व्याख्या

कल्लोलेति । कण्डोलेति । कामलेति । कुशेति च । कल्लोल = हर्ष । उल्लोल, महा-तरङ्ग । "बड़ी लहर" इति लोके । 'कल्लोलस्तु भवेद्धर्षे तथा वारिमहोर्मिषु ।' इति—(श० र० स० पृ० ३०३ प० ८) । 'कल्लोल पुंसि हर्षे स्यादुल्लोलो वैरिणोरपि ।' इति च–(मे० पृ० १५० श्लो० ७३) । ओल्ल = सूरणः । खल्ल = गर्त । चातकश्च । 'खल्लो वस्त्रप्रभेदे स्याद् गर्ते चर्म्मणि चातके ।' इति—(मे० पृ० १४६ श्लो० १२) । तल्ल = जलाधारान्तरम् । 'तल्लस्तु जलाधारान्तरे पुमान् ।' इति—(मे० पृ० १४६ श्लो० २२) । कण्डोल = पिट , नलादिरचितभाण्डम् । "पेटी" इति । "पिटार" इति च लोके । उष्ट्र । गोणीप्रभेदश्च । पोटगल = नल । काश. । मत्स्यश्च । 'अथ पोटगल पुंसि नले च काशमत्स्ययो ।' इति—(मे० पृ० १५६ श्लो० १५७) । पुद्गल = आत्मा । 'पुद्गल सुन्दराकारे त्रिषु, पुंस्यात्मदेहयो ।' इति—(मे० पृ० १५३ श्लो० ११६) । काल = समय , दिष्ट । यमश्च । बाल = बालक, शिशु । वेल = आम्र । 'आम्रे कामाङ्ग–माकन्दौ चूतो वेलोऽङ्गनाप्रिय. ।' इति—(वै० पृ० ४७ श्लो० २५) । गल = कण्ठ । जगल. = मोदक । पिष्टमद्यम् । कितवश्च । 'जगल पिष्टमद्ये स्यात्कितवे मोदकेऽपि च ।' इति—(ना० र०*पृ० १०३ प० १९) । हिङ्गुल = रागद्रव्यभेद ।'हिङ्गुलो वर्णकद्रव्ये ना, भण्टाक्या तु हिङ्गुली ।' इति—(मे० पृ० १५५ श्लो० १४६) । गोल = वर्तुलपिण्ड । गन्धरसश्च । 'बोलो गोल शश पिण्ड प्राणो गन्धरसो रस ।' इति—(वै० पृ० ४२ श्लो० १५) । फाल. = महादेव । बलदेवश्च । 'फाल पुंसि महादेवे कालिन्दीभेदनेऽपि च, ।' इति—(मे० पृ० १४७ श्लो० ३४) ।

---

पाणिनीयेऽपि– (१) (वशाशपुरोडाशा ) एते पुंसि स्युः । वशः = वेणु. । अश. = भागः । पुरोडाशः = हविर्भेदः । "पुरोडाशभुजामिष्टाम्" इति माघः । सि० कौ० पृ० ४०१ सू० ११२

देवल =देवाजीव । 'देवाजीवस्तु देवल ।' इति—(वै० पृ० ८३ श्लो० ११)। बहुल. =अग्नि । कृष्णपक्षश्च । 'पुस्यग्नौ कृष्णपक्षे च ।' इति—(मे० पृ० १५३ श्लो० ११८) । तण्डुल =विडङ्ग । धान्यादिनिकर । धान्यादिसारश्च । "चाउर" इति । "चॉवल" इति च लोके । 'तण्डुल स्याद्विडङ्गे च धान्यादिनिकरे पुमान् ।' इति—(मे० पृ० १५२ श्लो० ९६) । पत्रपाल =आयता छुरिका । वातूल =वातसमूह । ताल =वृक्षविशेष । जडुल =जटुल , पिप्लु , देहस्थ, कृष्णलक्ष्म । "लस्सन" इति लोके । स्मृमल =गवयविशेष । सृमर =मृगविशेष । यस्य नीलवालै. कान्ताकचग्राहाय्य क्रियते स च महिषाकृतिर्भवति। निचोल =प्रच्छदपट । "पिछौडा" इति लोके। 'निचोल प्रच्छदपट' इति—(अम० ना० लि० पृ० २४३ श्लो० ११६) ।' 'निचोल तु नपुसकम्,। इति रभस —(अम० सु० व्या० पृ० २४३ प० १५) । कामल =मरुदेश । वसन्तश्च। कामलो रोगभेदे वा ना, ना मरुवसन्तयो ।' इति—(मे० पृ० १५० श्लो० ७३) । कुद्दाल = भूमिदारणम्, युगपत्रक च । 'कुद्दाल स्यात्पुमान् भूमिदारणे युगपत्रके ।' इति—(मे० पृ० १५० श्लो० ८१) । अवयव =अङ्गम् । 'अशस्त्ववयवो भाग एकदेश कलेति च ।' इति—(वै० पृ० १७७ श्लो० ५५) । स्व =आत्मा । ज्ञातिश्च । 'स्व स्यात्पुस्यात्मनि ज्ञातौ, त्रिष्वात्मीये, ऽस्त्रिया धने ।' इति—(मे० पृ० १५७ श्लो० २) । 'ज्ञातावात्मनि चात्मीये धने स्वाख्या, प्रवर्तते ॥' इति महाक्षपणकश्च—(अनेकार्थध्वनिमञ्जर्याम् पृ० १४ श्लो० ११६) । शिव =महादेव । रौरव =नरकविशेष । याव =लाक्षा । 'यावो द्रुमामयोऽलक्तो लाक्षा रक्ता जतु क्रिमि ।' इति—(वै० पृ० १७१ श्लो० १५३) । शिवि =नृपविशेष । भूर्जश्च । दाव =वनाग्नि । वन च । माधव =विष्णु । वैशाख-मासश्च । पणव =वाद्यविशेष , मर्द्दल , गायनपटह । "ढोलकी" इति । "करताल" इति च लोके । गजस्कन्धश्च । 'समौ पणवमर्दलौ' इति—(वै० पृ० १४६ श्लो० १३४) । 'गजस्कन्धेऽपि पणव' इति च—(वै० पृ०२४३ श्लो ५२) । आदीनव =परिक्लेश , क्लेश , दोष । दुरन्तश्च । 'आदीनव पुमान् दोषे परिक्लेशदुरन्तयो ।' इति—(मे० पृ० १६१ श्लो० ५७) । हाव =विभ्रम , विलासचेष्टा । क्रन्दन च । 'हावो विलासचेष्टायाम्' इति—(वि० को० पृ० श्लो० ) । 'हावो क्रन्दनविभ्रमौ ।' इति महाक्षपणकश्च—(अने० ध्व० म० पृ० २३ श्लो० १९८) । ध्रुव =उत्तानपादपुत्र. । केषाचिन्नक्षत्राणां सज्ञाविशेष । विष्कम्भादियोगषु द्वादशो योग । निश्चयश्च । 'ध्रुवौ नक्षत्र-निश्चयौ ।' इति च—(अने० ध्व० मं० पृ. २५ श्लो. २०९) । 'ध्रुव कीले शिवे शङ्कौ वंशे योगे वसौ मुनौ । निश्चिते निश्चले तर्के नक्षत्रे शाश्वते वटे । स्रुचि मौर्व्या तालभेदेऽस्त्रियाम्' इति च—(ना० मं० पृ० ८२ श्लो २३ त ) । कोटीश: =लोष्टभेदनम् । "हैगा" इति लोके । अश =भाग , राशेस्त्रिशत्प्रमितो भागः । वस्तुन एकदेश: । विभाजन च । 'अशो विभाजने प्रोक्त एकदेशेऽपि वस्तुन ।' इति—(अने० स० पृ० ४४ श्लो० ५५५) । स्पश. =चार. । 'स्पशश्चारे निगदित:' इति—(श० र० स० पृ० ३२६ श्लो० १६) ।

वंशः = वृक्षविशेष, वेणुः। मेरुः। पृष्ठास्थि। कुलम्, अन्वयः। नासादण्डश्च। 'मेरौ वृक्षविशेषे च वशशब्दस्तु कार्मुके। करिपृष्ठे कुले वेणौ वशाख्या कविभिः स्मृता।' इति—(अने० ध्व० मं० पृ० १५/२० श्लो० १२१/१६६)। 'वशो वेणौ कुलेऽपि च।' इति—(हा० व० पृ ४०८ श्लो० ७०) 'वश पृष्ठास्थ्नि गेहोर्ध्वकाष्ठे वेणौ गणे कुले। नासादण्डे, च' इति च–(नाना० म० पृ० ८५ प० ८)। कुश = दर्भ। 'कुशो दर्भ, इति–(अने०सम्०पृ० ३० श्लो० ३३७)। श्रीरामचन्द्रपुत्रश्च। तथा च प्रयोग--'सनिवेश्य कुशावत्या रिपुनागाङ्कुश कुशम्।' इति कालिदास—(रघुवशे पञ्चदशसर्गे श्लो० ९७)। उड्डीश = शिव। ग्रन्थभेदश्च। 'उड्डीशो ग्रन्थभेदे स्याद्दुड्डीशश्चण्डिकापतौ।' इति--(मे० पृ० १६३ श्लो० १७)। पुरोडास = पिष्टपिण्डविशेष, पिष्टकचमसी। हविर्भेद.। हुतशेषे च।'पुरोडाशो हविर्भेदे चमस्या पिष्टकस्य च। हुतशेषे, च' इति—(मे० पृ० १६५ श्लो० ३८)। वृष.= बलीवर्द। राशिविशेषश्च। कुल्मास = यावकः। काञ्जिकं च। 'कुल्माष काञ्जिके, यावके पुमान्,।' इति—(मे० पृ० १६८ श्लो० ३४)। 'कुल्माष' इत्यपि। निष्कुह = कोटरः, वृक्षस्थितगह्वरम्, वृक्षरन्ध्रम्। अह इति सप्ताह-नवाहैकादशाह प्रभृतय। निर्यूह = वृक्षनिर्यास। आपीडश्च। 'द्वार्य्यापीडे क्वाथरसे निर्यूहो नागदन्तके॥' इति—(अम० ना० लि० पृ० ४३९ श्लो० २३६ एव वै० पृ० २४२ श्लो० ३८)। निर्यूह. शेखरे द्वारे निर्यासे नागदन्तके।' इति—(वि० प्र० पृ० १८१ श्लो० १८)। 'निर्यासः खपुरो लशः' इति--(वै० पृ० ४५ श्लो० ११)। निर्यास क्वाथरस। निर्यासेऽपि कषायोऽस्त्री' इति—(अम० ना० लि० पृ० ४२३ श्लो० १५३)। 'क्वाथ कषायो निर्यूह' इति--(वै० पृ० १८४ श्लो० ९४१। एव माधवकरोप्याह–(पर्य्यायरत्नमालाया पृ० ३९ प० २५)। कलह = कलि। 'कलहं युधि, राढे ना खड्गकोषे च भण्डने।' इति--(मे० पृ० १७६ श्लो० १६)।

अमरोऽपि–(अम० ना० लि० पृ ४५५ श्लो० २०, २१)।

……………गोल–हिगुल–पुद्गला ॥
वेताल–भल्ल–मल्लाश्च पुरोडाशोऽपि पट्टिशः।
कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥, इति।

एतयो व्याख्या—

गोलेति। वेतालेति च। वेताल = शिवद्वारपालः। शिवगणाधिपविशेषः। भूताधिष्ठितशवश्च। भल्ल = ऋक्षः। "रीछ" इति लोके। 'भल्लः स्यात्पुसि भल्लूक.' इति—(मे० पृ० १४८ श्लोक ४२)। मल्ल = बाहुयुद्धकुशल.। 'नियुद्धकुशलो मल्लस्तद्वृत्तिस्तत्परायण.।' इति सुखानन्दनाथ.—(शब्दार्थचिन्तामणौ पृ० ५४३ प० २२)। पट्टिश = अस्त्रभेदः। पट्टिस इति दन्त्यसान्त्य इति मुकुटः। रभसः = हर्ष.। 'रभसो हर्षवेगयो.। इति—(वि० प्र० पृ० १७५

श्लोक: १४ ) । सकटाह कटाहसहित. कटाहशब्दश्च पुसीत्यर्थः । कटाह =वटकादिपाकपात्रम् । 'कटाहो घृततैलादिपाकपात्रेऽपि कर्परे । कटाहः कूर्म्मपृष्ठे च सूपे च महिषीशिशौ।' इति—(वि० पृ० १८० श्लोक १६) 'कटाह: कूर्म्मकर्परे । द्वीपस्य च प्रभेदे च' इति—(मे० पृ० १७६ श्लोक: १५) । शेषशब्दव्याख्या प्रागुक्ता ।

अथेह दुर्गसिहस्तु क्रमरहितान् पुलिङ्गवाचकान् काफादिशब्दानाह—(दुर्ग० लि० शा० पृ० १२, १३, १४, १५, १६, १७ श्लोक २६, २७, २८, २९, ३०, ३१, ३२, ३३, ३४, ३५ । )

कफ–पुंख–नग–श्लोकाः शङ्ख–मृदङ्गौ च शङ्कुना–ऽपाङ्गः ।
यान–युग–पतङ्ग–कटाहैः सह मञ्चो–टज–तरङ्गा ॥

एषा व्याख्या—

कफेति । एते कफादय, शखादी, मञ्चादयः शब्दाश्च शङ्कुनायानयुगपतङ्गकटाहैश्च सह नृलिङ्गा भवन्ति । कफ =श्लेष्मा। नग =वृक्ष । पर्वतश्च । श्लोक =एकाक्षरादिपादच्छन्द । कोपधत्वात्पुस्त्व सिद्धम् । वृत्ताख्यत्वात्स्त्रीनपुंसकनिवृत्त्यर्थम् । इह वचनम् । यशोवचनस्तु श्लोकशब्दः पुलिङ्ग कोपधत्वादेव । शङ्ख. =निधिविशेषः । 'निधिर्ना, शेवधिर्भेदा. पद्मशंखादयो निधे ।' इति—(अम० ना० लिं० पृ० २९ श्लोक. ७१) मृदङ्ग =मुरजः । 'मृदङ्गा मुरजा.' इति—(अम० ना० लिं० पृ० ७३ श्लोक: ५) । शङ्कु =संख्याविशेषः । शतादिकत्वात् अस्य नपुसकत्व प्राप्तम् । कीलार्थस्य उदन्तत्वात्पुंस्त्व सिद्धम् । यानेति । यात्यनेन इति यानम् =शकटम्, रथश्च । तस्य युगो यानयुगः यानद्वयमित्यर्थ । युगानि कालमानविशेष । तानि च क्रमवर्तीनि । तत्साधर्म्याद् ये क्रमवर्तिन पितृपुत्रप्रपुत्रप्रतिपुत्रादिरूपाः पुरुषास्तेऽपि युगानि। पुरुषा एव युगानि पुरुषयुगानि चत्वार. क्रमगता पुरुषा इत्यर्थः । अन्यत्र तु युगम् =युग्मम्, युगलम्, कृतयुगम्, त्रेतायुगम्, द्वापरयुगम्, कलियुगं चैतानि चत्वारि नपुसके स्यु । इति—(दुर्गलिङ्गानुशासनवृत्तौ पृ० १३ प० ४) । पतङ्ग. =शलभ, सूर्यश्च । 'पतङ्गौ पक्षिसूर्यौ च' इति—(अम० ना० लिं० पृ० ४०० श्लोक: २०) । उटज. =तापसपर्णकुटी। 'पर्णशालोटजोऽस्त्रियाम् ।' इति—(अम० ना० लि० पृ० ११८ श्लोक ६) । शेषशब्दाना व्याख्या प्रागुक्ता।

वर्गः पूग–लवङ्गौ गच्छः कच्छौ–घ–पथि–मथि च वृषलः ।
ध्वनि–मुरजौ वृजि–मुञ्जा–वङ्कोठ–कुठौ हठा–ऽङ्गुष्ठौ ॥

---

पाणिनीयेऽपि—(१) (शङ्कु पुसि) असौ पुंसि स्यात् । शङ्कुः=कील । (सि० कौ० पृ० ४०३ सू० १४८) ।

अस्य व्याख्या—

वर्ग इति। एते वर्गादयोऽङ्गुष्ठान्ताः शब्दाः पुंसि स्युः। कच्छश्च ओघश्च पन्थाश्च मन्थाश्च इति समाहारो द्वन्द्वः। लवङ्ग =ओषधिविशेषः, देवकुसुमं च। 'लवङ्गं देवकुसुमं श्रीसंज्ञम्' इति—(अम० ना० लि० पृ० २४५ श्लो० १२५)। गच्छ =अभिमतसंख्यापर्य्यवसानम्। 'तन्मूले तु पुमान् हेतुर्गच्छो वाञ्छितराशय।' इति—(वै० पृ० १८९ श्लो० ३७)। कच्छ =पार्श्वम्, नौकाङ्गम्, अनूपदेशश्च। 'अनूपदेशे कच्छः स्यान्नौकाङ्गे तुन्तकद्रुमे।' इति—(श० र० स० पृ० ७४ प० ११)। पन्थाः =मार्गः। मन्था =खजकः। वृषल =शूद्रः। लोपधत्वान्नपुंसकं प्राप्तम्। ध्वनि =शब्दः। मुरज =मृदङ्गः। बृजय =जनपदविशेष। एष बहुवचनान्तश्च। अङ्कोठश्च कुठश्च स्वरादेः अकारान्तस्य प्रायेण पूर्वो निपातो दृश्यते। अङ्कोठः =वृक्षविशेष। "ऑकडा" इति लोके। 'अङ्कोठो वामनोऽङ्कोलः' इति माधवकर— (पर्य्यायरत्नमालायाम् पृ० २९ प० १३)। कुठः =वृक्षः। 'तरुः शाखी कुठः कुजः' इति—(वै० पृ० ४५ श्लोक ५)। 'कुटः' इत्यपि। 'कुजः क्षितिरुहोंऽघ्रिपः शिखरिपादपौ विष्टरः कुटस्तरुरनोकहः कुरुहभूरुहद्रुद्रुमा।' इति—(रा० नि० पृ० ३२५ श्लो० १७)। प्रपञ्चार्थौ एतौ बिल्वादित्वात्पुंस्त्व सिद्धम्। शेषं प्राग्वत्।

**कोष्ठ–पुरोडाश–कमठ–गुड–लगुड–व्रात–गण्ड–गोण्डा–ऽर्घाः[1]।**
**पिण्ड–शिखण्ड–पिचण्डा वण्ड–करण्डौ वरण्डश्च ॥**

अस्य व्याख्या—

कोष्ठेति। एते कोष्ठादयो वरण्डान्ताः शब्दा नृलिङ्गा भवन्ति। कमठ =भिक्षाभाजनम्। कच्छपश्च। 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्।' इति—(मे० पृ० ३९ श्लोक १२)। कूर्माभिधायिनस्तु स्त्रीपुंस्त्वं चतुष्पदनामत्वात्। वण्ड =द्रुश्चर्म। शेष प्राग्वत्।

**वृषिणः षण्डः[2] षण्ढो मुहूर्त्त–विट्–पुञ्ज–रै–हरिद्–गरुतः।**
**प्लुत–दृति–गञ्ज–कृतान्ता वमत्य–तिथि–सारथि[3]–ग्रन्थि ॥**

---

पाणिनीयेऽपि–(१) (अर्घपथिमथ्यृभुक्षि स्तम्बनितम्बपूगाः)॥ एते पुंसि स्युः। अर्घः =मूल्यम्। पूजाविधिश्च। पन्थाः =मार्गः। मन्थाः =मन्थानदण्ड। ऋभुक्षाः =इन्द्र। स्तम्ब =गुल्मः। नितम्बः =स्त्रिय पश्चात्कटितम्। पूग =गुवाक। सि० कौ० पृ० ४०१ सू० ११४।

पाणिनीयेऽपि–(२) (षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डा)॥ एते पुंसि स्युः। षण्डः =वृषभ। मण्ड =एरण्डवृक्षः। करण्डः =वंशादिरचितो भाण्डविशेषः। भरण्डः =स्वामी। वृषश्च। वरण्ड =अन्तर्वेदि। समहश्च। तुण्डः =आननम्। गण्ड =कपोल। मुण्ड =दैत्यविशेष। पाषण्ड =बौद्धक्षपणकादि। शिखण्ड =मयूरपिच्छः। सि० कौ० पृ० ४०१ सू० ११३।

(३) (सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलय)॥ एते पुंसि स्युः। सारथि =सूतः। अतिथि =कुशपुत्रः।

अस्य व्याख्या—

वृष्णिरिति । एते वृष्ण्यादयो ग्रन्थ्यन्ता शब्दाः पुंसि स्युः । वृष्णि =कुलविशेष. । मेषवाचिनस्तु परत्वात्स्त्रीपुंस्त्वम् । षण्ड =सघात. । षण्ढ =नपुंसकम् । मुहूर्त्तः =घटिकाद्वयम् । 'ते तु मुहूर्त्ता द्वादशास्त्रियाम् ।' इति—(अम० ना० लि० पृ० ४७ श्लोक ११) । विट् =वैश्य, नरश्च । विष्ठावाचिनस्तु स्त्रीलिङ्गत्व प्रयोगतो भाषायां दृश्यते । पुञ्ज. =राशिः । 'पुञ्जराशी तूत्कर: कूटमस्त्रियाम् ।' इति—(अम० ना० लि० पृ० २०२ श्लो० ४२) । रा: =द्रव्यम्, स्वर्ण च । 'रा स्वर्णवित्तयो' । इति—(श० र० स० पृ० २५० पं० ३) । गरुत् सुवर्णम्, पक्षश्च । प्लुत =स्वरविशेष । यस्तु प्लवनक्रियानिमित्त प्लुतशब्दस्तस्य वाच्यलिङ्गता । गञ्ज =भाण्डागार । कृतान्त =यम । 'कृतान्तो यमुनाभ्राता' इति—(अम० ना० लि० पृ० २४ श्लोक ५८) । अतिथि =अभ्यागत । सारथि =रथवाह । ग्रन्थि =रज्वादिवेष्टितगाढबन्ध । शेष प्राग्वत् ।

कुन्ता–न्त–बलीवर्दा शब्दा–ऽर्थौ ह्रद–जनपद–मगधाश्च ।
मकरन्द–कुन्द–कन्दाः सबुद्बुदाः कासमर्दन ॥

अस्य व्याख्या—

कुन्तेति । बुद्बुदेन सहिता सबुद्बुदा कुन्तादय शब्दा कासमर्देन सहैते पुंलिङ्गा स्युः । अन्त =मृत्यु, अवसान च । 'अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके ।' इति—(वै० पृ० २३० श्लो० ५) । बलीवर्द =अनड्वान् । शब्द =ध्वनि । अक्षरं च । 'शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ ।' इति—(अने० सं० पृ० २० श्लो० २३८) । ह्रदः =जलाधारविशेष । अगाधजलकूपश्च । 'तत्रागाधजलो ह्रद ।' इति—(अम० ना० लि० पृ० १०३ श्लो० २५) । मगधा =जनपदविशेष. । रूढितश्च बहुवचनान्तोऽयम् । कन्द =मूलविशेष । मेघश्च । 'मूले कन्दः किले कन्दः कन्दो वारिद उच्यते ।' इति—(अने० ध्व० मं० पृ० १९ श्लोकः १६०) । शेषं प्रागवत् ।

कपि–कवि–कितव–दव–कलह–दावा–वंशां–ऽश–राशि–सरवाश्च ।
अर्दन्य–ऽहीन–रेफा कृमि–तिमि–पृष्ठ्यास्तथा सीरः ॥

---

बस्ति.=नाभेरधोभाग । पाणि.=हस्तः । अञ्जलि =हस्तसम्पुट । सि० कौ० पृ० ४०१ सू० ११६ ।

(१) (ह्रदकन्दकुन्दबुद्बुदशब्दा) ॥ एते पुंसि स्यु । ह्रदः=अगाधजलम् । कन्द. =मेघ । कुन्द. =अच्युत, निधिविशेषश्च । बुद्बुदः=वर्तुलाकारो जलविकार । शब्द =अक्षरसमूहः । ध्वनिश्च । सि० कौ० पृ० ४०१ सू० ११३ ।

अस्य व्याख्या—

कपीति । एते कप्यादयः सीरान्ता शब्दा. पुसि भवन्ति । कपि.=मर्कटः । विष्णुश्च । 'कपिर्ना सिह्लके शाखामृगे च मधुसूदने ।।' इति—(मे० पृ० १०२ श्लो० २) । कवि =काव्यकृत् । शुक्रश्च । 'खलीने स्त्री कवि पुसि काव्यकृच्छुक्रसूरिषु ।' इति—(त्रि० शे० पृ० ३७५ श्लोक. ४१४) । कितव =द्यूतकार ।'धत्तूरश्च । 'कितवो मत्तधूर्त्तयो ।। कनकाह्वयवृक्षे च पेचके कितवो मत ।' इति—(श० र० स० पृ० ३११ प०११) । दव =वनाग्नि । वन च । 'दवो दावश्च गदितौ वनाग्निवनयोरपि ।' इति—(श० र० स० पृ० ३१६ प० ७) । राशि.=पुञ्ज । मेषादिविशेषश्च । 'राशिपुञ्जोत्करा नरि ।' इति—(वै० पृ० १८६ श्लोक ३) । सत्त्व =प्राणी । द्रव्यवचनस्य गुणवचनस्य च नपुसकत्वमेव दृश्यते । द्रव्यम् । सत्त्वरजस्तमश्च । 'सत्त्व गुणे पिशाचादौ बले द्रव्यस्वभावयो । आत्मत्वे व्यवसायाऽसुचित्तेष्वस्त्री तु जन्तुषु ।।' इति—(मे० पृ० १५९ श्लोक २८) । अर्दनि:=अग्निः । अश्ववृत्तेस्तु स्त्रीपुस्त्व चतुष्पदनामत्वात् । अहीन =क्रतुविशेष· । सवनैस्त्रिभिरेकाहास्तैरावृत्तैरहर्गणा । ते दीक्षितै· कृताः सत्राण्यहीना याजकै कृता । अहीना द्वादशाहात्प्राक् सत्राण्यूर्ध्वं स तु द्वयः ।। सर्वेऽमी यज्ञक्रतवस्त एवैन्द्रा. प्रजागमा ।' इति—(वै० पृ० ९० श्लोक: ८४, ८५, ८६) । कृमि =जन्तुविशेष: । वर्णसङ्करजातिविशेषश्च । 'ऊर्णनाभस्तन्तुनाभः कृमिर्मर्कटकोऽपि च ।' इति—(वै० पृ० १५० श्लोक ३४)। तिमि =मत्स्यविशेष. । 'मीनो वैसारिणस्तिमिः ।' इति—(वै० पृ० १५१ श्लोक: ४१) । पृष्ठ्य =क्रतुविशेष । वृषभविशेष. । घोटकविशेषश्च । 'स्थूरी पृष्ठ्य पृष्ठवाह्य:' इति—(वै० पृ० ६९ श्लोक ५६) । सीर =हलम् । सूर्यश्च । 'सीरोऽर्कहलयो पुसि' इति—(श० र० स० पृ० २६२ प० ५) । शेष प्राग्वत् ।

**अम्ब–स्तम्बौ पुत्र–च्छात्रा–ऽमित्रा वृत्र–मंत्रौ च ।**
**पञ्चाल–पीलु–पिप्पल–गुग्गुल–हिङ्गुल–कुलालाश्च ।**

अस्य व्याख्या—

अम्बेति । एते अम्बादय. कुलालान्ता शब्दा नरि स्यु । पुत्र =आत्मज , सुत । 'पुत्रस्तु तनयः सूनुरात्मजो नन्दनोऽङ्गज ।' इति—(वै० पृ० १७६ श्लो० ३९) । 'योनिसम्बन्धवाचिन्यः पुत्राद्या पुंगिरो नरि ।' इति च—(वै० पृ० २९३ श्लो० ४३) । पुत्रीति नदादित्वात् । छात्रः शिष्यः । 'छात्र शिष्ये निगदित ' इति—(श० र० स० पृ० २५४ श्लोक १२) । पञ्चाला· =जनपदविशेष· । बहुवचनान्तोऽयं रूढित । वर्णवृत्तप्रभेदश्च । पीलु =वृक्षविशेष· । फलवचनस्य तु नपुंसकत्व परत्वात् । हस्तौ च । 'पीलुर्वृक्षे, फले पीलु, परमाणौ गजे च ना ।। पीलुस्तालाऽ-

स्थिखण्डे च काण्डपादपभेदयो ।' इति—(श० र० स० पृ० २९८ प० १४, १५) । पिप्पलः =वृक्षविशेष , चलदल. । पक्षिप्रभेद । वस्त्रच्छेदनविशेषश्च । वृक्षवाचिनस्तु स्त्रीत्वमपि । पिप्पलीति नदादित्वात् । फले स्त्रीत्वमेव-अर्धपिप्पलीति । 'पिप्पल स्याच्चलदले, भक्तसिक्थे तु पिप्पलम् ॥ तथैव सलिले, वस्त्रच्छेदे पुसि- निरशुके । तथा पक्षिप्रभेदेऽपि, कणाया पिप्पली मता ॥' इति—(श० र० स० पृ० ३०७ प० १४, १५, १६) । गुग्गुलु =स्वनाम्ना प्रसिद्धो वृक्षविशेषस्य निर्यास , कुम्भ , उलूखलक., पुर , रक्तशिग्रुश्च । कुलाल =कुम्भकार । तद्भाण्डं च । 'कुलाल ककुभे कुम्भकारे चाप्यञ्जनान्तरे ।' इति—(श० र० स० पृ० ३०४ प० ९) । शेष प्राग्वत् ।

तण्डुल–मञ्जुल–काला मौलि–तरल–पाश–पुद्गल–कुशूलाः ।
रालि–रनिल–कील–पटोल–केलि–तूला–ऽनलै–स्तालः ॥

अस्य व्याख्या—

तण्डुलेति । एते तण्डुलादय कुशूलान्ता शब्दा रालि तालश्च, अनिलप्रभृतिभिरनलान्तै सह च नृलिङ्गा स्यु । तण्डुल =धान्यसार । मञ्जुल. =जलरङ्कु , दात्यूहपक्षी । 'मञ्जुल च जलाञ्चले । रम्ये कुञ्जे, मञ्जुलस्तु दात्यूहे' इति—(अने० स० पृ० १०४ श्लोक ७१२-१३)। 'मञ्जुलो मधुरे कुञ्जे जलरङ्कौ (ङ्के) जलाञ्चले ।' इति च—(हा० व० पृ० ४०८ श्लोकः २५२) । मौलिः =कङ्केलिवृक्ष , अशोकद्रुम । 'मौलि कङ्केलिवृक्षेऽपि' इति—(त्रि० शे० पृ० ३७४ श्लोक ४०६) । मौलि किरीटे धम्मिले, चूडायामनपुसकम् । अशोकपादपे पुसि' इति । नाऽशोकाद्रौ, स्त्रिया भूसौ' इति पाठान्तरम्—(मे० पृ० १४८ श्लोक. ४६, ४७) । किरीट च । 'किरीटे मौलिरक्लीबे चूडासयतकेशयो ।' इति रभस —इति—(अम० सु० व्या० पृ० ४३० प० २५) । 'चूडा किरीट केशाश्च संयतामौलयस्त्रय ।' चूडा शिखा । किरीट मुकुटम् । सयता बद्धा ये च केशास्ते त्रयो मौलय । त्रय इति मौले· पुस्त्वरसूचनायोक्तम् ।' (इति च—अम० ना० लि० पृ० ४३० श्लोकः १९३) ।' तरलः =हारमध्यगतो मणि । 'तरलो हाररत्ने च चञ्चले चोज्ज्वलेऽपि च ।' इति केशवः—(कल्पद्रौ पृ० श्लोक ) । 'तरलश्चञ्चले खड्गे (षिद्गे) हारमध्यमणावपि ।' इति च—(वि० प्र० पृ० १५३ श्लो० ५८) । पाश. =बन्धनम् । कुशूलः =धान्याधारविशेष । अनिलः =वात । कील =शङ्कु । पटोल =औषधिविशेष , कर्कच्छदः, तिक्तक । "परवर" इति । 'पलवल' इति च लोके । केलि =परिहास । तूल =पिचुः । "रुई" इति लोके । 'अय पिचुस्तूल' इति—(अम० ना० लि० पृ० ३३७ श्लोकः १०६)। 'पुलिङ्गस्तु पिचौ तूलः क्लीबं स्याद् ब्रह्मदारुणि ।' इति रुद्रः—इति—(अम० सु० व्या० पृ० १४३ पं० ५) । उन्मान च । अनल. =अग्नि. । शेषं प्राग्वत् ।

अञ्जलि–शैवल–कम्बल–पल्लव–वातूल–सूमल–कलि–बलयः ।
बिल्वादयोऽपि तरव, स्त्रियां मताः शिशपाद्यास्तु ॥

अस्य व्याख्या—

अञ्जलीति१ एतेऽञ्जल्यादयो बल्यन्ता. शब्दा बिल्वादयस्तरवोऽपि पुलिङ्गा. स्युः । अञ्जलिः=करसम्पुट. । कुडवश्च । 'अञ्जलि कुडवे पुसि हस्तसम्पुटकेऽपि च।' इति––(श० र० स० पृ० ३०१ प० ११) । शैवल =जलतृणविशेष । 'शैवल पद्मकाष्ठे स्यात्, शैवालेऽपि पुनानयम् ।' इति—(मे० पृ० १५५ श्लोक १४१) । कम्बल =गोगलचर्म । प्रावरणविशेषस्य तु स्त्रीत्वमपि कम्बलीति । नदादित्वादि। नागराजश्च । 'कम्बलो नागराजे स्यात्सास्नाप्रावारयो क्रमौ। कम्बलश्चोत्तरासङ्गे कम्बल सलिले मतम् ।' इति—(वि० प्र० पृ० १५५ श्लोक ७५) । 'इन्द्रिय कम्बलं प्रोक्तं कम्बलो रोमज पट । कम्बलन्तु गवां सास्ना कम्बले कम्बलं विदु ॥' इति—(अने० ध्व० म० पृ० ५ श्लोक ३६) । पल्लव =किशलयम्। नपुसकमपि केचित् । 'पल्लव किसलये बले । विटप विस्तरेऽलक्तरागे शृङ्गारषिद्गयो.।' इति—(अने० सं० पृ० १०६ श्लोक ७४१, ७४२) ।' 'व्याडिस्तु पुसि क्लीबे च' इति––(अम० सु० व्या० पृ० १३२ प० ३४) । वातूल =वातसमूहः।'वातूल पुसि वात्यायामपि, वातासहे त्रिषु।' इति––(अम० ना० लि० पृ० ४३१ श्लोक १९६) । 'वातूलो वातुलोऽपि स्यात्' इति द्विरूपकोषाद् ह्रस्वमध्योऽपि' इति—(अम० सु० व्या० पृ० ४०१ प० ३३) 'वातिलो वातूलोऽपि स्याद्वातूल प्रमतस्तथा।' इति––(द्विरूपकोषे पृ० ४१२ श्लोक २७) । कलि =युद्धम्, कलह । युगम् च। 'कलि' स्त्री कलिकाया, ना शराजिकलहे युगे ॥' इति––(मे० पृ० १४५ श्लोक ६) 'कलिः कलहकालयो।' इति—(अने० ध्व० म० पृ० २५ श्लोक २०४) । बलि =कर , राजदेयभाग' । असुरविशेषश्च। 'बलि पूजोपहार स्याद्बलिर्दैत्यो बलि कर । बलिर्जराश्लथ चर्म जठरावयवो बलि ॥' इति —(अने० समु० पृ० ३ श्लो० १८) । 'बलि स्त्रीमध्यभागोर्मिर्बलिर्वर्ष्मजराकृति । बलि पूजोपहार स्याद्बलिर्दैतेयसत्तम ॥' इति—(अने० ध्व० म० पृ० ४ श्लोक' ३१) । बिल्वः, धवः,

पाणिनीये—(१) (पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्र पुखा) । एते पुसि स्युः । पल्लव =शाखाया पर्वपत्रादिसघातः । "पर्वपत्रादिसंघाते शाखायाः पल्लवो मत ।" इति कोशान्तरम् । वेश्यापतिश्च । पल्वलः=वेशन्तः, अल्पसर । "वाचस्पतौ तु–वेशन्त पल्वलोऽस्त्री" इति । कफ =शरीरस्थधातुविशेषः, श्लेष्मा। रेफः=रवर्ण । रागश्च । कटाहः=कूर्मकर्परः। निर्व्यूह =निर्यासः । मठः =छात्रादिनिलय । मणिः=रत्नम्, अश्मजातिः। तरङ्ग =ऊर्मिः। तुरङ्ग =अश्व । गन्ध =गन्धक । लेशश्च। स्कन्ध.=देहावयवविशेष, अंस. । मृदङ्ग =वाद्यविशेष, मुरज । सङ्ग.=सङ्गम, मेलनम्। समुद्र =सागरः। पुखः=बाणमूलम्। मङ्गलाचार.। श्येनश्च। सि० कौ० पृ० ४०१ सू० ११५ ।

अशोकः, पुन्नागः, अर्जुन मातुलिङ्ग, लकुच, पारिजातक इत्यादयो बिल्वाद्या.। शिंशपाद्यास्तु वृक्षविशेषा स्त्रियां योषितो, मता ज्ञेया स्त्रीलिङ्गा इत्यर्थः। शिंशपाद्या—शिंशपा, पाटला, शमी इत्यादय.। प्रयोगत अङ्कोठस्य वृक्षस्य च वृक्षत्वात्पुलिङ्गं सिद्धम्। फलार्थं पाठ प्रपञ्चार्थं इत्येके। शेषं प्राग्वत्।

पाप्मा–ऽश्मा श्लेष्मा–ऽऽत्मा वणिगू–ष्मा स्कन्ध–गन्ध–गर्मुच्च।
अनन्त–मसन्त–मुदन्तं शम्ब–नितम्बौ च कुक्ष्यं–ऽह्री॥

अस्य व्याख्या—

पाप्मेति। पाप्मादय शब्दा अनन्तासन्तोदन्ता शब्दा शम्बादय अह्र्यन्ता. शब्दाश्चैते पुंसि भवन्ति। उभयत्रापि समाहारो द्वन्द्व। पाप्मा=पापम्। 'अस्त्री पङ्क, पुमान् पाप्मा' इति—(अम० ना० लि० पृ० ५१ श्लोक २३)। अश्मा=शिला। 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्।' इति—(अम० ना० लि० पृ० १२४ श्लोक ४)। श्लेष्मा=कफः। वणिक्=वाणिज। राशिविशेषश्च। ऊष्मा=सन्ताप.। वर्णविशेष। ऋतुविशेषश्च। 'ग्रीष्मोष्णवाष्पा ऊष्माण इति—(वै० पृ० २१४ श्लोक ९)। 'ऊष्माण. शषसा. सहाः।' इति—(वै० पृ० ८६ श्लोकः ३६)। 'शुचिरुष्णागम पातम उष्ण ऊष्मा।' इति च—(वै० पृ० २४ श्लो० ८८)। गर्मुत्=सुवर्णम्। कुक्षि=जठरम्। अंह्रि=पाद। 'अंह्रो रंहो द्रुहिण संहर्षांह्री च घश्रुतयः' इति—(अम० सु० व्या० पृ० २२७ स्त० १ प० २)। शेष प्राग्वत्।

अथेदानी क्षान्तेकारान्तोकारान्तव्यञ्जनान्तान् पुलिङ्गवाचकशब्दानाह हेम.—(अभि० सं० लि० पृ० २ श्लोक १५, १६, १७)।

... ... ..पक्ष–राशि–वराश्यृ–र्षिः॥१५॥
दुन्दुभि–र्वमति–वृष्णि–पाण्य–ऽवि–
ज्ञाति–रालि–कलयो–ऽञ्जलि–घृणिः।

---

पाणिनीयेऽपि—(१) (ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनय)॥ एते पुंसि स्यु। ऋषि=मंत्रद्रष्टा। राशिः=पुञ्जः। दृतिः=चर्मपुट। ग्रन्थि=रुग्भेद। क्रिमि=सूक्ष्मजन्त। ध्वनिः=शब्दमात्रम्। बलि=राजग्राह्यो भाग। कौलि= । मौलि=अशोकपादप। रवि.=सूर्य। कविः=शुक्र। कपिः=वानर। मुनिः=वाचयम। सि० कौ० पृ० ४०१ सू० १०८)। (२) (उभावन्यत्र पुंसि)॥ दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्त। दुन्दुभिः=वाद्यविशेष। असुरो वा। नाभि=क्षत्रिय। सि० कौ० पृ० ३९७ सू० १६। (३) (वह्निवृष्ण्यग्नय पुंसि)॥ एते पुंसि स्युः। वह्निः=चित्रकाख्यौषधिः। वृष्णिः=यादव.। अग्निः=वह्निः। सि० कौ० पृ० ३९७ सू० ७।

अग्नि–वह्नि–कृमयो–ऽह्नि–दीदिवि–
ग्रन्थि–कुक्षि–दृतयोऽर्दनि–र्ध्वनिः ॥१६॥
गिरिः शिशु–जायु–कर्ष्वो हाहा हूहूश्च नग्रहू–र्गर्मुत् ।
पाद–ऽश्माना–त्मा पाप्म–स्थेमो–ष्म–यक्ष्माणः ॥१७॥ इति ।

एषां व्याख्या

पक्षेति । दुन्दुभिरिति गिरीति च । पक्ष = मासार्द्ध । सखा । सहायश्च । 'पक्षो वर्गे ग्रहे पिच्छे पार्श्वे पक्ष्मविरोधयो । केशात्परश्चये चुल्लीरन्ध्रे साध्यसहाययो । मासार्द्धे' इति—(अने० ति० पृ० २३ श्लो० १८२) । वराशि = स्थूलशाटक । 'वराशि स्थूलशाटक ।' इति—(अम० ना० लि० पृ० २४३ श्लो० ११६) । ऋषि = वेद । वसिष्ठादि । दीधितिश्च । 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्, ।' इति—(मे० पृ० १६६ श्लोक ६) । 'ऋषिस्तु वेदे भृग्वादौ ज्ञानवृद्धे दिगम्बरे ।' इति च—(वै० पृ० २१४ श्लो० ९) । दुन्दुभि = वाद्यविशेष । वसुदेवश्च । 'द्वन्द्वे दुन्दुभिरक्षे च दुन्दुभि स्यात्तथाऽऽनक ।' इति—(अने० ध्व० म० पृ० १९ श्लोक १६१) । 'इष्यते दुन्दुभिर्भेर्य्यामक्षे बिन्दुत्रिकद्वये ।' इति च–(अने० समु० पृ० २९ श्लो० ३२७) । यल्लक्ष्यम्—''दुन्दुभ्या किल तत्कृत पतितया यद् द्रौपदी हरिता'' इति—(दुर्गसिंहलिगानुशासनविवृतौ पृ० ५ प० १४) । ''केनास्मिन् सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम्' इति—वेणीसंहारे १, २२ इति च—(दुर्ग० विवृ० पृ० ५ प० १६) पाणि = अङ्गविशेष, हस्त । 'करे पाणिर्निगद्यते ।' इति—(श० र० स० पृ० १०६ प० ११) । अवि = मेष । मेषराशि । वायु । प्राकारश्च । 'अविर्भूपुष्पवत्यो स्त्री, वायुप्रकाराभास्सु ना ।' इति—(वै० पृ० ३३० श्लो० ४) । ज्ञाति = सगोत्र. । तातश्च । 'ज्ञातिस्तातसगोत्रयो ।' इनि—(मे० पृ० ५५ श्लो० २०) । घृणि = रश्मि. । 'घृणि रश्मौ प्रकीर्त्यते ।' इति—(श० र० स० पृ० १०५ प० २) । अग्नि = अनलः । वह्नि = भल्लातक. । चित्रकाख्यौषधि । निम्बूक । अग्निश्च । 'वह्निर्वैश्वानरो घासि' इति—(वै० पृ० १० श्लो० १४) । दीदिवि = बृहस्पति. । 'दीदिविर्ना धिषणेऽन्ने तदस्त्रियाम् ।' इति—(मे० पृ० १६० श्लो० ३७) । ग्रन्थि. = बन्ध । रुग्भेद । पर्व । ग्रन्थिपर्णश्च । 'ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणो ।' इति—(मे० पृ० ७२ श्लो० ६) । गिरि. = पर्वत. । नेत्रामयविशेषश्च । 'गिरिर्गीर्णौ गिरियके क्रीडागण्डकशैलयो । नेत्रामयविशेषे, च पूज्ये तु गिरिरन्यवत् ।' इति—(श० र० स० पृ० २५२ पं० १९) । शिशु = बालक । जायु = औषधम् । 'जायु पुस्यगदस्तत्र भैषज्यौषधभेषजम् ।' इति—(वै० पृ० १८४ श्लो० १४१) । कर्षू. = करीषाग्नि । 'कर्षू पुमान् करीषाग्नौ, स्त्रियां कुल्येष्टिखातयो ।' इति—(मे० पृ० १६६ श्लो० ९) । हाहा: = गन्धर्वविशेष, देवगायक, देवगायन. । बाहुलकाड्डाप्रत्यये

तु (हाहा) व्युत्पन्नोऽधातुश्च । हाहाशब्दस्य रूपं तु हाहा, हाहौ, हाहा, (प्र०) । हाहाम्, हाहौ, हाहान् (द्वि०) । हाहा, हाहाभ्यामित्यादि । एवं ऊप्रत्यये हूहूरपि बोध्यः । हाहाः सान्तोऽपि 'गन्धर्वो वीतहाहसो' इति ससारावर्त्तात् । 'गन्धर्वो हाहसि प्रोक्तः' इति रत्न (धरणि) कोषाच्च । भोजस्तु हहाहुहुशब्दयोरव्ययत्वमाह । 'हहा' इत्यादिह्रस्व । 'हुहु' इत्युभयह्रस्वश्च । 'हसो हहाहुहू च द्वौ वृषणश्च तुम्बुरुः' इति शब्दार्णवात् । 'गीतमाधुर्य्यसम्पन्नौ विख्यातौ च हहाहुहू' इति व्यासोक्तेश्च' इति—(अम० सु० व्या० पृ० २२ प० ३४ त) । नग्नहूः = नानाद्रव्यकृतं सुराबीजम्, किण्वम् । 'नग्नहूर्ना, मद्यबीज किण्वम्' इति—(वै० पृ० १४० प० ६) । पादः = चरण । रश्मि । तुर्य्यांशश्च । 'पादो बुध्ने तुरीयांशे शैले प्रत्यन्तपर्वते । चरणे च मयूखे च' इति—(मे० पृ० ७५ श्लो० ९, १०) । 'पादा रश्म्यङ्घ्रितुर्य्यांशा' इति च (अम० ना० लिं० पृ० ४१२ श्लो० ८९) । स्थेमा = स्थैर्य्यम्, स्थिरस्य भाव । यक्ष्मा = रोगविशेष रोगराट्, क्षय. । 'क्षयः शोषश्च यक्ष्मा च' इति—(अम० ना० लि० पृ० २१९ श्लो० ५१) । यादवस्त्वदन्त इत्याह —'यक्ष्मा यक्ष्म क्षय. शोष' इति—(वै० पृ० १८३ श्लो० १२४) । वाग्भटस्त्वस्य सलक्षणपर्य्यायानाह—'अनेकरोगानुगतो बहुरोगपुरःसर. । राजयक्ष्मा क्षय शोषो रोगराडिति च स्मृतः ॥' इति—(वाग्भटे पृ०    श्लो०    ) । कान्तादिक्रमरहितान् पुलिङ्गवाचकशब्दानाह पुरुषोत्तमदेवोऽपि—(त्रि० शे० पृ० ३८६, ३८७ श्लो० २, ३, ४, ५) ।

पुंस्त्वे हाहा हूहू–ग्रन्थिः पाणिः कलि–र्दृति–र्मौलिः ।
अञ्जलि–रङ्घ्रिः कुक्षि–र्लविक–लोको–त्तरा–ऽऽसङ्गाः ॥
अवट–व्रात–सङ्केत–पोत–गर्त्त–गरु–च्छदाः ।
श्लेष्मो–ष्म–पाप–यक्ष्मा–ऽश्मा–ऽऽत्मानो वातायनः स्तनः ॥
फेना–ऽभिजन–कलाप–निकाय्या–ऽऽहारो–च्चारो–पल–कल्लोलाः ।
फाल–चषाल–कील–नल–तण्डुल–शैवल–खल–विभव–प्रभवाश्च ॥
अनो–ऽप–जन–नाडीभ्यो युग–मङ्गं–पदं व्रणम् ।
अनक्षे दुन्दुभि–रथ बहुत्वे–ऽप्यसवो गृहाः ॥
सक्तवो बल्वजा लाजा दाराः प्राणा दशा इति ।' इति ।

एषा व्याख्या—

पुंस्त्व इति । अवटेति । फेनेति । अन इति । सक्तव इति च । एते हाहादयो दुन्दुभ्यन्ता. शब्दाः पुंसि स्यु । असुप्रभृतयो दशान्ता शब्दास्तु बहुत्वे भूम्नि पुंसि स्यु. । ग्रन्थिः = ग्रन्थिपर्णः । वस्त्रादिबन्धः । "गाँठ" इति लोके । वंशादिसन्धि, पर्व । रुग्भेदश्च । 'ग्रन्थिस्तु

ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणो ।' इति—(मे० पृ० ७२ श्लो० ६)। तथा च प्रयोग —'ग्रन्थ-ग्रन्थिरिह क्वचित् ।' इति नैषधम्—इति-(त्रि० शे० व्या० पृ० ३८६ प० ३१)।' अघ्रिः = चरण । 'अघ्रिर्ना पादमूलयो ।' इति—(मे० १२३ श्लो० ६)। लावक = पक्षिभेद । 'पक्षि-भेदे लावक स्यात्तथा लवनकर्त्तरि ।' इति--(श० र० स० पृ० २६ प० १०)। लोकोत्तर = लोकातीत, अत्युत्तम । आसङ्ग = अभिनिवेश, परिष्वङ्गश्च । सङ्केत = स्वाभिप्रायव्यञ्जक-चेष्टाविशेष, मनोगतभावव्यञ्जनाय कृतो हस्तादिचालनरूपो व्यापार । सम्पर्कक्रिया। परि-ज्ञप्ति-परिभाषा-शैली-समया-काराश्च। 'सम्पर्कक्रिया तु सङ्केत.।' इति । 'समये च सपि-ण्डने सङ्केत' इति चाजय (अजय कोषे पृ० श्लोक ) । गर्त्त = त्रिगर्त्तभेद, त्रिगर्त्तदेशाश.। अवट, भूमिच्छिद्रम्। 'गड्ढा" इति लोके। कुकुन्दरम्, नितम्बस्थकूपश्च । 'गर्तावटौ भुवि श्वभ्रे' इति--(अम० ना० लि० पृ० ८७ श्लोक २) । 'गर्तस्त्रिगर्तभेदेस्यादवटे च कुकुन्दरे।' इति च (मे० पृ० ५४ श्लो० १३) । छद = पत्रम् । पक्षिगा पक्षश्च। 'छद पलाशे गरुति ग्रन्थिपर्ण-तमालयो ।' इति-(मे० पृ० ७४ श्लो० ५) । पाप = विभीतक । 'दैत्य पापस्तुष कल्प' इति-(वै० पृ० ५९ श्लो० १७५)। वातायन. = गवाक्ष, जालक । कपिश्च । 'गवाक्षो जालके कपौ ।' इति-(ना० मं० पृ० ९५ प० १) आहार = द्रव्यमात्रस्य गलाध करणरूप भोजनम्। आहरणम्। हारश्च। 'आहारः स्यादहारणे हारे प्रोक्तश्च भोजने ।' इति-(श० र० स० पृ० २६५ प० २०) । उच्चार. = उच्चारणम् । विष्ठा च। 'उच्चारं स्यादुच्चरणे तथा मलविसर्जने।' इति-(श० र० स० पृ० २६५ प० २०)। उपल: = प्रस्तर । शर्करा। रत्न च । 'उपलः प्रस्तरे रत्ने, शर्कराया मतोपला।' इति-(वि० प्र० पृ० १५३ श्लो० ५५)। चषाल = यूपक-टक.। यज्ञसमाप्तिसूचक पशुबन्धनाद्यर्थं यज्ञभूमौ यत्काष्ठमारोप्यते स यूप; तस्य शिरसि वलयाकृतिर्डमरुकाकृतिर्वा य काष्ठविकार. स चषाल । यूपमूले विहितलोहवलयश्च । 'कटकेऽस्य (यूपस्य) चषालोऽस्त्री' इति-(वै० पृ० ९१ श्लो० १०५) । नल = तृणभेद.। नृपभेदः। सॅव्वत्सरविशेषश्च। 'नलस्तु तृणभेदेऽब्दे कपीन्द्रे भूपतावपि ।' इति-(ना० म० पृ० ९२ प० १८)। खल = नीच । दुर्जनश्च। 'खलो नीचे दुर्जने च' इति-(ना० म० पृ० ७७ प० १०) विभव. = सॅंव्वत्सरभेद.। धनम्। वृतिश्च । 'विभवोऽब्दे धने वृतौ ।' इति—(ना० म० पृ० ८४ प० ४)। प्रभव = जन्महेतु । प्रभाव । सॅव्वत्सरभेदश्च। 'प्रभवो जन्महेतौ स्यात्प्रभावे वत्सरेऽपि च। आद्योपलब्धये स्थानेऽपामूले मुनिभिद्यपि।' इति—(श० र० स० पृ० ३२० प० १३)। अनश्च अपश्च जनश्च नाडी चेति द्वन्द्व । अनोपजननाडीशब्देभ्य. परे युगम्। अङ्गम्। पदम्। व्रणम्' इति इमे शब्दा. नृलिङ्गा. भवन्ति। यथा। अनोयुग = शकटद्वयम्। अपाङ्ग = नेत्रप्रान्तः। जनपद = देश.। नाडीव्रण = देहस्थशिरायुक्तो व्रणविशेषः। "नालीव्रणः"

इत्यपि पाठ । अथ पुलिङ्गैकवचनानन्तर नियतपुलिङ्गबहुवचनान्तशब्दानाह—बहुत्वेऽपि इत्यादिना। गृहा =भवनम्। "घर" इति। "मकान" इति च लोके। दाराश्च। 'गृहा पुसि च भूम्न्येव' इति—(अम० ना० लिं० पृ० ११७ श्लो० ५)। 'दारेषु च गृहा' इति च (अम० ना० लिं० पृ० ४४० श्लो० २३८)। 'गृह गृहाश्च पुभूम्नि कलत्रेऽपि च सद्मनि।' इति च (मे० पृ० १७५ श्लो० ५)। दशा =पुभूम्नि वस्त्रान्त, वसन्मञ्चल, वस्त्रान्तावयवः। "आचर" इति। आचल" इति च लोके। 'दशा नाभौ प्रयोजयेत्।' इति स्मृति। अधोंऽशुकस्येत्यर्थ। इति—(श० चि० पृ० ११७४ स्त० २ प० ६, ७, ८)। मेदिनीकरस्तु वस्त्रान्ते स्त्रियां भूम्नि इत्याह—'दशाऽवस्था दीपवर्त्त्यो, =र्वस्त्रान्ते भूम्नि योषिति।' इति—(मे० पृ० १६३ श्लो० ८)। 'स्त्रिया बहुत्वे वस्त्रस्य दशा स्यु,–र्वस्तयोर्द्वयो।' इति—(अम० ना० लिं० पृ० ४३५ श्लो० २१६)। 'वासो दशा मघा आप.' इति च–(दुर्ग० पृ० ११ श्लो० २४)। रभसस्तु पुस्त्रियोः भूम्नि इत्याह। 'दशा वर्त्त्यामवस्थाया, वस्त्रान्ते भूम्नि पुस्त्रियो.।' इति—(अम० सु० का० पृ० २४२ स्त० १ प० १५, १६)। शेषशब्दाना व्याख्या प्राग्वद्बोध्या।

इति पुलिङ्गानुशासनं समाप्तम्।

## अथ स्त्रीलिङ्गानुशासनम् ।

तत्रेदानी योनिमदादीन् एकस्वरोदन्तान्तान् स्त्रीलिङ्गवाचकशब्दानाह हेमः––(अभि० सं० लिं० पृ० २ श्लो० १८, १९, २०, २१)

"स्त्रीलिङ्गं योनिम–द्वस्त्री–सेना–वल्लि–तडि–न्निशाम् ।
वीचि–तन्द्रा–ऽवटु–ग्रीवा–जीह्वा–शस्त्री–दया–दिशाम् ॥१॥
शिशपाद्या–नदी–वीणा–ज्योत्स्ना–वा (वी) री– तिथी–धियाम् ।
अङ्गुली–कलसी–कङ्गु–हिङ्गुपत्री–सुरा–नसाम् ॥२॥
रास्ना–शिला–वचा–लाला–शिम्बा–कृष्णो–ष्णिका–श्रियाम् ।
सृक्का–पण्या–ऽतसी–धाय्या–सरघा–रोचना–भुवाम् ॥३॥
हरिद्रा–मांसि–दूर्वा–ऽऽलू–वलाका–कृष्णला–गिराम् ।
इत्तु प्राण्यङ्गवाचि स्यादीदूदेकस्वरं कृतः ॥४॥" इति ।

---

पाणिनीयेऽपि—(१) (लिङ्गम्) ॥ (स्त्री) ॥ अधिकारसूत्रे एते । सि० कौ० पृ० ३९७ सू० १, २ (२) (ऋकारान्ता मातृदुहितृस्वसृयातृननान्दर ) ॥ ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गा । स्वस्रादिपञ्चकस्यैव ङीब्निषेधेन कर्त्रीत्यादेर्ङीपा ऋकारान्त वात् । तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरो=ऋदन्तत्वाभावात् । माता=जननी । दुहिता=पुत्री । स्वसा=भगिनी । याता=पतिभ्रातृपत्नी । ननान्दा=स्वभर्तृभगिनी । सि० कौ० पृ० ३९७ सू० ३ (३) (काष्ठा दिगर्था स्त्रियाम्) ॥ इमा काष्ठा.=दिश. । सि० कौ० पृ० ४०० सू० ७१ । (४) (वृक्षजाति स्त्रियामेव) क्वचिदेवेदम् । हरीतकी=पथ्या । सि० कौ० पृ० ४०३ सू० १६४ (५) (ताराधाराज्योत्स्नादयश्च) ॥ एते स्त्रिया स्यु । तारा=नक्षत्रम् । धारा=घटादिच्छिद्रम् । ज्योत्स्ना=कौमुदी, चन्द्रातप । सि० कौ० पृ० ३९८ सू० ३३ । (६) (तिथिनाडिरुचिवं.चिनालिधूलिकिकिकेलिच्छविराश्यादय । एते स्त्रिया स्यु । पक्षे ङीष् । तिथी, तिथि = प्रतिपदादिपञ्चदश । अमरोस्त्वाह–"तिथयोर्द्वयो" इति । तथा च भारविः–"त.य भुवि बहुतिथास्तिथय" इति । स्त्रीत्वे हि बहुतिथ्य इति स्यात् । श्रीहर्षश्च–"निखिलान्निशि पौर्णिमातिथीन्" इति । सि० कौ० पृ० ३९८ सू० २५ । (७) (भूमिविद्युत्सरिल्लतावनिताभिधानानि) ॥ एतानि स्त्रिया स्युः । भूमि=पृथिवी । विद्युत्=तडित् । लता=वल्ली । वनिता=स्त्री । उक्तशब्दाना समस्तनामानि स्त्रिया स्यु । सि० कौ० पृ० ३९७ सू० १८ । (८) (य्वन्तमेकाक्षरम्) ॥ श्री.=लक्ष्मी. । भूः=पृथिवी । एकाक्षर किम् । पृथुश्रीः=महदैश्वर्यम् । सि० कौ० पृ० ३९७ सू० १२ ।

एषां व्याख्या—

स्त्रीलिङ्गमिति । शिंशपाद्येति । रास्नेति । हरिद्रेति च । सभेदाना योनिमदादीनां वीच्यादीना शिशपादीनामङ्गुल्यादीना रास्नादीना स्पृक्वादीना हरिद्रादीना च नाम स्त्रीलिङ्ग स्यात् । योनिमदिति । योनिर्भग तत्सहिताना प्राणिना नाम अर्थाद्ये योनिमन्त प्राणिनस्तेषां नामानि स्त्रिया स्यु· । यथा । जननी = माता । दुहिता = पुत्री । याता = भ्रातृभार्या । ननन्दा = पतिभगिनी । स्वसा = भगिनी । योषित्=स्त्री, दारा । आबन्तोऽय दाराशब्द स्त्रिया स्यात् । 'क्रोडा हारा तथा दारा त्रय एते यथाक्रमम् । क्रोडेहारे च दारेषु शब्दा प्रोक्ता मनीषिभि· ।' इति व्याडिशुभाङ्कौ' इति—(अम० सु० व्या० पृ० २०५ स्त० १ प० २४–५) । अदन्तदारशब्दे तु 'दारा पुंभूम्नि' इति बाधक प्रागुक्तम् । कलत्रशब्दस्य 'कलत्र श्रोणिभार्य्ययो ' इति मेदिनीस्थक्लीबपाठो बाधक । एवमन्यत्राप्युन्नेयम् । धेनु = गौ । करिणी = हस्तिनी । वडवा = अश्वा । रासभी=गर्दभी । काली = महिषी । अजा = छागीत्यादयो योनिमच्छब्दा । वम्री = उपजिह्वा, उपदेहिका । "दीमक" इति । "सीमक" इति च लोके । 'वम्रो वर्म्युपदीकोपजिह्विका चोपदेहिका ।' इति—(वै० पृ० १५१ श्लो० ३८) । सेना = ध्वजिनी, वाहिनी, पृतना, चमू , अनीकिनी । 'सैन्य चक्र बल सेना चमूर्वाहिन्यनीकिनी ।' इति—(वै० पृ० १०८ श्लो० ५५) वल्लि = लता, व्रतति । "वेल" इति लोके । तथा च प्रयोग.— 'हिरण्मयोर्वीरुहवल्लितन्तुभि ' इति माघ —इति मुकुट । 'वल्ली' इत्यपि । 'वल्ली तु व्रततिर्व्रतती लता ।' इति—(वै० पृ० ४५ श्लो० ७) । 'वल्ली स्यादजमोदाया लतायां कुसुमान्तरे ।' इति—(अने० स० पृ० ४२ श्लो० ५२१) । प्रयोगश्च—'वल्लीवल्कपिनद्धधूसरशिरा' इति दमयन्त्याम्' इति—(अम० सु० व्या० टि० पृ० १३० प० ३९) 'वेल्लि' इत्यपि । वल्ली तु वेल्लि सद्यरणौ' इति वाचस्पति' इति—(अम० सु० व्या० पृ० १३० स्त० १ पं० २३, २४) । तडित् = विद्युत् । "बिजली" इति लोके । 'तडिदुक्ता तु विद्युति ।' इति—(श० र० स० पृ० १४३ प० १३) । निट् = रात्रि । हरिद्रा च । वीचि = स्वल्पतरङ्ग , ऊर्मि । अवकाश, सुख च । 'वीचि स्वल्पतरङ्गे स्यादवकाशे सुखे द्वयो ' इति (मे० पृ० २८ श्लो० १०) । तन्द्रा = प्रमीला, आलस्यम्, निद्रा च । 'तन्द्रा निद्राप्रमीलयो ' इति—(वै० पृ० २२१ श्लो० १५) । अवटु = घाटा, ग्रीवापश्चाद्भाग । ग्रीवायामुन्नतभागो वा । "घाटी" इति लोके । 'अवटुर्घाटा कृकाटिका ॥' इति—(अम० ना० लि० पृ० २३३ श्लोक ८८) । तत्रावटु साहचर्य्यात् स्त्रियां स्यात् । बोपालितस्तु पुंसीत्याह—'अवटु पुरुषे कृकाटिका घाटा' इति— (अम० सु० व्या० पृ० २३३ स्त० १ प० २५) । वैजयन्त्या तु स्त्रीपुंसयोरुक्त । 'पिण्डारे त्ववटो. पाणे ' इति— (वै० पृ० २८१ श्लो० ९) । घाटाऽप्यवटुरक्लीबे' इति च (वै० पृ० १८० श्लो० ८५) । ग्रीवा = कन्धरा, शिरोधरा । तच्छिरा च । 'स्यात्तु ग्रीवा कन्धराया तच्छिराया च योषिति ।' इति—(मे० पृ० १५८ श्लो० ६) । जिह्वा = रसना, रसज्ञा, वाक्, ज्वाला च । 'जिह्वा तु वाचि

ज्वालारसज्ञयो ।' इति--(अने० स० पृ० ४३ श्लो० ५३३) शस्त्री=छुरिका । 'शस्त्री छुरिकाया च विश्रुता ।' इति--(वि० प्र० पृ० १२८ श्लो० ४२) दया=कृपा, अनुकम्पा । अहिमा च । 'दयाऽहिसानुकम्पयो. ।' इति--(अने० ध्व० म० पृ० २५ श्लो० २०९) । दिक्=दिशा, नि मरण, मुखम् । उदाहरणम् । दन्तक्षतविशेष । वर्तुलाकारश्च । दिग्दिशाशा ककुब्दीर्णि हरिद्देववधू सरि ।' इति—(वै० पृ० १७ श्लोक २ )।। 'दिक्तु नि सरणं मुखम् ।' इति--(वै० पृ १६० श्लो० १५) । 'दिग्दष्टे वर्त्तुलाकारे' इति च (वै० पृ० २३३ श्लो० ४०) । नागरिमतेन टापि दिशा । 'दिक् तु स्त्रियां दिशा दान्ती ककुब् देववधू पवि.।' इति शब्दार्णव इति (अम० सु० व्या० पृ० ३० स्त० २ प० ९, १०) । दिक्शब्दयोगे तत्र हि दिशि दृष्ट शब्दो दिकशब्द इत्युक्तम् । शिशपा=वृक्षविशेष । शिशपाद्या.—शिशपा, पाटला, शमी इत्यादय । पाटला=पुष्पवृक्ष । 'पाटला पाटलौ स्त्री स्यादस्या पुष्पे पुनर्न ना ।। आशुधान्ये पुमान् श्वेतरक्तवर्णेऽपि वाच्यवत् ।' इति—(मे० पृ० १५३ श्लो० १०९) । शमी=सक्तुफला । शिम्बिका । वल्गुलिश्च । 'शमी सक्तुफलायां च शिम्बिकाया च वाग्गु (वल्गु) लौ ।' इति--(मे० पृ० ११० श्लौ० ३१) । नदी=सरित् । गङ्गाद्या च । 'नदी सरित्' इति—(नाना० र० पृ० ३३ पं० १७) । 'नदी तु सरिति स्मृता ।' इति च (वि० प्र० पृ० ७७ श्लो० १) । वीणा=वल्लकी, विद्युच्च । 'वीणा वल्लकिविद्युतो ।' इति—(वि० प्र० पृ० ४९ श्लो० २७) । 'वीणा तडिच्च' इति च (नाना० र० पृ० २५ प० ५) । ज्योत्स्ना-=चन्द्रप्रभा । ज्योतिष्मतीरात्रिश्च । 'ज्योत्स्ना ज्योतिष्मती रात्रिर्ज्योत्स्ना चन्द्रमस. प्रभा ।' इति—(अने० सम० पृ० १८ श्लो० १९२) । वारी=गजबन्धनी । कलसी च । 'वारी स्याद् गजबन्धन्या कलश्यामपि योषिति । वारिर्वाग्गजबन्धन्यो , स्त्री क्लीबेऽम्बुनि ब्रालके ।' इति—(मे० पृ० १२७ श्लो० ६७) तिथी=प्रतिपदादितिथय , कर्मवाटी । 'तदाद्यास्तिथयो द्वयो. ।।' इति—(अम० नालि० पृ० ४३ श्लोक १) 'तिथिर्न षण् कर्मवाटी' इति च—(वै० पृ० २२ श्लो० ६९) । धी = बुद्धि । ज्ञानभेद. । वृकासुरश्च । धीर्ज्ञानभेदे बुद्धौ च' इति--(मे० पृ० ७८ श्लो० २) । 'धीर्वृकासुर ।' इति—सौभरि --(एकार्थनाममालाया पृ० ८ श्लो० ६५ । 'बुद्धौ स्त्री धा च धिश्च धी ।' इति च—(नाना० र० पृ० ६ प० २०) । अङ्गुली=कर-शाखा, गजकर्णिका च । 'अङ्गुली करशाखाया कर्णिकाया गजस्य च ।' इति—(मे० पृ० १४९ श्लो० ५९) कलसी=गर्गरी, मन्थपात्रम् । पृश्निपर्णी । "पिठवनी" इति लोके । "कलसि" "कलशि" "कलशी" इति चापि । 'कलशी त्रयी' 'घटी पारी' इति--(वै० पृ० १६३ श्लो० ५८, ५९) । 'कलशी गर्गरी तुल्या' इति—त्रि० शे० पृ० ३०२ श्लोक. ८) । 'गर्गरी कलशिर्मता ।' इति च--(हा० व० पृ० ४०६ श्लो० २०९) । कङ्गु=धान्यविशेष:, प्रियङ्गु । "कॉगनी" इति लोके । 'क्वचिद् धान्ये कङ्गुरित्यभिधीयते ।' इति--(श० र०

स० पृ० ५९ पं० ६) । हिङ्गुपत्री=कम्बोजी, कारवी, पृथुका, त्वक्पत्री । 'पृथ्वीका हिङ्गुपत्री च कबरी दीर्घिका पृथुः ।' इति--(रा० नि० पृ० ७७ श्लो० ६२) । सुरा=मदिरा, मद्यम् । "शराब" इति लोके । चषकश्च । 'सुरा चषकमद्ययो ।' इति--(मे० पृ० १२९) । श्लो० ९८) । नस्=नासिका । इति—(सस्कृतशब्दार्थकौस्तुभे पृ० ४१८ प० ३०) । रास्ना=भुजङ्गाक्षी । एलापर्णी च । 'रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम् ।' इति—(मे० पृ० ८३ श्लो० १७) । शिला=प्रस्तर, ग्रावा । मनशिला । द्वाराध स्थितदारु च । 'शिला ग्रावा' इति--(नाना० र० पृ० ५४ श्लोक ६) 'शिला तु प्रस्तरे मता । तथा मनःशिलाया च द्वाराध स्थितदारुणि ।' इति--(मे० पृ० १४८ श्लो० ५२) । वचा=औषधि । शारिका च । 'वचौषधौ । शारिकाया च' इति--(मे० पृ० २८ श्लो० ९) लाला=मुखस्राव, सृणिका, वृक्षविशेष, श्यामलक, लवली च । 'सृणिका स्यन्दिनी लाला' इति—(वै० पृ० १८३ श्लोक १२०) । 'अथ श्यामलके लाला लवली लावली फला ।' इति च--(वै० पृ० ४७ श्लो० २६)। शिम्बा=समी, बीजगुप्ति । "सेमफली" इति लोके । कृष्णा=द्रौपदी, पिप्पली च । 'पिप्पली द्रौपदी कृष्णा' इति—(त्रि० शे० पृ० ३३२ श्लो० १२४) । उष्णिका=यवागू । 'यवाग्वामुष्णिका मता ।' इति--(श० र० स० पृ० ८ श्लोक १३) श्री=लक्ष्मीः, सरलद्रुमश्च । 'श्रीर्वेषरचनाशोभासम्पत्सरलशाखिषु । वाणीलक्ष्मीलवङ्गेषु विषे बिल्वेऽप्यथ त्रिषु ॥' इति—(नाना० र० पृ० ८ श्लोक १६) । 'श्रीर्लक्ष्म्या सरलद्रुमे ॥ वेषोपकरणे वेषरचनायां मलौ गिरि । शोभा त्रिवर्गसम्पत्यो' इति—(अने० स० पृ० २ श्लो० १३) । स्पृक्का=औषधान्तरम्, शाकविशेषो वा । "पिण्डिका" इति ख्याता स्पृक्का, पृक्का । 'मता स्पृक्कौषधान्तरे ।' इति--(श० र० स० पृ० ६ श्लोक ५, ६) । 'स्पृक्का तु ब्राह्मणी देवी मरुन्माला लता लघुः ।' इति च वाचस्पति—इति--(अम० सु० व्या० पृ० १७३ प० १७) । पण्या—ओषधिविशेष, ज्योतिष्मती । "मालकागणी" इति लोके । 'पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।' इति—(अम० ना० लि० पृ० १७९ श्लोक १५०) अतसी=उमा, क्षुमा । "अलसी" इति लोके । 'अतसी स्यादुमा क्षुमा ।' इति—(अम० ना० लि० पृ० ३०८ श्लोक २०) । धाय्या=ऋग्वेदविशेष, सामिधेनी । 'ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इति--(अम० ना० लि० पृ० २५६ श्लोक २२) । अग्निसमिन्धने समित्प्रक्षेपणे वह्निज्वलने या ऋक् प्रयुज्यते सा सामिधेनी धाय्या च स्यात् ।' इति महेश्वर' इति--(अम० ना० लि० अमरविवेकटीकाया पृ० १७१ प० १३) । सरघा=मधुमक्षिका, मधुकर्त्री मक्षिका । 'सरघा मधुमक्षिका' । इति—(अम० ना० लि० पृ० १९७ श्लोक २६) । रोचना=रक्तकह्लारम् । गोपित्तम् । वरनारी च । 'रोचना रक्तकह्लारे गोपित्तवरयोषितो ।' इति--(मे० पृ० ९१ श्लोक १६) । भू=पृथ्वी । स्थानमात्रम् । जाता । जातश्च । 'अथ भूर्मही ।

जाता जातश्च' इति सौभरि —इति—(एकाक्षरना० पृ० १० श्लोक ७५)। 'स्थानभूम्योस्तु भू· स्त्रियाम् ।' इति च--(नाना० र० पृ० ७ प० १९)। हरिद्रा=काञ्चनी, पीता। ''हलदी'' इति लोके। 'गौर्य्यां हरिद्रा रात्र्याख्या हेमघ्नी काञ्चनी परा।' इति--(वै० पृ० ६२ श्लोक २११)। मासि =जटिला। ''जटामासी'' इति लोके। ''मासी'' इत्यपि। 'जटिला लोमसी' मासी तपस्विन्यामिपी जटा।' इति—(वै० पृ० २०० श्लोक ५६)। दूर्वा= तृणान्तरम्। ''दूब'' इति लोके। 'दूर्वा तृणान्तरे।' इति—(श० र० स०पृ० ३१६ श्लोकः १२)। आलू =कन्दविशेष, कासकन्द, कासालु, गलन्तिका, भेलकश्च। ''आलु'' इत्यपि। 'आलुर्गलन्तिकाया स्यादालुकन्दे च भेलके।' इति—(श० र० स० पृ० २९५ प० ६)। बलाका=विसकण्ठिका, बकभेद। 'बलाका विसकण्ठिका।' इति—(अम० ना० पृ० १९६ श्लोक· २५)। कृष्णला=रक्तिका, गुञ्जा। ''रत्ती'' इति। ''घुघुची'' इति च लोके। 'काकचिञ्चागुञ्जे तु कृष्णला।' इति—(अम० ना० पृ० १६१ श्लोकः ९८)। गी =वाणी, वाक्, भाषा, सरस्वती च। 'गी श्रीमानथ बुद्धिमान्। गीर्वाणी गी· सुरा पत्नी सुधा' इति—(एका० ना० पृ० ४ श्लोक २४)। गी स्त्री भाषासरस्वत्यो.' इति—(मे० पृ० १२४ श्लोक २३)। प्राण्यङ्गेति। 'प्राण्यङ्गवाचि इत्तु' योषिति भवति। प्राणिनामङ्ग प्राण्यङ्गम्। इत् अन्ते यस्य तदिदन्त प्राण्यङ्गम्। प्राण्यङ्गमिदन्त यथा। नाभि =मृगमदम्, कस्तूरिकामदम्। 'स्त्रिया कस्तूरिकामदे।' इति—(मे० पृ० १०६ श्लो० ५)। श्रोणि.=कटि। ''कमर'' इति लोके। 'कटि श्रोणि. ककुद्मती।' इति—(अम०ना० पृ० २२७ श्लो० ७४)। 'श्रोणी' इत्यपि। 'श्रोणी कथिताऽवयवान्तरे।' इति—(श० र० स० पृ० १०८ प० ४)। अङ्गुलि =अङ्गविशेष। गजकर्णिका च। ''उगली'' इति लोके। ''अङ्गुरि'' इत्यपि। 'अङ्गुलि करशाखाया कर्णिकाया गजस्य च।' इति—(अने० स० पृ० १०० श्लो० ६६०)। अरत्नि =निष्कनिष्ठेन विस्तृतकनिष्ठन मुष्टिनोपलक्षितो हस्त.। ''मुट्ठी'' इति लोके। 'अरत्निस्तु निष्कनिष्ठेन मुष्टिना।' इति—(अम० ना० पृ० २३२ श्लो० ८६)। 'रत्न्यरत्नी स्त्रियौ, बद्धमुष्टितलाङ्गुली।' इत्यमरमाला, इति—(अम० सु० व्या० पृ० २३२ स्त० २ प० ११)। रुद्रस्तु नेत्याह—'नाऽरत्नि. कफोणौ हस्ते सप्रकोष्ठे चाङ्गुलौ।' इति—(अम० सु० व्या० पृ० २३२ स्त० २ प० १५, १६)। मेदिनीकरोऽपि'—'अरत्निर्ना सप्रकोष्ठ-तताङ्गुलिकरेऽपि च। कफोणावपि' इति—(मे० पृ० ८५ श्लोकः ३४)। पार्ष्णि· =गुल्फयो-रध: प्रदेश। ''एडी'' इति लोके। पादमूलम्, पादपश्चाद्भाग। जिगीषा, जयस्पृहा च। अत्र त्वय पुंसि स्यात्। सैन्यपृष्ठे, पादमूले, पृष्ठे चेति पुंस्त्रियो·। उन्मदस्त्रियाम्। कुम्भ्यां च स्त्रियां स्यात्' इति—(श० चि० पृ० १४१ स्त० २ प० १, २, ३)। 'पुमान्पार्ष्णिस्तयो-रध.।' इति—(अम० ना० पृ० २२७ श्लोक. ७२)। 'पार्ष्णि. स्त्रीपुंसयो पादमूले स्याद्

ध्वजिनीकटौ।' इति रन्तिदेव' इति--(अम० सु० व्या० पृ० २२७ स्त० १ प० १७)। 'पार्ष्णिस्तु पादावयवे सैन्यपृष्ठोन्मदस्त्रियो।' इति--(श० र० स० पृ० १०६ प० ८)। गोधि =ललाटम्, भाल। ''माथा'' इति लोके। 'ललाटमलिक गोधि' इति--(अम० ना० पृ० २३४ श्लोक ९२)। 'भाले गोध्यलिकालीकललाटानि' इति हैमनाममाला--(अम० ना० सु० व्या० टिप्पण्या पृ० २३४ स्त० २ प० ४१)। पुम्ययम्। 'गोधिभालौ• महाशख' इति--(त्रिकाण्डशेषात् पृ० २९२ श्लोक ३०)। यादवप्रकाशस्तु स्त्रियामित्याह--'ललाटमलिक गोधिः स्त्री' इति--(वै० पृ० १८१ श्लोक ९६)। पालि.=कर्णलताग्रम्, अश्रिश्च। 'कोणस्तु स्त्रिय पाल्यश्रिकोटय।' इति--(अम० ना० लि० पृ० २९५ श्लो० ९३)। पालि. स्त्र्यस्त्र्यङ्कपङ्क्तिषु।' इति--(अम० ना० लि० पृ० १३१ श्लो० १९७) 'पालि. कर्णलतायां स्यात्प्रदेशे पङ्क्तिचिह्नयो।' इत्यजय' इति--(अम० सु० व्या० पृ० ४३१ स्त० २ प० २५, २६)। 'सश्मश्रुयुवती पालि प्रस्थ (पङ्क्ति) कर्णलताऽपि च।' इति--(त्रि० शे० पृ० ३७२ श्लो० ३९९)। 'पालि: कर्णलताग्रेऽस्त्रौ पङ्क्तावङ्कप्रदे(भे)श(द)यो। छात्रादिदेये स्त्री पाली यूकासश्मश्रुयोषितो।' इति--(मे० पृ० १४७ श्लो० ३०)। पाणिशब्दस्य तु भुजपर्यायित्वात्परा पुलिङ्गसञ्ज्ञा। तथा ह्यघ्रिशब्दस्यापि। ईदूदेकस्वरम्--एक स्वरो यस्य तदेकस्वरम्। ईदन्तमूदन्तं वा यदेकस्वर शब्दरूपं तत्स्त्रियामित्यर्थ। तत्रैकस्वरौ ईदन्तौ श्रीधीशब्दौ प्राग्वद्बोध्यौ। भी=भयम्। ''डर'' इति लोके। 'भीश्च भीति स्यात्' इति--(एका० ना० मा० पृ० १० श्लो० ७५)। 'भी स्त्री भीत्या, खगे पुंसि' इति च--(नाना० र० मा० पृ० ७ प० १९)। ह्री=लज्जा। ''लाज'' इति लोके। 'मन्दाक्ष ह्रीस्त्रपा लज्जा व्रीला (डा) सापत्रपान्यत।' इति--(वै० पृ० ९९ श्लो० १९४)। भ्रू =भ्रूकुटि। दृग्भ्यामूर्ध्वभागौ भ्रुवौ स्त्रियौ स्याताम्। ''भौं' 'इति लोके। 'ऊर्ध्वे दृग्भ्या भ्रुवौ स्त्रियौ।' इति--(अम० ना० पृ० २३५ श्लो० ९२)। स्रु =स्रुवो यज्ञपात्रम्।। ''स्रुवा'' इति लोके। ''स्रोता'' इति ''चश्मा'' इति च लोके। 'स्रू स्त्रिया निर्झरे स्रुवे।' इति--(मे० पृ० १२३ श्लो० २)। 'स्रू स्रुवे निर्झरेऽपि च।' (अने० स० पृ० २ श्लो० १४)। द्रू =कामरूपि, कामाचारम्, रक्षः, सुपर्णं च। 'द्रूः कामरूपिणि स्वर्णे' इति--(अने० स० पृ० २ श्लो० १३)। 'द्रूर्हिरण्यरक्षसो, द्रू. कामचार:' इति च--(अम० ना० लि० पृ० ४५० स्त१ प० ३७)। जू =त्वरागमनम्, सामान्यगमन च। 'जूस्त्वरागमने प्रोक्ता सामन्यगमने स्त्रियाम्। जूराकाशे सरस्वत्या पिशाच्या, जवने त्रिषु।' इति--(मे० पृ० २९ श्लो० १-२)। 'जू कुलालज' इति--(एका० ना० मा० पृ० ५ श्लो० ३९)। 'जूराकाशे सरस्वत्या पिशाच्यां जवनेऽपि च।' इति--(अने० स० पृ० १ श्लो० ८)। 'जूर्ना जीवे व्योमपिशाचयो.। जू: स्त्री वाण्याम्' इति--(नाना० र० मा० पृ० ५ पं०

७,८) । रूपमञ्जरीकारस्तु पुंसीत्याह—'जू: पिशाची, पिशाचश्च पुंसि' इति मुकुट' इति—(अम० ना० लि० टिप्पण्या पृ० ४५० स्त १ प० ३७) ।'लवन लू, भवन भू., पवन पू, नयति नी, लुनाति लू' इत्यादौ तु परत्वात् 'क्तः कर्त्तरि' इति बाधितत्वाद् वाच्य(त्रि)लिङ्गत्वम् । कृत.—कृत्प्रत्ययान्ता. यथा । लक्ष्मी. = विष्णुपत्नी । तरी = नौ, वेडा । कुतू = चर्म्मनिर्मित-स्नेहपात्रम् । ''कुप्पा'' इति लोके । शेष प्राग्वत् ।

अथेदानी समाहारे पात्रादिवर्जितादन्तोत्तरपदो द्विगु समासविशेष इत्यस्य स्त्रीलिङ्गता-माह हेम —(अभि० स० लि० पृ० २ श्लो० २२) ।

पात्रादिवर्जितादन्तोत्तरपदः समाहारे ।
द्विगु.' इति ।

अस्य व्याख्या—

पात्रेति । पात्रादिवर्जितेन पात्रादिरहितेन अदन्तोत्तरपदेन अकरान्तोत्तरपदेन सह एकार्थ. समाहारार्थो यो द्विगुसमास स स्त्रिया स्यात् । यथा । पञ्चाना मूलाना समाहार 'पञ्चमूली'। त्रयाणां लोकाना समाहार 'त्रिलोकी'। षडध्यायाना समाहार 'षडध्यायी' । षण्णां नगराणा समाहारः 'षण्णगरी' । पञ्चानामक्षराणा समाहार 'पञ्चाक्षरी' । इत्यादिः । पात्रादिवर्जित इति किम् । पात्राद्युत्तरपदै. अदन्तैः एकार्थो द्विगु स्त्रिया न स्यादित्यर्थ । यथा—पञ्चानां पात्राणा समाहार 'पञ्चपात्रम्' । चतुर्णां युगानां समाहारः 'चतुर्युगम्' । त्रयाणां भुवनानां समाहार. 'त्रिभुवनम्' । त्रयाणां पुराणा समाहार 'त्रिपुरम्'। भाष्ये तु 'त्रिपुरि' इति दृश्यते । अदन्तोत्तरपद इति किम् । पञ्चानां कुमारीणा समाहार 'पञ्चकुमारि' । दशानां धेनूना समा-हार. 'दशधेनु' । पञ्चाना राज्ञा समाहार 'पञ्चराजम्' । इत्यादौ टचि अदन्तत्वे सत्यपि पात्रादित्वान्नपुंसकत्वमित्येके । एकार्थ इति किम् । पञ्चसु कपालेषु सस्कृतः पुरोडाशो हविर्वि-शेष. 'पञ्चकपाल , पञ्चकपाली, पञ्चकपाला', इत्यादि. ।

स एवान्नन्तादीनां स्त्रीलिङ्गतामाह—(अभि० स० लि० पृ० २ श्लोक २२) ।

अन्नाबन्तान्ता वा' इति ।

अस्य व्याख्या—

अन्नेति । अन्नन्ता., आबन्ता , अन्तान्ताश्च ये ते वेति विकल्पेन स्त्रीलिङ्गा भवन्ति । यथा—अन्नन्ता.-बहुराज्ञी, सुराज्ञी इत्यादी । आबन्ताः–रमा, बाला, वत्सा इत्यादयः । अन्तान्ता –कान्ता, शान्ता इत्यादी ।

स एवानस्तु सर्वो नपुंमक इत्याह—(अभि० स० लि० पृ० २ श्लोकः २२) ।

··· अन्यस्तु सर्वो नपुंसकः ॥५॥

अस्य व्याख्या—

अन्य इति । अन्य उक्तादितरः सर्वं समस्तो नपुसक नपुसकलिङ्ग एव स्यात् ।

स एव लिदादिप्रत्ययान्ताना क्कचित्तिगादिप्रत्ययान्ताना विंशत्यादीनां च स्त्रीलिङ्गतामाह—(अभि० स० लि० पृ० २ श्लोक. २३) ।

लिं–न्मिन्यं–ऽनिं–ण्य–ऽणिस्त्र्युक्ताः
क्वचि–त्तिग–ऽल्पह्रस्वकप् ।
विंशत्याद्याशताद् द्वन्द्वे
सा चैक्ये द्वन्द्वमेययोः ॥६॥' इति ।

अस्य व्याख्या—

लिदिति । लिदादिप्रत्ययान्ता ये ते स्त्रियामुक्ता· । यथा—लिदादिप्रत्ययान्ता जनता, ग्रामता, बन्धुता, गजता, सहायता, गोता, इत्यादय । भूमि–अटनि–वाणि–वेणि–काकणि–भूति–चिकीर्षाप्रभृतय· । तिग्प्रत्ययान्ताः तन्तिप्रभृतयः । अल्पे ह्रस्वे चार्थे कप् (न्) प्रत्ययान्ताः क्रयिका–पुटिकाप्रभृतयश्च स्त्रिया स्यु. । विंशति·, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टि, सप्तति, अशीति·, नवतिश्चेति ।

इह स्त्रीलिङ्गानुशासनेऽमरस्तु विशेषमाह—(अम० ना० लि० पृ० ४५२ श्लोक० २)·

स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ।

अस्य व्याख्या—

स्त्रियामिति । स्त्रियामित्यधिकारोऽय मसीशब्दपर्य्यन्तं बोध्य. । ईदूदेति । ईदूदादीनां व्याख्या तु प्रागुक्ता ।

---

पाणिनीयेऽपि—(१) (तलन्त) ॥ अय स्त्रिया स्यात् । शुक्लता=शुक्लस्य भाव· । ब्राह्मणता=ब्राह्मणस्य कर्म । ग्रामता=ग्रामस्य समूह । देवता=देव एव । सि० कौ० पृ० ३९७ सू० १७। (२) (मिन्यन्त) ॥ मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रिया स्यात । भूमि=पृथिवी। ग्लानि=अनुत्साह, बलदीनता, रोगश्च । सि० कौ० पृ० ३९७ सू० ६ । (३) (अनूप्रयान्तो धातु) ॥ अनिप्रत्ययान्तः, ऊप्रत्ययान्तश्च–धातु स्त्रियां स्यात् । अवनि—पृथिवी । चमू—सेना । प्रत्ययग्रहण किम् । देवयते क्विप्–द्यू–विशेष्यलिङ्ग. । सि० कौ० पृ० ३९७ सू० ४ । (४) (विंशत्यादिरानवतेः) ॥ इयं विंशतिः । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्तति । अशीतिः । नवतिः । सि० कौ० पृ० ३९७ सू० १३ ।

नाम-विद्यु-न्निशा-वल्ली-वीणा-दि-ग्भू-नदी-ह्रियाम् ।
अदन्तैर्द्विगुरेकार्थो न स पात्र-युगादिभिः ॥

अस्य व्याख्या—

नामेति । विद्युदादीना ह्रीपर्य्यन्तानामष्टाना यन्नाम तत्स्त्रिया स्यात् । विद्युत्-निशा-दीना व्याख्या प्रागुक्ता । 'वाणी'त्यादो 'ङ्याबूङन्तम्' इति सिद्धे वीणाग्रहण चिन्त्यम् । केचित्तु वीणास्थाने वाणी पठन्ति । वाणी = वाक्, गौ, गी । सरित् = त्रिस्रोता, त्रिपाट् । ह्रीग्रहण चिन्त्यम् । 'ईदूद्विरामैकाच्' इति 'त्रपादौ ङ्याबूङन्तम्' इति च सिद्धत्वात् । केचित्तु 'धियाम्' इति पठन्ति । धी = सवित्, चित्, प्रतिपत् इत्यादय । अदन्तैरित्यादीना व्याख्या तु प्राग्वद् बोध्या ।

तल्-वृन्दे ये-नि-कट्य-त्रा वैरमैथुनिकादिवुन्
स्त्रीभावादा-वति-क्ति-ण्वुल्-णच्-ण्वुच्-क्यब्-युजि-ञाङ्-नि-शाः ।

अस्य व्याख्या—

तलिति । 'तलन्तं स्त्रियाम् ।' तल्प्रत्यय स्त्रिया स तु भावाद्यर्थे विहितः । तत्र भावे यथा—शुक्लस्य भाव शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । गवा समूह गोता । ग्रामाणा समूह. ग्रामता । देव एव देवता । स्वार्थे तल् । वृन्द इति । वृन्दे समूहे य, इनि, कट्य, त्र इमे चत्वार. प्रत्यया योषिति भवन्ति । यथा—'पाश्यादिभ्यो यः ।' पाशाना समूह पाश्या । वाताना समूह वात्या । तृणाना समूह. तृण्या । धूमाना समूह. धूम्या । 'खलादिभ्य इनि' खलाना समूहः खलिनी । पद्माना समूह पद्मिनी । शाकाना समूह शाकिनी । उलूकाना समूह उलूकिनी । 'रथादिभ्य. कट्यच् ।' रथाना समूह रथकट्या । गवा समूह गोत्रा । वृन्दे किम् । मुखे भवो मुख्य. = मुखोत्पन्न । दण्डोऽस्त्यस्य दण्डी = दण्डयुक्तः । वरेति । मिथुनस्य कर्म्म मैथुनिका । 'द्वन्द्वाद्वुन्वैरमैथुनिकयोः ।' वैरमैथुनादौ च यो वुन्प्रत्यय स स्त्रियाम् । तत्र वैरे विरोधार्थे यथा—बाभ्रवाश्च शालङ्कायनाश्च तेषा वैर बाभ्रवशालङ्कायनिका । अश्वश्च महिषश्च तयोर्वैरम् । अश्वमहिषस्येदं वैरम् 'अश्व महिषिका' । काकश्च उलूकश्च तयोर्वैरम् । काकोलूकस्येदं वैरं काकोलूकिका ।' अत्रिश्च भारद्वाजश्च तयोर्विवाह । 'अत्रिभारद्वाजिका' अथवा अत्रिभारद्वाजयोरियं मैथुनिका । विवाहरूपसम्बन्ध इत्यर्थः । गर्गाणां भृगूणा च विवाहः गर्गभार्गविका । कुत्सकुशिकिका । कुत्सश्च कुशिका च तयोर्मैथुनिका ।

पाणिनीयेऽपि—(१) (क्तिन्नन्तः) क्तिन्प्रत्ययान्त स्त्रिया स्यात् । गतिः = गमनम् । कृतिः = करणम । मृतिः = मरणम् । "ल्युट्क्तिनावेकार्थवाचकौ" इति । सि० कौ० पृ० ३९७ सू० ९ ।

कुत्सकुशिकयोर्मैथुनिका । एव शकुशकिका । वसिष्ठकुशिकिका । आदिना पाद-शतस्य सख्यादेर्वीप्सायां वुन् लोपश्च दण्डव्यवसर्गयोश्च । इति वुनो ग्रहणम् । द्विपादिका ददाति । द्वौ द्वौ पादौ ददाति । द्वौ द्वौ दण्डितो द्विपादिकाम् । द्विशतं दण्डितो ददाति द्विशतिका ददाति च । वैरेत्यादि किम् । 'वासुदेवार्जुनाभ्यां वुन् ।' वासुदेवे भक्तिरस्य वासुदेवक । वुनोग्रहण वुञ उपलक्षणम् । काशिका गार्गिकया श्लाघते । काठिकया विकत्थते । 'द्वन्द्वमनोज्ञादिभ्यश्च ।' वुञ् । शैष्योपाध्यायिका । क्वचिद् वैरमैथुनिकादिरिति पाठ । आदिना वीप्सादौ वुनो ग्रहणम् । स्त्रिया भावादि स्त्रीभावादिस्तस्मिन् । स्त्रियामित्यधिकृत्य भावादौ ये विहिताः प्रत्यया अनिक्तिन्नादयस्ते स्त्रियां स्युरित्यर्थ । अनिर्यथा—'आक्रोशे नञ्यनि ।' अकरणि = आक्रोशनम् । अजननि = आक्रोशनम् । अजीवनि = शाप (अजीवनिस्ते शठ भूयात् ) क्तिन् यथा—कृति = करणम् । गति = गमनम् । भूति = भवनम् । 'ण्वु' इति ण्वुल्ण्वुचो सामान्यग्रहणम् । 'रोगाख्यायां ण्वुल् बहुलम् ।' प्रच्छर्दिका = वमिरोग । प्रवाहिका = सग्रणीरोग । 'धात्वर्थनिर्देशे ण्वुल् वक्तव्य ।' आसिका = आसनम् । शायिका = शयनम् । 'पर्यायार्हर्णोत्पत्तिषु ण्वुच् ।' शायिका । भवत शायिका । इक्षुभक्षिका । भवानिक्षुभक्षिकामर्हति । 'कर्मव्यतिहारे णच् स्त्रियाम् ।' 'णच स्त्रियामञ् ।' स्वार्थिक. (ङीप्) । व्यावक्रोशी = परम्परा-क्रोशनम् । व्यावहासी = यात्युक्षी = जलक्रीडा । 'व्रजयजोर्भावे क्यप् ।' व्रज्या = पर्य्यटनम् । इज्या = अर्चा । 'सञ्ज्ञायां समजनिषद०' इति क्यप् । समज्या = सभा । निषद्या = आपणम् । विद्या = शास्त्रम् । 'स्त्रीभावादौ' इति किम् । 'वद सुपि क्यप् च ।' ब्रह्मोद्यम् = ब्रह्मवद्यम् । मृषोद्यम् = मिथ्यावादी । 'भुवो भावे क्यप् ।' ब्रह्मभूयम् = मोक्ष । 'ण्यासश्रन्थो युच् ।' कारणा = यातना । कामना = इच्छा । आसना = स्थिति । 'विभाषाऽऽख्यानपरिप्रश्नयोरिञ्च ।' वापि = वापिका । वासि. = कुठारभेद । कारि = क्रिया । गणि = गणनम, सख्यानम् । का त्व कारि गणि वा अकार्षीः । सर्वा कारि गणि वाऽकार्षम् । 'इञ् उपलक्षणार्थत्वादिण् इक् च ।' 'इणजादिभ्य ।' अजनमाजि = सग्राम । 'इक् कृष्यादिभ्य ।' कृषि = कर्षणम् । "खेती" इति लोके । 'षिद्भिदादिभ्योऽङ् ।' पचा = पाक । त्रपा = लज्जा । भिदा = भेद, भेदनम् । छिदा = छेदनम् । 'अप्रत्ययात् ।' चिकीर्षा = कर्तुमिच्छा । पुत्रीया = पुत्र्यम् । 'गुरोश्च हल ।' ईहा = चेष्टा, वाञ्छा । ऊहा = अध्याहृति । 'ग्ला-म्ला-ज्या-हा-भ्यो नि ।' ग्लानि = बल-हीनता । म्लानि = कान्तिक्षय । ज्यानि = जीर्णम् । हानि. = अपचय., क्षति । 'कृञ श च ।' क्रिया = करणम्, चेष्टा । इच्छा = वाञ्छा । इति भानुजदीक्षितमहेश्वरौ—(अम० सु० व्या० पृ० ४५० पं० ५ त) (अम० अमरवि० व्या० पृ० ३५, प० १० त) ।

उणादिषु नि-ऊ-री'श्च ङ्या'ऽऽबू'ङन्तं चलं स्थिरम् ।
तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा ण दिक् ॥

अस्य व्याख्या—

उणादिष्विति । उणादिषु उणादिप्रत्ययान्तेषु ये नि॰, ऊ, ई एते त्रयः स्त्रीलिङ्गा भवन्ति । 'वीज्याज्वरिभ्यो नि. ।' वेणी = केशबन्ध । प्रवेणी = कुथा, परिस्तोम॰, वेणी च । ज्यानि = जीर्णम्, हानि, तटिनी च । जूर्णि॰ = ज्वररोग । 'सृवृषिभ्या कित् ।' सृणि = अङ्कुश । 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ।' श्रेणि = पक्ति । श्रोणि = कटि॰ । द्रोणि — नौकाप्रभेद । 'उणादिष्वनि' इति पाठान्तरम् । 'अर्तिसृधृधम्यवितृभ्योऽनि ।' यथा—धरणि = पृथ्वी । धमनि = नाडी । सरणि = मार्ग. । 'कृषिचमितनिधनिसर्जिस्वर्जिभ्य ऊ ।' यथा—कर्षू. = जीविका, अल्पनदी च । चमू = सेना । 'अवितृस्तृतन्त्रिभ्य ई ।' अवी = रजोवती स्त्री । तरी = नौका । स्तरी = धूम॰ । तन्त्री = वीणागुण. । ङ्याबूङन्तमिति ङी च आप् च ऊङ् च अन्ते यस्य तच्चल जङ्गम, स्थिरं स्थावर वा योषिति भवति । जङ्गम यथा—नारी = स्त्री, अबला, वनिता । कदली = मृगभेद॰, रम्भा, वैजयन्ती च । कन्दली = गम्भीरध्वनिः, मृगभेद ।

---

पाणिनीयेऽपि—(ईकारान्तश्च) ॥ स्त्रिया स्यात् । लक्ष्मी = विष्णुपत्नी । सि॰ कौ॰ पृ॰ ३९७ सू॰ १० । (३, २) (ऊङाबन्तश्च) ॥ स्त्रिया स्यात् । ऊङ्प्रत्ययान्त.—कुरूः = कुरो पत्नी । गुरू = गुरोः स्त्री । आप्प्रत्ययान्त॰—विद्या = शास्त्रम् । चतुर्दश, अष्टादश वा । सि॰ कौ॰ पृ॰ ३९७ सू॰ ११ । तत्र विशेष—(अजाद्यतष्टाप् ४ ।१। ४) । अजादीनाम्, अकारान्तस्य च, यद्वाच्य स्त्रीत्व तत्र द्योते टाप् स्यात । अजाद्युक्तिर्ङीपो, ङीपश्च, बाधनाय । अजा । अत॰—खट्वा । अजादिभि स्त्रीत्वस्य विशेषणान्नेह—पञ्चाजी । अत्रहि समासार्थसमाहारनिष्ठ स्त्रीत्वम्, न त्वजानिष्ठम् । अजा = माया, छागली च । एडका = मेषी । अश्वा = वडवा । चटका = चटकभार्या । पाका = बालिका । मूषिका = मूषिकभार्या । एषु जातिलक्षणो ङीष् प्राप्त । बाला = षोडशवर्षीया स्त्री । वत्सा = पुत्री । तर्णका च । होडा = बालिका । मन्दा = सङ्क्रान्तिविशेष । विलाता = । एषु-(वयसि प्रथमे)-इति ङीष् प्राप्तः । सि॰ कौ॰ पृ॰ ४५ । (सम्भस्त्राजिनशणपिण्डेभ्यः फलात्) ॥ सम्फला = । भस्त्रफला = औषधिविशेष । अजिनफला = । शणफला = । पिण्डफला— । ङ्यापोरिति ह्रस्व ॥ सि॰ कौ॰ पृ॰ ४५ प॰ २४ । (सदच्काण्डप्रान्तशतैकेभ्य पुष्पात्) । सत्पुष्पा = । प्राक्पुष्पा = । प्रत्यक्पुष्पा = । सि॰ कौ॰ पृ॰ ४६ प॰ १ । (शूद्रा चामहत्पूर्वा जाति) ॥ शूद्रा = शूद्रजातिः । पुंयोगे तु शूद्री = शूद्रस्य भार्या । अमहत्पूर्वा किम् । महाशूद्री—आभीरी । क्रुञ्चा—क्रौञ्चविहगी । वीणाभेदश्च । उष्णिहा— । देवविशा । ज्येष्ठा = ज्येष्ठस्य स्त्री । नक्षत्रविशेषश्च । कनिष्ठा = दुर्बलाङ्गुलि॰ । नायिकाभेदश्च । मध्यमा = दृष्टरजोनारी । मध्याङ्गुलिश्च । पुंयोगेऽपि । मध्यमा = मध्यमस्य भार्या । कोकिला = पिकभार्या (जातावपि) । अमूला-अग्निशिखावृक्ष॰ । ओषधिविशेषजातिश्च । (मूलान्नञः) ॥ सि॰ कौ॰ पृ॰ ४६ प॰ ४ ।

सेनाभेदश्च । रमा = लक्ष्मी । गङ्गा = देवनदी । शिवा = गौरी, शृगाली च । ब्रह्मवधू = ब्राह्मणी । वामोरू = नारीविशेषा । वामौ सुन्दरौ ऊरू यस्या सा । करभोरू = उत्तमस्त्री विशेषणम् । करभ इव उरू यस्याः सा । स्थावर यथा—नाडी = धमनि , शिरा । कदली = रम्भा । "केला" इति लोके । खट्वा = पर्य्यङ्क । माला = माल्यम् । अलाबू: = तुम्बी । कर्कन्धू: = बदरीवृक्ष: । चरस्थिरग्रहण चिन्त्यप्रयोजनम् । अन्यस्य व्यवच्छेदस्याभावात् तच्छब्देनात्र मुष्टचादिक निर्दिश्यते । तेनायमर्थ । तन्मुष्चादिक प्रहण यदि क्रीडाया वर्त्तते तर्हि तस्मिन्नर्थे विहितो णप्रत्ययो योषिल्लिङ्गो भवति । 'तदस्यां प्रहरणमिति क्रीडाया ण' इति सूत्रात् । दिगित्यनेनोक्तोदाहरणोद्देश. । णस्य दिगुदाहरणम् । न तु परिगणनम् । तेन 'दाण्डा मौसलेति' चोदाहर्त्तव्यम् । मुष्टि प्रहणमस्या क्रीडाया मौष्टा = क्रीडाविशेष. । पाल्लव. प्रहणमस्या क्रीडाया पाल्लवा = क्रीडाविशेष: । दण्ड प्रहरणमस्या क्रीडायां दाण्डा = क्रीडाविशेष । मुसल. प्ररहरणमस्या क्रीडाया मौसला = क्रीडाविशेष । इति भानुजदीक्षित-महेश्वरौ—(अम० सु० व्या० पृ० ४५०, ४५१ पं० ३७ त ) (अम० अमर० व्या० पृ० ३५८ प० ६ त ) ।

**घञो ञ: सा क्रियाऽस्यां चेद्दाण्डपाता हि फाल्गुनी ।**
**श्यैनंपाता च मृगया तैलंपाता स्वधे–ति दिक् ॥**

अस्य व्याख्या—

घञ इति । सा (क्रीडा) घञन्तवाच्या । दण्डपातादिक्रियाऽस्यां फाल्गुन्यादिकायामित्यर्थे घञन्ताद्विहितो यो ञप्रत्यय स योषिति स्यात् । 'घञ साऽस्या क्रियेति ञ' इति सूत्रात् । उदाहरति—दण्डपातोऽस्या फाल्गुन्यां पूर्णिमातिथौ वर्तते दाण्डपाता = तिथिविशेष । फाल्गुनीपूर्णिमा । श्येनपातोऽस्या मृगयाया वर्त्तते श्यैनपाता = मृगया । "शिकार" इति लोके । 'श्येनतिलस्य पाते ञो' इति मुम् ।' तिलपातोऽस्यां स्वधाक्रियाया वर्तते तैलंपाता = स्वधा[1], पितृदानम् । 'पितृदाने स्वधा मतम् ।' इत्यमरमाला' इति—(अम० सु० व्या० पृ० ४५१ स्त० प० १७) वररुचिना तु 'स्वाधाक्रिया प्रवेणी' इति स्त्रीलिङ्गोक्ता । इति दिक् । उदाहरणम् । तेन मुसलपातोऽस्यां मौसलपाता भूमिरित्यादिसिद्धि ।

क्वचिद्देशे (वृन्दावनप्रभृतिषु) फाल्गुनपौर्णमास्या दण्डपातेन क्रीडा भवति' इति । दिगित्यनेन दाण्डपातादिकमुदाहरणमिति सूचितम् । इति—(अम० ना० लि० सु० व्या० पृ० ४५१ प० १४ त ) (अमरवि० व्या० पृ० ३५८ प० १४ त ) ।

---

(१) तथा च प्रयोग.—'नम स्वधायै स्वाहायै' इति दुर्गा० ।

स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षाऽपचये यदि ।' इति ।

अस्य व्याख्या—

स्त्रीति । यदि चेदल्पत्वे विवक्षा वक्तुमिच्छा स्यात्तदा मृणालीप्रभृति स्त्री स्यात् । यथा—अल्प मृणाल मृणाली=स्वल्पमृणालजाति । आदिना यथा—ह्रस्वो वशो वशी=मुरलीवाद्यम् । "वसरी" इति लोके । कर्णचतुष्टय च । गौरादित्वाद् ङीप् । एव कुम्भी—वारिपणी, जलपर्णी । "पुरइनि" इति लोके । प्रणाली=कृत्रिमाम्बुनिसरणमार्ग । "पनारी या पनारा" इति लोके । मुसली=तालमूली, शाखुपर्णी, गृहगोधिका च । छत्री=लघुच्छत्रम् । "छाता" इति लोके । । पटी=वस्त्रविशेष । "दुपटी" इति लोके । तटी=तीरम् । मठी=तपस्विना स्थानम्, कुटी । "झोपडी" इति लोके । 'मठी स्थाने तपस्विनाम् ।' इति—(वै० पृ० २९२ श्लो० ३९) । स्वल्पार्थवाचिन कन्प्रत्ययान्तशब्दास्तु प्रागुक्ता । काचिदिति किम् । ह्रस्वो वृक्षो 'वृक्षक' इत्यादि योषिति न भवति ।

अथाधुना स्रुगादीना गायत्र्यादिपर्य्यन्ताना द्वाविशतिशब्दाना स्त्रीलिङ्गतामाह हेम—(अभि० सं० लि० पृ० ३ श्लो० २४, २५, २६) ।

स्रुग्–गीति–लताभिदि ध्रुवा, विड–ऽनरि, वारि–घंटी–भवन्धयोः, ।
शल्य–ध्वनि–वाद्यभित्सु तुक्ष्वेडा, दुन्दुभि–रक्षाबिन्दुषु, ॥७॥
गृह्या शाखापुरे,ऽश्मन्तेऽन्तिका, कीला रताहतौ' ।
रज्जौ रश्मि,–र्यवादि–र्दोषादौ, गञ्जा सुरागृहे ॥८॥
अहम्पूर्विकादि,–र्वर्षा–मघा अप–कृत्तिका बहौ ।
वा तु जलौको–ऽप्सरस. सिकता–सुमन–समाः ॥९॥
गायत्र्यादय' इति ।

---

पाणिनीयेऽपि–(१) (दुन्दुभिरक्षेषु) ॥ अक्षेषु दुन्दुभि स्त्रिया स्यात् । दुन्दुभिः=पाशकषडङ्किता । अक्षेषु किम् । अय दुन्दुभि वाद्यविशेषोऽसुरो वेदःर्थे । सि० कौ० पृ० ३९७ सू० १४ ।

(२) (अप्सुमनस्समासिकतावर्षाणा बहुत्व च) ॥ अबादीना पञ्चाना स्त्री व स्यात्, बहुत्व च । इमा आप=जलम् । सुमनसः=पुष्पम् ।"स्त्रिय सुमनसः पुष्पम्" । "सुमना मालती जाति" । देववाची तु पुस्येव–"सुपर्वाण सुमनसः" । समाः सॅव्वसर. ।(समासमा विजायते) इयत्र "समाया समायाम्" इति भाष्याच्च । विभाषाप्राधेडिति सूत्रे "अप्रासाता सुमनसो" इति वृत्तिव्याख्याया हरदत्तोऽप्येवम् । बहुत्व प्रायिकम्–सिकताः=वालुका । "एका च सिकता तैलदाने असमर्था" इति अर्थवत्सूत्रे भाष्यप्रयोगात् । वर्षाः=वृष्टि । सि० कौ० पृ० ३९८ सू० २९ ।

(३) (अप्सराः स्त्रियाम्) ॥—अप्सरस । प्रायेणायं—बहुवचनान्तः । सि० कौ० पृ० ४०३ सू० १५४ ।

एषां व्याख्या—

स्रुगिति । गृह्येति । अहमिति । गायत्रीति च । ध्रुवा, विट्, वारिः, क्ष्वेडा, दुन्दुभिः, गृह्या, अन्तिका, कीला, रश्मिः, यवादिः, गञ्जा, अहम्पूर्विकादिरित्येते शब्दाः स्रुगाद्यर्थेषु स्त्रीलिङ्गाः स्युः । वर्षा, मघाः, आपः, कृत्तिकाश्चेत्येते शब्दा बहौ भूम्नि योषिल्लिङ्गाः स्युः । जलौकसः, अप्सरस, सिकताः, सुमनसः, समाश्चेत्येते शब्दास्तु वा=विकल्पेन भूम्नि स्त्रीलिङ्गाः स्युः । गायत्र्यादयोऽपि स्त्रियां स्यादित्यन्वय । ध्रुवेति । ध्रुवा=स्रुग्, यज्ञपात्रभेद. । गीतिः, गीतभेद. । लताभिद्, मूर्वा च । 'स्त्री मूर्वाऽऽड्यो शालपर्ण्यां गीतिस्रुग्भेदयो.' इति—(मे० पृ० १५८ श्लो० १४) विट्=विष्ठा, दुहिता, व्यापनं च । एष तु अनरि=न पुंसि, क्लीबस्त्रियोः स्यादित्यर्थः । वारिः=घटी, कलशी, इभबन्धः, गजबन्धनी च । 'वारिर्वाग्गजबन्धन्योः' इति—(मे० पृ० १२७ श्लो० ६७) । 'वारिर्घट्यां सरस्वत्यां गजबन्धनभुव्यपि ।' इति च—(अने० सं० पृ० ३७ श्लो० ४६७) । क्ष्वेडा=शल्यम्, वंशशलाका, ध्वनिः, सिंहनादः । वाद्यभिद्, वाद्यभेदश्च । 'क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति ।' इति—(मे० पृ० ४० श्लो० ५) । दुन्दुभि=अक्ष, पाशक. । "पासा" इति लोके । बिन्दवः, अक्षबिन्दुत्रिकद्वयं च । 'दुन्दुभिः पुमान् । वरुणे दैत्यभेर्योश्च, स्त्र्यक्षे बिन्दुत्रिकद्वये ।' इति (मे० पृ० १०७ श्लो० १६) । गृह्या=शाखापुरम्, शाखानगरम्, नगरासन्नस्थग्रामः । 'गृह्या शाखापुरं, गृह्या गृहासक्तमृगाः खगाः ।' इति—(नाना० र० मा० पृ० ४४ पं० ६) । 'गृह्यं गुदे ग्रन्थभेदे क्लीबं शाखापुरे स्त्रियाम् ।' इति च—(मे० पृ० ११४ श्लो० १९) । अन्तिका=अश्मन्तः, उद्धानम्, चुल्ली । "चुल्हा" इति लोके । 'स्त्री सातलौषधौ । चुल्ल्यां ज्येष्ठभगिन्यां, च' इति—(मे० पृ० ४ श्लो० ४४) । कीला=रताहति, रतहतिः, सुरतप्रहरणम्, रतौ प्रतिहतिविशेषः । यदाह वात्स्यायनः—कीला उरसि कर्तरी शिरसि विद्धाकपालयोरिति—(श० चिं० पृ० ६१० स्तं० १ प० १६) 'कीला हतारतौ ।' इति—(अने० ति० पृ० ११ श्लो० ६०) । 'स्त्रियां कफोणिनिर्घाते प्रहारे रतिसम्भवे ।' इति—(नाना० मं० पृ० ७८ पं० २३) । 'कीलाऽऽरतहतावपि' इति—(श० र० स० पृ० २९६ पं० ६) । 'कीला रताहतावपि ।' इति च—(अने० सं० पृ० ३९ श्लो० ४९२) । रश्मि.=रज्जुः, प्रग्रहः, अश्वरज्जुः । 'रश्मिर्घृणिप्रग्रहयोः' इति—(अने० सं० पृ० २९ श्लो० ३३७) । 'यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे' इति सूत्रोक्ता यवादय शब्दा दोषादयश्चार्थाः । यवा=दोषः । यवना=लिपिः । "पारसी" इति लोके । अरण्या=उरु । हिमा=महत्त्वम् । गञ्जा=सुरागृहम् । 'गञ्जा खनौ सुरागृहे ।' इति—(मे० पृ० ३० श्लो० ८) । अहम्पूर्विका=अभिमानविशेष., अहमहमिका, परस्पराऽहङ्कारः । अहम्पूर्वमहम्पूर्वमिति- योधाना धावनक्रिया च । 'अहम्पूर्वमहम्पूर्वमित्यहम्पूर्विका स्त्रियाम् ।'

तत्र तु विशेषः—(छदि स्त्रियामेव) ॥ इय—छदि —छाद्यते अनेनेति । सि० कौ० पृ० ४०२ सू० १३७ ।

इति––(अम० ना० लिं० पृ० २९७ श्लो० १०१) । वर्षा·=(बहौ भूम्नि) प्रावृट्काल·, वर्षर्त्तु । 'प्रावृट्काले स्त्रियां भूम्नि' इति––(मे० पृ० १६७ श्लो० २४) । मघा = (भूम्नि) नक्षत्रविशेष, दशमनक्षत्रम् । 'मघा मघी च नक्षत्रे धान्यभेदे यथाक्रमम् ।' इति—(मे० पृ० २६ श्लो० ३) । आप =(भूम्नि) जलम् । 'आप: स्त्री भूम्नि वार्वारि' इति––(अम० ना० लि० पृ० ९३ श्लो० ३) । कृत्तिका = (भूम्नि) नक्षत्रविशेष तृतीयनक्षत्रम् । 'कृत्तिका तारकान्तरे ।' इति— (श० र० स० पृ० १२ पं० ३) । जलौकस =(भूम्नि) रक्तपा, जलूका । 'रक्तपा तु जलौकाया स्त्रिया, भूम्नि जलौकस ।' इति—(अम० ना० लि० पृ० १०१ श्लो० २२) । अप्सरस = (भूम्नि) देवयोनिविशेष, देवकन्या । 'स्त्रियां बहुष्वप्सरस' इति––(अम० ना० लि० पृ० २२ श्लो० ५२) । 'स्त्रिया बहुष्वप्सरस. स्यादेकत्वेऽप्सरा अपि ।' इति शब्दार्णव· । इति––(अ० सु० व्या० पृ० २२ स्त० १ पं० १६) । 'अप्सरा' इति भाष्यप्रयोगोऽपि । सिकता = (भूम्नि) बालुका । 'सिकता स्त्री सिकतिले, वालुकाया च भूमनि ।' इति—(श० र० स० पृ० १५६ प० ९३) । सुमनस =पुष्पम्, माल्ती च । ''चमेली'' इति लोके । ''स्त्रिय सुमनस पुष्पम्' इति––(अम० ना० लि० पृ० १३४ श्लो० १७) । 'भूम्नि स्त्रियां सुमनस:' इति रत्न (धरणि) कोष:' इति—(अम० सु० व्या० पृ० १३४ स्त० १ प० २३) 'स्त्रियां सुमनसो भूम्नि पुष्पे जातौ तु भेदत । विदुष्यपि यदा दृष्टस्तदा भेदेन शिष्यते ।' इति व्याडि: इति––(अम० सु० व्या० पृ० १५३ स्तं० १ प० ८) । अमरादेरेकत्वमपि । 'सुमना मालती जाति.' इति–(अम० ना० लि० पृ० १५३ श्लो० ७२) । 'सुमना. पुष्पमालत्यो. स्त्रिया, ना धीरदेवयो: ।' इति—(मे० पृ० १७४ श्लो० ६७) 'पुष्पं सुमना कुसुमम्' इति नाममाला इति—(अम० सु० व्या० पृ० १३४ स्त० १ पं० २५) । तथा च प्रयोग:—'वेश्या श्मशानसुमना इव वर्जनीया ।' इति शूद्रक:' इति—(अम० सु० व्या० टिप्प० पृ० १३४ स्तं १ पं० ४१) । 'सुमनायाश्च पत्रेण' इति सुश्रुतदर्शनाद् टाबन्तापि समा = (भुम्नि) सँव्वत्सर । 'बहुवचननिर्देशात्प्रायेणायं बहुवचनान्त:' इति ध्वनयति । क्वचिद्वचनान्तरमपि । 'समां समां विजायते' इति सूत्रात् । एकत्वेऽपि दृश्यते । एकत्वे लक्ष्यम्—'तृतीयस्या· समायास्तु समां समां विजायते ।' इति । 'समा समां विजायते' इत्यत्र 'निर्गतत्वं समाया.' इति । 'समायां समायामिति च च भाष्यादौ वाक्यदर्शनात् । 'समा वर्षं समं सर्वं साधु समं सदृक् ।' इति––(अने० समु० पृ० २१ श्लो० २२८) । 'समा सँव्वत्सरे स्त्रियाम् । सर्वसा (धा) धु (तु) समानेषु, सम स्यादभिधेयवत् ।' इति च––(मे० पृ० ११० श्लो० ३४, ३५) । गायत्र्यादय:=छन्दसां जातय: । ता यथा––गाय[६]त्री । उष्णि[७]क् (ह) । अनुष्टु[८]प् (भू) । बृह[९]ती । । प[१०]क्ति· । त्रिष्टु[११]प् (भ्) । जग[१२]ती । अतिज[१३]गती । शक्व[१४]री । अति[१५]शक्वरी । अ[१६]ष्टि. । अत्य[१७]ष्टि· । धृ[१८]ति: । अति[१९]धृति: । कृ[२०]ति: । प्रकृ[२१]ति: । आ[२२]कृति: । वि[२३]कृति· । सङ्कृ[२४]ति: । अभि[२५]कृति· ।

उत्कृतिश्चेति । गायत्री त्रिपदादेवीछन्दोभित्खदिरेषु च ।' इति--(मे० पृ० १३३ श्लो० ५०) । षडक्षरपदा गायत्री । प्रमुखपदेन उष्णिगनुष्टुब्बृहतीपक्तित्रिष्टुब्जगत्यतिजगतीशक्वरी-त्यादि एकाक्षरवृद्धया बोध्यम् ।' इति—(अम० सु० व्या० पृ० २५७ स्तं १ प० ५) ।

अथेदानी ङ्याबूङ्तमित्यादिनोक्तलिङ्गानामपि केषाञ्चिन्नाम्ना सुखेन लिङ्गज्ञानाय पृथक् पाठ कान्तादिक्रमेण तत्र कान्तादीन् गान्तपर्य्यन्तान् स्त्रीलिङ्गवाचकशब्दानाह हेमः--(अभि० सं० लि० पृ० ३ श्लो० २७ त) ।

······इष्टका बृहतिका संवर्त्तिका सञ्जिका-
दूषीके अपि पादुकाझिरुकया पर्यस्तिका मानिका ।
नीका कञ्चुलिकाऽऽल्लुका कलिकया राका पताका-ऽन्धिका
शूका पूपलिका त्रिका चविकयो-ल्का पञ्जिका पिण्डिका ॥१०॥
ध्रुवका क्षिपका कनीनिका
शम्बूका शिबिका गवेधुका ।
कणिका केका विपादिका
मिहिका यूका मक्षिका-ऽष्टका ॥११॥
कूर्चिका कूचिका टीका कोशिका कोणिको-र्म्मिका ।
जलौका प्राचिका धूका कालिका दीर्घिको-ष्ट्रिका ॥१२॥
शलाका वालुके-षीका विहङ्गिके-षिके उखा ।
परिखा विशिखा शाखा शिखा भेङ्गा सुरङ्गया ॥१३॥ इति

एषां व्याख्या

इष्टकेति । ध्रुवकेति । कूर्चिकेति । शलाकेति च । एत इष्टकादयो झिरुकया, कलिकया, चविकया, सुरङ्गया च सह स्त्रीलिङ्गाः स्युः । इष्टका=मृद्विकारविशेषः । "ईंट" इति लोके । 'झरुका त्विष्टकायाम्' इति—(वै० पृ० १२५ श्लो० २५) । बृहतिका= उत्तरीयम्, उपरिवस्त्राम् । "उपर्ना" इति लोके । कण्टकारी च । 'विद्याद् बृहतिकाभिख्या-मूरुवस्त्रप्रभेदयो. ।' इति—(वि० प्र० पृ० २० श्लो० २२८) । 'कण्टकार्य्यां बृहतिका' इति च--(श० र० स० पृ० ३९ श्लो० १७) । सवर्त्तिका=पद्मादीना नवदलम् । पद्मस्य केसर-समीपस्थदलं च । 'संवर्तिका नवदले' इति--(श० र० स० पृ० ४३ पं० १९) । सञ्जिका=

पाणिनीये पि-(१) (शलाका स्त्रिया नित्यम) ॥ नित्यग्रहणमन्येषा क्वचिद् व्यभिचार ज्ञापयति । शलाका=चित्रकूर्चिका । सि० कौ० पृ० ३९८ सू० ३४ ।

परिच्छद । "सजावट" इति लोके। सज्जीकरणं च। "साज" इति, "सामान" इति च लोके । दूत्रिका=तूलिका, नेत्रमल च। 'दूत्रिका तूलिकाया च मले स्याल्लोचनस्य च ।' इति--(मे० पृ० ९ श्लो० १०६) । पादुका=पादत्राणम्, चर्मादिनिर्मितपादत्राणम्, पादरक्षिणी । "जूता" इति, "खड़ाऊँ" इति च लोके । 'पादुका पादरक्षिण्याम्' इति--(श० र० स० पृ० २१ प० १) झिहका=मृद्विकारविशेष., इष्टका, झरुका । "ईंट" इति लोके । पर्य्यस्तिका=खट्वा, परिकरः, पर्य्यक । "खाट" इति, "पलग" इति च लोके। 'पर्य्यस्तिका परिकरे' इति--(श० र० स० पृ० ३८ प० १२) । मानिका=शराब, कुडवद्वयपरिमाणम्, चतु षष्टितोलकम् । "सेर" इति लोके। इति वैद्यक परिभाषा । मतान्तरे द्रोणचतुष्टयम्, मद्यं च। 'माणिका' इत्यपि । नीका=क्षेत्रसिञ्चनार्थ जलप्रणाली। कञ्चुलिका=कञ्चुक, स्त्रीणामङ्गरक्षिणी, अर्द्धचोलक, कूर्पासश्च । "काँचुली" इति, "कुर्ती" इति च प्रसिद्धम्। 'कञ्चुलिका तु कूर्पासे' इति--(श० र० स० पृ० ३३ प० १७) । 'कूर्पासस्त्वर्द्धचोलक ।' इति च--(हा० व० पृ० ४०६ श्लो० ९७) । आल्लुका= । कलिका=कोरक, मानविशेष, अंशस्य षष्टिभागश्च । 'कलिका कोरके मता ।' इति--(श० र० स० पृ० १० प० ६) । राका=पौर्णमासी, सम्पूर्णेन्दुतिथि, नवरजा. कन्या च । 'राका दृष्टरजाः कन्या' इति--(हा० व० पृ० ४०२ श्लो० ३०) । 'राका नवरजोनार्य्यां पूर्णचन्द्रतिथावपि ।' इति--(नाना० र० मा० पृ० १२ प० ७) । पताका=वैजयन्ती, सौभाग्यम्, नाटकाङ्गं च । 'सौभाग्येऽपि पताका स्यात्' इति--(त्रि० शे० पृ० ३१७ श्लो० २९) । 'पताका वैजयन्त्यां च सौभाग्यनाटकाङ्गयोः ।' इति च--(मे० पृ० १० श्लो० ११५) । अन्धिका=द्यूतभेद, रात्रिश्च । 'अन्धिका द्यूतभेदे च रजन्यामपि योषिति ।' इति--(मे० पृ० ४ श्लो० ४६) । शूका=शूकशिम्बी । हृल्लेखश्च। 'शूका हृल्लेखे' इति-(अने० सं० पृ० ४ श्लो० २१) । पूपलिका=पूपली, पूपालिका । "माल पूआ" इति । "पुआ" इति च लोके । त्रिका=कूपनेमि. । 'नेमौ कूपस्य च त्रिका ।' इति--(ना० र० मा० पृ० १२ पं० २) । चविका=गजपिप्पली । "चव्य" इति लोके । 'चव्या कोला च चविका चव्य कुञ्जरपिप्पली ।' इति हृद्‍चन्द्र.--इति-(अम० सु० व्या० पृ० १६१ पं० २३) । 'चव्या कोलाऽथ चविका श्रेयसी गजपिप्पली । च्यवना कोलवल्ली तु चव्य कुञ्जरपिप्पली ।' इति च चन्द्रनन्दन' इति--(अम० सु० व्या० पृ० १६१ प० २४) । उल्का=आलातम्, अङ्गारम्, ज्वाला, अग्निशिखा, विद्युत्, उत्पातश्च । 'उल्का तु गदिताऽऽलाते विद्युदुत्पातयोरपि ।' इति--(श० र० स० पृ० ३ पं० ६) । पञ्जिका=टीका, व्याख्या, पदभञ्जिका, तूलनालिका च । 'पदभञ्जिकापञ्जिका यां स्यात्' इति (श० र०स०पृ० ४९ श्लो १९)। पिण्डिका अवयवान्तरम्, जंघामांसम् । 'पिण्डिकाऽवयवान्तरे ।' इति--(श० र० स० पृ० २१ पं० ८) ।

'पिण्डिका पिण्डके जघामासे स्यात्' इति च—(ना० र० मा० पृ० ६३ प० १९)। ध्रुवका=आह्वा, धुवका च। क्षिपका=योधा, योद्ध्री, युद्धकर्त्री। कनीनिका=अक्ष्णस्तारकम्। कनिष्ठाङ्गुलिश्च। 'कनीनिका तारकेऽक्ष्ण स्यात्कनिष्ठाङ्गुलावपि।' इति—(मे० पृ० १५ श्लो० १८१)। शम्बूका=जलजन्तुविशेष, जलशुक्तिश्च। 'जलजन्तुविशेषे च शम्बूका न नपुसके।' इति मेदिनेर्द्विलिङ्गता। 'शम्बूका जलशुक्तिपु।' इति च—(श० र० स० पृ० २८ प० १६)। शिबिका=याप्ययानम्, नरवाह्यकम्। ''डण्डी'' ''झपान'' ''डोला'' ''पालकी'' ''चौपाला'' इति च लोके बहुविधं प्रसिद्धम्। 'शिबिका नरवाह्यके।' इति—श० र० स० पृ० २९ प० ६)। 'गवेधुका=बीजभेद, तृणधान्यम्, नागबला च। 'गवेधुका बीजभेदे' इति (श० र० स० पृ० ३५ प० १५)। कणिका=परमाणु., अग्निमन्थ-वृक्षश्च। 'कणिका सूक्ष्मवस्तुनि। अग्निमन्थे' इति—(अने० स० पृ० ५१ श्लो० १९)। 'कणिका कथ्यतेऽत्यन्तसूक्ष्मवस्त्वग्निमन्थयो।' इति च—(वि० प्र० पृ० १५ श्लो० १५९)। केका=मयूरवाक्। केका मयूरवाचि च।' इति—(श० र० स० पृ० ४ प० ३)। विपादिका= रोगविशेष, पादस्फोट। ''बिवाई'' इति लोके। अय कुष्ठरोगप्रभेद.। 'पादस्फोटे विपादिका।' इति—(श० र० स० पृ० ४२ प० १४)। मिहिका=हिमम्। 'महिका मिहिके हिमे।' इति—(श० र० स० पृ० २३ प० १५)। यूका=क्षुद्रजन्तुविशेष, केशकीटः, स्वेदज,, षट्पद। ''जूँ'' इति लोके। यादवस्तु पुसीत्याह—'यूकस्तु शिरसि क्रिमि.।' इति—(वै० पृ० १५१ श्लो० ३८)। मक्षिका=कीटविशेष गन्धलोलुपा, वमनीया। ''मक्खी'' इति लोके। 'भम्भराली तु मक्षिका।' इति—(वै० पृ० २९ श्लो० ४४)। अष्टका=श्राद्धभेद, पौषादिमासत्रयाणा कृष्णाष्टम्या श्राद्धक्रियाविशेष। कूर्चिका=सूचिका। क्षीरविकृति, तूलिका च। 'कूर्चिका तूलिकायां स्यात्सूचिकाया च कुड्मले। कपाटोद्घाटने क्षीरविकृतावपि योषिति।' इति—(श० र० स० पृ० ११ प० १८)। कूचिका=कूञ्चिका, चित्रलेखनी च। 'कूचिका चित्रलेखन्यां कूचिकाया तु कूचिका।' इति—(श० र० स० पृ० १२ प० १)। टीका=विषमपदव्याख्या, ग्रन्थार्थवर्णनम्। 'टीका ग्रन्थार्थव-र्णने।' इति—(श० र० स० पृ० ४ श्लो० ९)। कोशिका=पिष्टपचनम् पत्रस्य शुङ्गा च। 'ऋषी चं पिष्टपचनं मल्लो मल्ली च कोशिका[illegible]—(वै० पृ० १६३ श्लो० ५७)। पर्णं बर्हं पतत्र च त्रयी शुङ्गास्य कोशिका।' इति च—(वै० पृ० ४६ श्लो० ३३)। कोणिका=वीणाङ्ग (ङ्क) म्। 'वीणाङ्गे (ङ्के) कोणिका मता।' इति—(श० र० स० पृ० १२ श्लो० १०)। ऊर्मिका=तरङ्ग, वस्त्रभङ्ग, अङ्गुलीयं च। 'ऊर्मिका त्व (चा) ङ्गुलीये स्याद्वस्त्रभङ्गतरङ्गयो.।' इति—(मे० पृ० ५ श्लो० ५३)। जलौका=रक्तपा। 'रक्तपा तु जलौकायां स्त्रियां, भूम्नि जलौकस:।' इति—(अम० ना० लि० पृ० १०१ श्लो० २२)।

जलमोकोऽस्या । 'ओक उच के ।' इति निपातितोऽदन्त ओकशब्द । सान्तोऽपि । 'जलोरगी जलोका तु जलौका च जलौकसि' इति ससारावर्ताद् 'बहुवचनं प्रायिकम्' इति—(अम० सु० व्या० पृ० १०१ प० ८) 'जलौकापि जलोका स्याज्जलूका जलजन्तुका ।' इति च तारपाल ।' इति—(अम० सु० व्या० पृ० १०१ प० ९, १०) । प्राचिका = पक्षिभेदः, श्येना । 'श्येनाया प्राचिका' इति—(वै० पृ० २७ श्लो० २०) 'वनमक्षिका' इति मुकुट. । धूका = । कालिका = मेघजालम्, नवाब्द, चण्डिका, काकी च । 'मेघजाले च कालिका ।' इति—(अम० ना लिं० पृ० ३९९ श्लो० १५) । 'रोमावली मेघमालाकरटीषु च कालिका ।' इति—(हा० व० पृ० ४०८ श्लो० ५१) । 'कालिका चण्डिकाभेदे कार्ष्ण्यं (त्स्न्यं) वृश्चिकपत्रयो । क्रमदेयवस्तुमूल्ये धूसरीनवमेघयो ॥ पटोलशाखारोमालीमासीकाकीशिवासु च । मेघावलौ च' इति—(मे० पृ० ६ श्लो० ६६, ६७) । 'धूसरीयोगिनीभेदोमाननवाब्देषु कालिका । क्रमदेयवस्तुमूल्ये कार्ष्ण्ये काक्या घनेषु च ।' इति च रभस इति—(अम० सु० व्या० पृ० ३९९ प० १२, १३, १४) । दीर्घिका = वापिका, पुष्करिणी । 'दीर्घिकाख्या पुष्करिण्याम्' इति—(श० र० स० पृ० प० ) । 'वापी तु दीर्घिका ।' इति च—(अम० ना० लिं० पृ० १०४ श्लो० २८) । उष्ट्रिका = मृत्तिकाभाण्डभेदः, उष्ट्रस्त्री । 'मृद्भाण्डेऽप्युष्ट्रिका भवेत् ।' इति—(हा० व० पृ० ४०८ श्लो० ६७) । 'उष्ट्रिका मृत्तिकाभाण्डभेदेऽपि करभस्त्रियाम् ।' इति च—(मे० पृ० ५ श्लो० ५२) । शलाका = कामः, शल्य, शारिका, शल्लकी च । 'शलाका शल्यमदनशारिकाशल्लकीषु च ।' इति (मे० पृ० १३ श्लो० १६१) । बालुका = सिकता । 'बालुका सिकतासु स्यात् ।' इति—(मे० पृ० ११ श्लो० १३२) । 'वालुकापि' 'वालुका सिकताया स्यात्' इति च—श० र० स० पृ० २८ प० १) । ईषिका = शलाकाभेद, वीरणादिशलाका, तूलिका । ''सीक'' इति, ''सलाई'' इति, ''तुली'' इति च लोके । अक्षिकूटकम्, गजचक्षुर्गोलकम् । काश., मुञ्जामध्यवर्तितृणम्, दर्भशलाका च । 'इषीका तूलिका समे ।' इति—(वै० पृ० ६४ श्लो० २३५) । 'इषीका त्वक्षिकूटकम् ।' इति च—(अम० ना० लिं० पृ० २७७ श्लो० ३८) । विहङ्गिका = भारयष्टि । ''बहँगी'' इति लोके । 'भारयष्टौ विहङ्गिका ।' इति—(श० र० स० पृ० ४२ प० ३) । इषिका = काश., तूलिका, गजाक्षिगोलकं च । 'तथा काशे मतेषिका ।' इति—(श० र० स० पृ० ८ प० ८)। ''ईषिका'' ''ईषीका'' चेत्यपि । 'ईषीका स्यादिषीकापि' इति द्विरूपकोश.' इति—(श० चि० पृ० ३३२ स्तं० १

(१) तथा च प्रयोग.—'सोऽभिमंत्र्यशरेषीकामीषिकास्त्रेण वीर्य्यवान् । काक तमभि सन्धाय ससर्ज पुरुषर्षभ.॥' इति रामायणम्—इति (श० चि० पृ० ३३२ प० १८, १९ ।

पं० २६) । "एषिका" इत्यपि । 'एषिका तूलिका समे ।' इति—(अम० ना० लि० पृ० ३४८ श्लो० ३२) उखा=पिठरम्, रन्धनस्थाली । "हाँडी" "भरथिया" "भड्डू" इति च लोके । कृष्णवधूश्च । 'उखा कृष्णवध्वां निगद्यते ।' इति—(श० र० स० पृ० ५३ पं० १०) । परिखा=सालवेष्टनम्, सर्वत· खेयम्, राजधान्यादीनां खातरूपवेष्टनम् । "खाई" इति लोके । 'परिखा सालवेष्टनम्' इति (श० र० स० पृ० ५५ प० ८) । विशिखा खनित्री, रथ्या, नलिका च । 'विशिखा तु निगद्यते । खनित्र्यामपि रथ्यायां नलिकायामपि क्वचित् ।' इति—(श० र० स० पृ० ५५ प० १०) । शाखा=द्रुमाङ्गम्, वेदभागश्च 'शाखा पक्षान्तरे बाहौ वेदभागद्रुमाङ्गयो: ।' इति—(मे० पृ० २० श्लो० ५) । शिखा= शाखा, शिफा, बर्हिचूडा च । 'शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके ।। चूडामात्रे शिखाया च ज्वालाया प्रपदेऽपि च ।' इति—(मे० पृ० २० श्लो० ६) भङ्गा=शणाख्य-सस्यान्तरम्, मातुलानी, विजया । "भाग" इति लोके । त्रिवृवृता च । 'भङ्गा सस्यान्तरे स्त्रियाम् ।' इति—(मे० पृ० २२ श्लो० ११) । 'भङ्गा सस्यं सणाह्वयम् ।' इति (अने० ध्व० म० पृ० २० श्लो० १७४) । सुरङ्गा=विवरविशेष. । "सुरङ्ग" इति ख्यात. । 'सन्धि सुरङ्गा' इति—(त्रि० शे० पृ० ३०५ श्लो० ९) । अमरोऽपि—(अम० ना० लि० पृ० ४५१ श्लो० ७, ८) ।

लङ्का शेफालिका टीका धातकी पञ्जिकाऽऽढकी ।।
सिध्रका सारिका हिक्का प्राचिको-ल्का पिपीलिका ।
तिन्दुकी कणिका भङ्गि सुरङ्गा' इति ।

एतयो र्व्याख्या—

लङ्केति । एते लङ्कादय सुरङ्गान्ता शब्दा: योषिल्लिङ्गा भवन्ति । लङ्का=रक्षसा राजधानी, धान्यविशेषश्च । "काला चना" इति लोके । 'लङ्का रक्षपुरीशाखाशाकिनी-कुलटासु च ।' इति—(मे० पृ० ३ श्लो० ३३) । 'लङ्का रसाली त्रिपुटी कलाया रूक्षणा-त्मिका ।' इति हरिचरणसेन—(पर्य्यायमुक्तावल्यां पृ० ३१ पं० ५) । शेफालिका= पुष्पभेद·, वृक्षभेदश्च । स तु "निर्गुण्डी" इति प्रसिद्ध । 'शेफालिका तु निर्गुण्ड्याम्' इति— (श० र० स० पृ० ४३ पं० १६) । धातकी=वृक्षभेद । "धायटी" इति प्रसिद्धा । 'धातकी तरुभेदे स्यात्' इति—(श० र० स० पृ० १९ पं० ८) । आढकी=तुवरी । "तूर" इति प्रसिद्धा । 'तुवर्य्यामाढकी मता ।' इति—(श० र० स० पृ० ७ प० १७) सिध्रका=वृक्ष-भेद: । "सीध" इति प्रसिद्ध: । 'सिद्धवृक्षस्तु सिध्रका (क:)' इति माधवकर.—(पर्य्यायरत्न-

मालायां पृ० ३१ पं० ४) । सारिका = पक्षिभेद । ''सालुकी'' इति प्रसिद्धा । 'वरण्डा चित्रपादा च चित्रनेत्रा च सारिका ।' इति—(हा० व० पृ० ४०० श्लो० ८९) । 'सारिका मधुरालापा दूती मेधाविनी च सा।' इति—(रा० नि० पृ० २७७ श्लो० ४७२) । 'शारिका' इत्यपि । हिक्वा = स्वरभेद , उर्ध्वे वातप्रवृत्तौ शब्दविशेष । ''उचकी'' इति प्रसिद्ध । पक्षिभेद', पेचिका च । 'पेचिका पुन ॥ उलूकचेटि हिक्वा स्यात्कनकाक्षी च पिङ्गला ।' इति—(वै० पृ० २७ श्लो० २१) । 'हिक्का हेक्का च हिक्किका ।' इति च—(वै० पृ० १८३ श्लो० १२७) । पिपीलिका = कीटभेद । ''मुंगी'' इति प्रसिद्धा । 'पिपीलिका तु हारी स्यात्' इति—(त्रि० शे० पृ० २८८ श्लो० २७) । 'शनैर्यीति पिपीलक ।' इति पुस्त्वमपि इति क्षरिस्वामी—(अम० सु० व्या० पृ० ४५१ स्त २ प० ३२) । तिन्दुकी = वृक्षभेदः । ''टेभुरणी'' इति प्रसिद्धा । 'तिन्दुको वृक्षभेदे स्यात्' इति-(ग० र० स० पृ० १८ श्लो० २) । भङ्गिः = कौटिल्यभेद , विच्छित्तिर्वा । 'व्याजच्छलनिभे भङ्गिर्वैदग्धीभनिमीलिका ।' इति रभस, इति—(अम० सु० व्या० पृ० ४५२ स्तं १ प० ३,४) । शेष प्राग्वत् ।

दुर्गसिंहस्तु क्रमरहितान् कान्तादीन् गान्तान्तान् स्त्रीलिङ्गवाचकशब्दानाह—(दु० लि० पृ० २ श्लो० ३, ४, ५) ।

नवमालिका बलाका गवेधुको–ल्का कृकाटिका यूका ।
शेफालिका शलाका हसन्तिका हसनिका केका ॥
झिरुका लङ्का स्पृक्का करुणेषीका च वालुके–ष्टकया ।
त्विट् पुत्तिका पताकाऽथ मालिका मानिका नाडिः ॥
शाखा शिखा विशाखा परिखा रेखा सुरङ्गया' इति ।

अनयो सार्द्धश्लोकद्वयो र्व्याख्या—

नवमालिकेति । भिरुकेति । शाखेति च । एते नवमालिकादय. सुरङ्गान्ता शब्दा इष्टकया सुरङ्गया च सह स्त्रीलिङ्गा भवन्ति । नवमालिका = पुष्पविशेष', नवमल्लिका, ग्रीष्मोद्भवा, सप्तला । ''नेवारा'' इति । 'नेवारी'' इति च लोके । 'कुमारिका ग्रीष्मभवा सुगन्धा वनमालिका ।' इति—(प० र० मा० पृ० १६ प० १२) । 'अथ सप्तलायां तु सप्तला नवमल्लिका ।' इति—(रा० नि० पृ० ४२५ श्लो० ४२) । बलाका = पक्षिविशेषः, बकभेद' । 'बलाका बिसकण्ठिका ।' इति—(अम० ना० लि० पृ० १९६ श्लो० २५) । 'बलाका विषकण्ठी स्याच्छुष्काङ्गी दीर्घकन्धरा ।' इति—(रा० नि० पृ० ४०५ श्लो० २१) ।

'बलाका वर्हिगश्चैव मेधानन्द-प्रकीर्तित ।' इति च--(रा० नि० पृ० ४२३ श्लो० २) । कृकाटिका = शिरोधरैकदेश, ग्रीवायामुन्नतभाग । "घाटी" इति ख्यात । ग्रीवापश्चाद्भाग इति स्वामिमुकुटौ । 'अवटुर्घाटा कृकाटिका ।' इति--(अम० ना० लि० पृ० २३३ श्लो० ८८) । 'अवटस्तु शिर पश्चात्सन्धिर्घाटा कृकाटिका ।' इति च--(रा० नि० पृ० ३९७ श्लो० २७) । शेफालिका = लतासमुदायविशेष, तत्पुष्पम्, कृष्णपुष्पा, निर्गुण्डी च । "न्यवारी" इति ख्याता । 'शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ।।' इति—(अम० ना० लि० पृ० १५२ श्लोकः ७०) । हसन्तिका, हसनिका च द्वेऽप्यङ्गारशकट्यौ । "अङ्गेठी" "बोरसी" "बिरौसी" "बरौसिया" इति च लोके । 'अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि । हसन्यपि' इति—(अम० ना० लि० पृ० ३११ श्लो० २९) । 'हसन्तिकाऽङ्गारधान्याम्' इति च—(श० र० स० पृ० ४५ प० ५) । स्पृक्का = सुगन्धिद्रव्यविशेष., शाकभेदः, पृक्का । "अस्यर" "अस्परक" "विडारशाक" इति च लोके । 'मरुन्माला तु पिशुना स्पृक्का देवी लता लघु ।' इति—(अम० ना० लि० पृ० १७३ श्लो० १३३) स्पृक्का तु ब्राह्मणी देवी' इति वाचस्पति ' इति—(अम० सु० व्या० पृ० १७३ स्त० २ पं० १७) । 'मता स्पृक्कौषधान्तरे ।' इति--(श० र० स० पृ० ६ प० ५) 'पृक्का' इत्यपि । 'पृक्का च महिला वधू ।' इति--(त्रि० शे० पृ० ३४६ श्लो० २२३) । करुणा = कृपा । 'करुणो रस-वृक्षयो । करुणा तु कृपायां स्यात्' इति—(अने० सं० पृ० ६५ श्लो० २०५) । त्विट् = दीप्ति, शोभा, वाक् च । 'त्विट् शोभापि' इति—(अम० ना० लिं० पृ० ४३७ श्लो० २२५) । 'कान्तौ वाचि रुचौ त्विट् स्त्री' इति च रभस ' इति—(अम० सु० व्या० पृ० ४३७ स्त० १ प० १३) । पुत्तिका = मधुमक्षिकाविशेष. । 'पतङ्गिका पुत्तिका स्यात्' इति--(अम० ना० लिं० पृ० १९७ श्लो० २७) । अथानन्तरम् । मालिका = पंक्ति., पुष्पविशेष, गृहविशेषः, मद्य च । 'आवलि पद्धति पंक्तिरालिर्लेखा च मालिका ।' इति--(वै० पृ० १८८ श्लो० २४) । 'सुगन्धा ग्रैष्मिका ताना मालिका नवमालिका ।' इति--(वै० पृ० ६० श्लो० १८६) । 'मेठो हर्म्यश्च मालिका ।' इति—(वै० पृ० १६१ श्लो० २९) । 'कपिशीका च मालिका ।' इति च--(त्रि० शे० ४०५ श्लोक ४२३) । नाडि = कन्दली, धमनिः, व्रणविशेषः, घटिका, शिरा च । 'नाडी नाले व्रणान्तरे । शिरायां गण्डदूर्वाया चर्य्याया कुहनस्य च । तथा षट्क्षणकालेऽपि' इति--(श० र० स० पृ० ९७ प० १९, २०, २१) । विशाखा = नक्षत्र

(१) तथा च प्रयोग —'हसन्ती च हसन्ती हसन्ती वामलोचनाम् । हेमन्ते ये न सेवन्ते ते नरा मन्दभागिनः ।' इति । हसन्ती = अङ्गारधानी । हसन्ती = मल्लिकाप्रभेदः । हसन्तीः स्त्री चेत्येतास्तिस्त्रो ये नरा हेमन्ते न सेवन्ते ते मन्दभागिन स्यु । .

विशेष, षोडशनक्षत्रम्, कठिल्लकश्च । 'विशाखा भे कठिल्लके ।' इति—(अने० सं० पृ० ५८ श्लो० ११३) । रेखा=आलि, आवलिः । 'रेखायामावलौ रेखा' इति—(वै० पृ० २२२ श्लोकः ३२) । शे० प्रा० ।

अथेदानीं जंघादीन् सुधापर्य्यन्तान् स्त्रीलिङ्गवाचकशब्दानाह हेम—(अभि० स० लिं० पृ० ३ श्लोक ३१, ३२, ३३, ३४) ।

जंघा चञ्चा कच्छा पिच्छा पिञ्जा गुञ्जा खजा प्रजा ।
झञ्झा घटा जटा घोण्टा पोटा भिस्सटया छटा ॥१४॥
विष्ठा मञ्जिष्ठया काष्ठा पाठा शुण्डा गुडा जडा ।
वेडा वितण्डया दाढा राढा रीढा च लीढया ॥१५॥
घृणो-र्णा वर्वणा स्थूणा दक्षिणा लिखिता लता ।
तृणता त्रिवृता त्रेता गीता सीता सिता चिता ॥१६॥
मुक्ता वार्त्ता लूता-ऽनन्ता प्रसृता मार्जिताऽमृता ।
कन्था मर्यादा गदे-क्षुगन्धा गोधा स्वधा सुधा ॥१७॥' इति ।

एषां व्याख्या—

जंघेति । विष्ठेति । घृणेति । मुक्तेति च । एते जघादय सुधान्ताः शब्दा भिस्सटया मञ्जिष्ठया वितण्डया लीढया च सह स्त्रीलिङ्गा भवन्ति । जंघा=अङ्गविशेष, जाघनी । 'प्रसृता जाघनी जंघा' इति—(वै० पृ० १७७ श्लोक ५८) । चञ्चा=तृणमयपुरुष. । "वजू" इति लोके । चञ्चा तु तृणनिर्मितपुरुषे ।' इति—(श० र० स० पृ० ७१ श्लो० ९) । कच्छा=चीरिका । "झिल्ली" इति, "मजीरा" इति च भाषायाम् । वाराही, गृष्टिभेषजम्, परिधानापराञ्चल. । "काछ" इति लोके । 'वाराही चीरिका कच्छा' इति—(त्रि० शे० पृ० ३२५ श्लो० ८०) । 'चीरिकाया च कच्छा च स्त्रियाम्' इति च—(श० र० स० पृ० ७४ श्लो० १०) । पिच्छा=ओदनमण्ड., शाल्मलिनिर्यास., मोचा, आश्रमपादपश्च । 'पिच्छा पूगच्छटाकोषे चोलिकाफणिलालयो' ।' इति—(हा० व० पृ० ४०७ श्लोकः २३०) । 'पिच्छा पूगच्छटाकोषमोचाशाल्मलिवेष्टके । भक्तसम्भूतमण्डे च पंक्तावश्वपदामये । स्त्रियाम्' इति च—(मे० पृ० २९ श्लोक ३) । पिञ्जा=तूलम्, हरिद्रा, तूलपिञ्जिका च । 'पिञ्जा तूल-हरिद्रयोः । पिञ्जा स्त्रियां मता तूलपिञ्जिकायां बुधोत्तमैः ।' इति—(श० र०स० पृ० ७६ श्लोकः १९, २०) गुञ्जा=रक्तिका । "रत्ती" इति—"घोंगची" इति च लोके । पटहः,

कलध्वनिश्च । 'गुञ्जोक्ता तु कलध्वनौ । पटहे काकचिञ्चायाम्' इति—(श० र० स० पृ० ७६ श्लोक ११) । खजा=मन्थ:, प्रहस्तश्च। 'खजा मन्थप्रहस्तयो ।' इति—(श० र० स० पृ० ७६ श्लोक ८) । प्रजा=लोक , जन:, सन्तानश्च । 'प्रजा जने च सन्ताने' इति—(श० र० स० पृ०७६ श्लोक. १९) । 'प्रजा तु जनपुत्रयो ।' इति—(वै० पृ० २२१ श्लोक. २३) । 'स्त्री तु प्रसूति: सन्तति प्रजा ।' इति च—(वै० पृ० १७६ श्लोक ४१) । झञ्झा=ध्वन्यन्तरम् अम्बुकणवृष्टिश्च । 'झञ्झा ध्वन्यन्तरे मता । अत्यम्बुकणवृष्टावप्युक्ता सा शब्दवेदिभि: ।' इति—(श० र० स० पृ० ८१ श्लोक ८) । घटा=गजसहृति , घटना, घटनम्, गोष्ठी, समूहश्च । 'घटा घटनगोष्टीभघटनासु च योषिति ।' इति—(मे० पृ० ३४ श्लो० १२) । जटा=केशबन्धविशेष., लग्नकच, मासी, वृक्षमूल च । 'जटा मास्यां लग्नकचे वृक्षमूले' इति—(श० र० स० पृ० ८४ प० १८) । घोण्टा=बदरी, पूगवृक्षश्च । 'घोण्टा तु बदरीपूगवृक्षयोश्च निगद्यते ।' इति—(श० र० स० पृ० ८४ प० १५) । पोटा= पुरुषलक्षणा स्त्री । 'पोटेति गदिता सद्भिर्या स्त्री पुरुषलक्षणा ।' इति—(श० र० स० पृ० ८५ प०१८) । भिस्सटा=दग्धिका, दग्धान्नम्, दग्धौदनम् । 'भिस्सटा दग्धिका' इति—(अम० ना० लि० पृ० ३१९ श्लोक. ४९) । 'दग्धान्न भिस्सिटा झिल्ली' इति च—(वै० पृ० १६५ श्लोक. ७७) । छटा=दीप्ति, परम्परा, संघातविशेषश्च । 'छटा समूहे कान्तौ च वेष्टने च' इति—(ना० म० पृ० २४ प०७३) । विष्ठा=पुरीषम् । 'वर्च्च. किट्ट पुरीषो विड् विष्ठोच्चार: शकृन्मलम् ।' इति—(प० र० मा० पृ० २६ प०२५) । मञ्जिष्ठा=रागद्रव्यविशेष. । "मँजीठ" इति लोके । 'मञ्जिष्ठा विकसा जिङ्गी' इति—(अम० ना० लि० पृ० १५९ श्लोक ९०) । काष्ठा=दिक्, दारुहरिद्रा, कालमानम्, प्रकर्ष , स्थानमात्र च । 'काष्ठा दारुहरिद्रायां कालमानप्रकर्षयो. ॥ स्थानमात्रे दिशि च स्त्री' इति—(मे० पृ० ३८, ३९ श्लोक. २, ३,) । 'काष्ठा निशा ककुप् काष्ठा काष्ठा प्रोक्ता वसुन्धरा । काष्ठा कालविशेष स्यात्काष्ठ दारु निगद्यते ॥' इति च—(अने० ध्व० मं० पृ० ८ श्लोक: ६९) पाठा=ओषधिविशेष , विद्धकर्णी । "पाठा" इति लोकेऽपि । 'पाठस्तु पठने ख्यातो, विद्धकर्ण्यां तु योषिति ।' इति—(मे० पृ० ३९ श्लोक. ७) । शुण्डा=हस्तिहस्त:, हाला, सुरा, पानागारञ्च । 'शुण्डापानगृहहस्तिहस्तसुरा च । अप्यम्बु-हस्तिनीवेश्यास्वपि' इति—(श० र० स० पृ० ९८ प० १४, १५) । गुडा—गुडिका, बृहद्वटिका, स्नुही । "सेहुण्ड" इति लोके । उशीरी, लघुकाशश्च । 'गुडा स्नुह्या च कथिता गुडिकायां च योषिति ।' इति—(मे० पृ० ४१ श्लोक. १०) । 'गुडो गोलेक्षुविकृती स्नुहीगुडि-कयोर्गुडा ।' इति रुद्र:' इति—(अम० सु० व्या० पृ० १६४ स्तं० १ प० १८) । गुडश्च ।

'सुही गडयोर्गुड ऐक्षवगोलयो ।' इति चाजय' इति—(अम० सु० व्या० पृ० १६८ स्त० १ प० १९) । जडा = शूकशिम्बी । ''कॅवाच'' इति लोके । 'जडा स्त्रियाम् । शूकशिम्बाम्' इति—(मे० पृ० ४१ श्लोक १३) । वेडा = नौका । 'वेडी' इत्यपि । वितण्डा = वादभेद, कच्चीशाक च । 'वितण्डा वादभेदे स्यात्कच्चीशाकेशिलाह्वये । करवीर्य्यामपि स्त्री स्यात्' इति—(मे० पृ० ४३ श्लोक ३६) । दाढा = दष्ट्रा, अभिलाषश्च । 'दाढा स्यादपि दंष्ट्रायामभिलाषे च कीर्त्यते ।' इति—(मे० पृ० ४३ श्लोक २) । राढा = जनपदविशेष, सुह्मदेश, गौडदेशे पुरीविशेष, शोभा, युतिश्च । 'राढा देशान्तरे युतौ ।' इति—(अने० ति० पृ० २८ श्लोक २५३) । 'राढा स्त्री सुह्मशोभयोः ।' इति—(मे० पृ० ४४ श्लो० ३) । 'राढ स्याद्देशभेदेऽपि, स्त्रिया स्यात्सुह्मशोभयो ।' इति च—(श० र० स० पृ० १०२ पं० ३) । रीढा = अवमानना, अवज्ञा, गतिश्च । 'रीढाऽवमाननागत्यो' इति–(अने० ति० पृ० २८ श्लोक २५३) । लीढा = । घृणा = जुगुप्सा, कृपा च । 'घृणा जुगुप्साकृपयो' इति—(मे० पृ० ४५ श्लोक. १२) । ऊर्णा = मेषादिलोम, भ्रुवोरन्तरावर्तक च । 'ऊर्णा मेषादिलोम्नि स्यादन्तरावर्त्तके भ्रुवोः ।' इति—(मे० पृ० ४५ श्लो० ३) । वर्वणा = बृहन्मक्षिका, नीलमक्षिका, नीलवर्णमक्षिका । 'वर्वणा मक्षिका नीला' इति—(अम० ना० लिं० पृ० १९७ श्लोक. २६) । स्थूणा = गृहादीनामुत्तम्भनकाष्ठम्, सूर्म्मी, रोगान्तरं च । ''स्थूणा स्यात् सूर्म्यां स्तम्भेऽपि वेश्मन, (गृहस्य च) ।' इति—(मे० पृ० ४७ श्लो० ३२) । 'स्थूणा सूर्म्या स्तम्भे रुगन्तरे ।' इति च—(अने० सं० पृ० १४ श्लोक १५८) । दक्षिणा = यज्ञादिविधिदानम्, दिक् च । 'यज्ञादिविधिदाने दिशि स्त्रियाम् ।' इति—(मे० पृ० ४८ श्लोकः ५१) । 'दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु ॥ अवामे त्रिषु, यज्ञादिविधिदाने दिशि स्त्रियाम् ।' इति च—(श० र० स० पृ० १११ पं० १६, १७) । लिखिता = धर्म्मशास्त्रप्रवर्तकमुनिपत्नी । लता = व्रतति, वल्ली, शाखा, सुन्दरस्त्री च । 'लता कस्तूरिकाशाखादूर्वाव्रल्लीप्रियङ्गुषु । पिपीलिकाया माधव्या ज्योतिष्मत्यूर्णनाभयो ।' इति—(ना० र० मा० पृ० २७ प० ६, ७) । 'लता वीरुत्स्त्रियोः स्पृक्कामाधव्योश्च प्रियङ्गुनि । कस्तूरिकाया शाखायाम्' इति च—(श० र० स० पृ० १३१ श्लोक. १९) । तृणता = कार्मुकम्, धनु., तृणत्वं च । 'तृणता धनुषि तृणत्वे' इति—(मे० पृ० ६२ श्लो० ११४) । त्रिवृता = औषधिविशेषः, शुक्लत्रिधारा । 'त्रिपुटा त्रिवृता त्रिवृत् ।' इति—(अम० ना० लि० पृ० १६४ श्लोकः १०८) । त्रेता = युगविशेष., अग्नित्रितयं च । 'त्रेता युगेऽग्नित्रितये' इति—(मे० पृ० ५५ श्लोकः २३) । सीता = जानकी । लाङ्गलपद्धतिः, लाङ्गलकृतरेखा । ''कूड़'' इति लोके । व्योमगङ्गा, स्वर्गगङ्गा, अलकनन्दा च । 'सीता लक्ष्मीरुमा सीता सीता शस्याधिदेवता । सीता सीरध्वजापत्यं सीता मन्दाकिनी मता ॥ सीता

चालकनन्दा च चक्षुर्भद्राऽच्युता क्रमात्।' इति—(अने० ध्व० मं० पृ० ७ श्लो० ५४, ५५)। 'सीता लाङ्गलपद्धतिवैदेहीस्वर्गगङ्गासु।' इति—(मे० पृ० ५९ श्लो० ७१)। 'शीता' इत्यपि—'शीता नभ सरिति लाङ्गलपद्धतौ च शीता दशाननरिपो सह धर्म्मिणी, च। शीत स्मृत हिमगुणे च तदन्विते च, शीतोऽलसे च बहुवारतरौ च दृष्ट.।' इति ताल-व्यादौ धरणि' इति (अम० सु० व्या० पृ० ३०६ स्त०.१ प० ३२, ३३)। सिता=शर्करा। ''मिश्री'' इति लोके। 'सिता (धवला) या स्त्री' इति—(मे० पृ० ५९ श्लो० ७१) चिता=चित्या, सहतिश्च। 'चिता चित्याया सहतौ स्त्रियाम्।' इति—(मे० पृ० ५५ श्लो० १८)। मुक्ता=मौक्तिकम्। ''मोती'' इति लोके। 'मुक्ता तु मौक्तिके, मुक्त' प्राप्तमुक्ते च मोचने।' इति—(वि० प्र० पृ० ५९ श्लो० ३९)। वार्ता—वर्तनम्। वातिङ्गण', कृष्यादि, वृत्तिश्च। 'वार्ता, वातिङ्गणे वृत्तौ वार्ता कृष्याद्युदन्तयो। वृत्तिमन्नीहजो वार्ता, वार्तमारोग्यफल्गुनो.।' इति—(वि० प्र० पृ० ६० श्लोक ४६)। 'वार्तं फल्गुन्यरोगे स्यादारोग्ये वृत्तिमत्यपि।' इति धरणि' इति—(अम० सु० व्या० पृ० ४१० स्त० १ प० १७)। 'नि.साराऽरोग्ययोर्वार्तं, नीरुग् वार्तोऽथ वृत्तिमान्। कृष्यादा-विष्यते वार्त्ता वर्त्तनोदन्तयोरपि। वार्त्ताकेऽपि क्वचिद् वार्त्ता' इति च—(अने० समु० पृ० ४ श्लो० २९)। लूता—ऊर्णनाभ, पिपीलिका, गदान्तरं च। 'लूता तूर्णनाभे पिपीलिका-गदान्तरे।' इति—(मे० पृ० ५७ श्लोक: ५२)। अनन्ता=पृथिवी, विशल्या, गुडूची च। 'अनन्ता च विशल्याया शारिवादूर्वयोरपि। कणादुरालभापथ्यापार्वत्यामलकीषु च। विश्वम्भरागुडूच्यो स्यादनन्तं सुरवर्त्मनि। अनन्त: केशवे शेषे पुमान्निरवधौ त्रिषु।' इति—(मे० पृ० ६० श्लो० ८१, ८२)। 'अनन्त विपुले वारि, व्योम्न्यनन्ते हरौ बले। शेषे, ऽनन्ता महीहैमवतीदूर्वाऽमृतासु च॥' इति च—(अने० ति० पृ० ३९ श्लो० ६)। प्रसृता=जघा। 'जघाया प्रसृता मता।' इति—(मे० पृ० ६३ श्लो० १२४)। मार्जिता=रसाला, शिखरिणी, दधिमधुशर्करामरीचार्द्रादिभि कृत लेह्यम्। ''शिखरिण'' इति ख्याता। रचना तु—'अर्धाढक' सुचिरपर्य्युषितस्य दध्न खण्डस्य षोडशपलानि शशिप्रभस्य। सर्पि पल मधु पल मरिच द्विकर्षं शुण्ठ्या पलार्धमपि चार्द्धपल चतुर्णाम्॥ सूक्ष्मे पटे ललनया मृदु-पाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसस्था। एषा वृकोदरकृता सरसा रसाला, या स्वादिता भगवता मधुसूदनेन। 'पुरुषोत्तमेन' इति पाठान्तरम् सूदशास्त्रे इति—(अम० सु० व्या० पृ० ३१७ स्तं० २ प० २७, २८, २९, ३०, ३१)। 'रसालाया तु मार्जित। शिखरिणी' इति हैमनाममाला' इति—(अम० सु० व्या० पृ० ३१७ प० ३२)। 'रसाला तु मार्जिता।' इति च—(अम० ना० लि० पृ० ३१७ श्लोक. ४४)। अमृता=पथ्या। गुडूची। आमलकी च। 'अमृता तु भवेत्पथ्यागुडूच्यामलकीषु च।' इति—(श० र० स० पृ० १३६ श्लो० ६)। कन्था=मृण्मयभित्ति., प्रावरणान्तरं च। 'कन्था मृण्मयभित्तौ स्यात्तथा

प्रावरणान्तरे ।' इति—(मे० पृ० ७२ श्लो० ३) । मर्यादा=सीमा, स्थितिश्च । 'मर्यादा सीमनि स्थितौ ।' इति—(मे० पृ० ७७ श्लो० ३७) । गदा=आयुधविशेष । 'गद कृष्णानुजे रोगे, गदा प्रहरणान्तरे ।' इति—(अने० स० पृ० २० श्लो० २२८) । इक्षुगन्धा=कोकिलाक्ष, गोक्षुरश्च । 'इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्या काशे च गोक्षुरे ।' इति—(मे० पृ० ८२ श्लो० ४४) । गोधा=तल, निहाका । 'गोधा तले निहाकायाम्' इति—(श० र० स० पृ० १८० श्लो० ११) । स्वधा=पितृदानार्थो मन्त्रविशेष । सुधा=अमृतम् । लेपविशेषश्च । "सफेदी" इति लोके । 'सुधाऽमृते स्नुहीमूर्वालेपगाङ्गेष्टिकासु च ' इति—(श० र० स० पृ० १८२ प० १३) ।

अमरोऽपि—(अम० ना० लि० पृ० ४५१, ४५२ श्लोक ८, ९) ।

... ... ... ... सूचि–माढयः ॥
पिच्छा–वितण्डा–काकिण्य–श्चूर्णिः शाणी द्रुणी दरत् ।
सातिः कन्थाऽऽसन्दी' इति ।

अस्य व्याख्या—

सूचीति । पिच्छेति च । सूचि=व्यधनी, शिखा, नृत्यभेदश्च । 'स्त्री सूचिर्नृत्यभेदे च व्यधनीशिखयोरपि ।' इति रत्नकोष.' इति—(अम० सु० व्या० पृ० ४५२ स्त० १ प० ८, ९) । माढि =पत्रशिरा, पत्रमाडिका, पत्रभङ्गि. । "सारी" इति लोके । दैन्यप्रकाशनं च । 'माटि पत्रशिरा' इति रत्नकोष ' इति—(अम० सु० व्या० पृ० ४५२ स्त० १ प० १०) । 'माढिर्दैन्य पत्रशिरा' इति—(अने० स० पृ० १२ श्लोक. १३२) 'माढि स्त्री पत्रभङ्गौ च दैन्यस्यापि प्रकाशने ।' इति च—(मे० पृ० ४४ श्लोक. २) । काकिणी=पणोदमान-मानदण्ड-माषाणा चतुर्थाश, एकवराटक, रक्तिका च । 'काकिण्येकवराटके । मानदण्डस्य तुर्य्यांशे माषस्य च पणस्य च ।' इति—(ना० र० मा० पृ० ७६ प० ८, ९) । 'काकिणी पणतुर्य्यांशे मानदण्डे च दृश्यते । कृष्णलैकवराट्यो. स्यादुन्मानस्याशकेऽपि च ।' इति—(मे० पृ० ४८ श्लोक ४२) । 'पणगण्डकयोस्तुर्य्यं उदमानस्य काकिणी ।' इति रुद्र ' इति—(अम० सु० व्या० पृ० ४५२ स्त० १ पं० २३, २४) । हारावल्या तु नान्तेऽप्याह—'काकिणी पणतुर्यांश' इति—(हा० व० पृ० ४०३ श्लोक ४४) । रभसोऽपि—'पणोदमानगण्डाना तुर्य्यांशेऽपि च काकिणी ।' इति—(अम० सु० व्या० पृ० ४५२ स्त० १ पं० २४, २५) । आढकस्य पञ्चाशत्तमोभाग उदमान' । उक्त च गणितावल्याम्—'कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढकः । अतोऽर्द्धशतिको भाग उदमानमुदाहृतम् ।' इति च—(अम० सु० व्या० पृ० ४५२ प० २६, २७, २८) ।

चूर्णि=गद्यम्, पातञ्जलमहाभाष्यम्, कपर्दक., शतसंख्यककपर्दकाश्च । "चूर्णी" इत्यपि । 'चूर्णिर्गद्ये स्त्रियां, चूर्ग क्षोदे क्षारान्तरेऽपि तत् ।' इति––(ना० र० मा० पृ० २५ प० १६) । 'अथ चूर्णी कपर्दके । चूर्णो धूलौ क्षारभेदे, चूर्णानि वासयुक्तिषु ।।' इति––(मे० पृ० ४५ श्लोक १२) । 'चूर्णानि वासयुक्तिषु । चूर्णं क्षोदे क्षारभेदे' इति––(अने० स० पृ० १३ श्लोक १४२-३) चूर्णानि प्रायेग बहुवचनान्तः' इत्यनेकार्थकैरवाकरकौमुदी । 'चूर्णी चोक्ता कपर्देऽपि, चूर्णो धूलौ निगद्यते । क्षारभेदे च चूर्णं स्यात्सुवासयुक्तिके तथा ।' इति च—(श० र० स० पृ० १०५ प० ५) । शाणी=प्रावरणान्तरम्, शणपटविशेष.। 'शाणो माषचतुष्टये । लोहादीना च निकषे, शाणी प्रावरणान्तरे ।' इति––(मे० पृ० ४७ श्लोक २९, ३०) । द्रुणी =कच्छपी, जलद्रोणी, नौकाया सेकभाजन च । द्रोण्यम्बुद्रोणीकच्छप्यो' इति–(मे० पृ० ४६ श्लोक १७) । 'द्रुणी कुर्म्या जलद्रोण्याम्' इति––(अने० स० पृ० १३ श्लोकः १४६) । 'द्रुणं चापे निगद्यते । तथा मतोऽलिनि द्रुणो, द्रोणीकच्छपयोर्द्रुणी ।' इति च––(श० र० स० पृ० १०५ प० १७-१८) । दरत्=म्लेच्छजाति, प्रपात, भयम्, पर्वत, हृदयम्, कूलम्, तीर च। 'दरद् स्त्रिया प्रपातेऽपि भयपर्वतयोरपि ।।' इति––(मे० पृ० ७६ श्लोक. ३०) । 'दरत्प्रपातेऽद्रिभये (वे)' इति च––(वि० प्र० पृ० ८० श्लोक ३३) । साति =दानम्, अवसानं च । 'सातिर्दानेऽवसाने स्त्री' इति––(मे० पृ० ५९ श्लोक. ६९) । आसन्दी=आसनभेदः । ''वेत्रासनमिति प्रसिद्धम् ।" 'आसन्दो वासुदेवे स्यात्खट्वाभेदे च योषिति ।' इति—(मे० पृ० ७६ श्लोक २०) ।

दुर्गस्तु क्रमरहितान् जघादीन् राधान्तान् स्त्रीलिङ्गवाचकशब्दानाह– (दुर्ग० लि० पृ० २ ३, ४, श्लोक ५, ६, ७, ८, ९, १०) ।

... ... ... जंघा ।
चञ्चा वचा च चञ्चुः प्रियङ्गु–सरघा–स्फुलिङ्गा गौः ।।
पिच्छा–रज्जु–यदृच्छा गुञ्जा राजि–प्रजा–ऽऽजयो याच्ञा[1] ।
घाटा–कोटि–जटा–त्रोटि–भ्रुकुटि–सटा–स्रुटिः कोटी ।।
विष्ठा मञ्जिष्ठा काष्ठा सधनिष्ठा–श्रविष्ठया–घण्टा ।
पाठा शुण्डा क्रोडा चूडा माढि–र्वितण्डो– डुः ।।
वीणा धिषणा तूणा स्थूणा श्राणा द्रुणी घृणा घोणा ।
ऊर्णा–ऽऽषाढा तृष्णा किङ्किण्या काकिणी विपणिः ।।

पाणिनीयेऽपि–(१) (याच्ञा स्त्रियाम्) ।। याच्ञा=प्रार्थना । सि० कौ० पृ० ३९८ सू० ४० ।

सिकता मुक्ता त्रेता त्रिवृताऽथलता च दीधिति–र्वत्तिः ।
वीथी गाथा कन्था कुथा च गीता गदा वेदिः ॥
अजमोदा द्वाः पोटा गोधा मेधा सुधाऽनुराधा च ।
राधा' इति ।

एषा व्याख्या—

जघेति । पिच्छेति । विष्ठेति । वीणेति । सिकतेति । अजमोदेति च । एते जघादयो राधान्ता शब्दा सघनिष्ठाश्रविष्ठया किङ्गिण्या च सह स्त्रीलिङ्गा भवन्ति । वचा= औषधिविशेष, उग्रगन्धा, सारिका च । 'वचौषधौ। सारिकाया' इति—(मे० पृ० २८ श्लो० ९) । 'वचा स्यादुग्रगन्धाया सारिकायाम्' इति च—(वि प्र० पृ० ३० श्लो० ९)। चञ्चु =पक्षिमुखाग्रम् । "चोंच" इति लोके। 'चञ्चुस्त्रोटिरुभे स्त्रियौ ।' इति—(अम० ना० लिं० पृ० २०० श्लो० ३६) 'चञ्चुस्त्रोट्यां तु योषिति ।' इति च—(श० र० स० पृ० ७१ पं० १०) । प्रियङ्गुः=फलिनी, शालिविशेषश्च। 'प्रियङ्गु स्त्री राजिकाकणयोरपि । फलिन्यां कङ्गुसस्ये च' इति—(मे० पृ० २४, २५, श्लोक ४३) । सरघा= मधुमक्षिका, मधुकर्त्री मक्षिका। 'सरघा मधुमक्षिका ।' इति—(अम० ना० लि० पृ० १९७ श्लो० २६) । स्फुलिङ्गा=अग्न्युद्भूतकणिका ।' 'त्रिषु स्फुलिङ्गोऽग्निकणः' इति—(अम० ना० लिं० पृ० २४ श्लोक ५७) ।स्फुलिङ्गा ज्ञातावपि । गौः=स्त्रीगवी। इय गौ दिगादि। पशुवाचिनस्तु गोशब्दस्य चतुष्पदजातित्वात्परपरिभाषया स्त्रीपुंस्त्वम् । इय गौ स्त्रीगवी । अयं गौ बलीवर्दः । व्याडिराचार्यस्तु—दिगादीनामविशेषेण स्त्रीपुस्त्व इच्छति ।' इति—(दु० वृ० पृ० ३ पं० ५) । रज्जु.=गुणमयी । वेणी च । 'रज्जुर्वेण्या गुणे योषित्' इति—(मे० पृ० ३० श्लो० १४) । यदृच्छा=स्वच्छन्द, स्वातन्त्र्यम्, स्वैरिता । 'यदृच्छा स्वैरिता' इति—(अम० ना० लिं० पृ० ३८६ श्लो० २) । 'यदृच्छा नियमोज्झिति' ।' इति च—(वै० पृ० १९२ श्लो० ६) । राजि =रेखा, लेखा, पक्ति., निरन्तरपंक्तिसाधारणम् । वीथी च । 'राजि स्त्री पक्तिलेखयो ।' इति—(मे० पृ० ३० श्लो० १४) । 'राजी रेखायां पंक्तौ च' इति—(अने० स० पृ० ८ श्लो० ७५) 'राजी' इत्यपि । 'राजी तु पक्तौ रेखायाम्' इति—(अने० ति० पृ० २८ श्लो० २५२) । पक्तौ—निश्छिद्रपक्तावित्यर्थः । आजि.= युद्धम्, क्षणम्, समस्थलं च । 'आजिः क्षणे समक्ष्मायां युधि' इति—(अने० ति० पृ० ८ श्लो० २१) । आजिः स्यात्समभूयुधो । क्षणेऽपि' इति च—(ना० मं० पृ० २० पं १२)

पाणिनीयेऽपि–(१) (दीधितिः स्त्रियाम्) दीधितिः=किरण. । सि० कौ० पृ० ४०१ सू० १००।

याच्ञा = प्रार्थना । 'आशासनेऽर्थना याच्ञा याचनाध्येषणार्दना । भिक्षा च सनिरक्ली स्यात्' इति—(वै० पृ० ९३ श्लो० १२०, १२१) । घाटा = ग्रीवावयवविशेष. । 'शिरः पीठ. कृकाटिका । घाटाऽप्यवटु रक्लीबे' इति—(वै० पृ० १८० श्लो० ८४, ८५) । कोटिः = धनुरग्रभागः, अश्रि, सख्याभेद, प्रकर्षश्च । 'कोटि स्त्री धनुषोऽग्रेऽश्रौ सख्याभेदप्रकर्षयोः ।' इति—(मे० पृ० ३४ श्लो० ९) । 'कोटिरग्रे च सख्यायामुत्कर्षाधिक्ययो· फले ।' इति च—(अने० ति० पृ० १३ श्लो० ७७) । जटा = केशबन्धविशेष, जटामासी, वृक्षमूल च । 'जटा केशविकारे स्यान्मासीपादपमूलयो ।' इति—( अने० ति० पृ० १७ श्लो० १२०) । त्रोटि· = चञ्चु, कट्फलं च । 'त्रोटिश्चञ्चौ कट्फले च' इति—(ना० र० मा० पृ० २० पं० २) । भ्रुकुटि = भ्रूभङ्ग, क्रोधादिना ललाटसङ्कोचनम् । 'भ्रकुटिर्भ्रुकुटिर्भ्रूकुटि स्त्रियाम् ।' इति—(अम० ना० लि० पृ० ८६ श्लो० ३७) । ''भृकुटी'' इत्यपि । सटा = केसरिस्कन्धजाः केशाः, व्रतिन शिखा च । 'व्रतिनस्तु जटा सटा ।।' इति—(अम० ना० लि० पृ० २३७ श्लो० ९७) । 'सटा जटाकेसरयो' इति—(मे० पृ० ३५ श्लो० २९) । 'कोटीरस्तु जटा सटा ।' इति च रभस.' इति—(अम० सु० व्या० पृ० २३७ प० १५) । त्रुटिः = कालविशेषः, सूक्ष्मैला, सशयश्च । 'सूक्ष्मैलाया त्रुटि. स्त्री स्यात्कालेऽल्पे सशयेऽपि सा ।' इति—अम० ना० लिं० पृ० ४०३ श्लो० ३७) । 'त्रुटिः स्यात्संशये लेशे सूक्ष्मैलाकालमानयो. ।' इति च—(ना० र० मा० पृ० ३३ प० १) । कोटी = लक्षाणां शतम्, ज्या च । 'कोटी ज्या जीवा मौर्विका द्रुणा ।' इति—(वै० पृ० ११८ श्लोक· १७८) । 'कोट्युत्कर्षाटनी संख्यास्त्रिषु' इति च—(अने० सं० पृ० ९ श्लोक. ८७) । धनिष्ठा श्रविष्ठया सह वर्तते सधनिष्ठाश्रविष्ठा तया । धनिष्ठा, श्रविष्ठा = नक्षत्रविशेषः, त्रयोविंशतिनक्षत्रम् । 'श्रविष्ठया । समा धनिष्ठा' इति—(अम० ना० लिं० पृ० ३८ श्लो० २२) । घण्टा = ध्वनिजननी, वाद्यविशेष·, घोषः, कोशफला । ''तोरञी'' इति प्रसिद्ध शाकम् । अङ्गुष्ठरहितमुष्टि·, अनिबला, नागबला, घण्टापाटलिश्च । 'घोषे कोशफला घण्टा घण्टाला फलिनी फली ।' इति—(वै० पृ० ५८ श्लोकः १५६) । 'घण्टाऽङ्गुष्ठेन भिन्ना सा (मुष्टि.)' इति च—(वै० पृ० १७९ श्लोकः ८०) । क्रोडा = उत्सङ्ग·, भुजान्तरम्, अश्वानामुरश्च । 'क्रोड क्ली कर्ष उत्सङ्गे सूकरे ना, न नोरसि ।' इति—(वै० पृ० २३१ श्लोक. २३) । चूडा = शिखा । ''चोटी'' इति लोके । वडभी, बाहुभूषण च । 'चूडा वडभौ, शिखायां बाहुभूषणे ।' इति—(मे० पृ० ४१ श्लोक १३) । उडुः = तारका, नक्षत्रम्, जलं च । 'तारकाऽप्युडु वा स्त्रियाम् ।' इति—(अम० ना० लिं० पृ० ३७ श्लोकः २१) । 'स्त्रीक्लीबयोरुडु' इति च—(त्रि० शे० पृ० ३९४ श्लोक. १९) । धिषणा = बुद्धि· । 'बुद्धिर्मनीषा धिषणा धी' इति—(अम० ना० लि० पृ० ५५ श्लोकः १) । तूणा = शरधि., शराधारः । 'स्त्रियां तूणेषुधी उपासङ्गः' इति रत्नकोषः' इति—

(अम० सु० व्या० पृ० २९३ स्त० १ प ३८)। श्राणा=यवागू। ''लपसी'' इति ख्याता। 'श्राणा तु स्याद् यवाग्वां स्त्री' इति—(श० र० स० पृ० १०७ पं० १९) घोणा=नासा, नासिका। 'पोत्रितुरङ्गयोर्घोणी नासाया तु मता स्त्रियाम्।' इति—(श० र० स० पृ० १०५ प० ३)। आषाढा=नक्षत्रविशेष। तृष्णा=अभिलाष, पिपासा च। 'तृष्णा स्यात्तर्ष-लिप्सयो।' इति—(मे० पृ० ४६ श्लोक. १६) 'तृष्णा त्वीहापिपासयो।' इति च—(ना० र० मा० पृ० २५ प० ६)। किङ्किण्या सहेति। किङ्किणी=क्षुद्रघण्टिका। ''घुघुर'' ''घुगुर'' ''घागरी'' इति च लोके। 'क्षुद्रघण्टा तु किङ्किणी।' इति—(वै० पृ० १७० श्लो० १४५)। 'किङ्किणि.' इत्यपि। कङ्कणी—इति स्वामी। 'कङ्कण स्यात्प्रतिसर कङ्कणी क्षुद्रघण्टिका।' इति च भागुरि' इति—(अम० सु० व्या० पृ० २४१ स्त० १ पं० २१, २२)। विपणि=पण्यवीथिका, क्रय्यवस्तुशालापङ्क्ति., हट्टशून्यविक्रयस्थानम्, हट्टमार्गं इति स्वामी। 'विपणिः पण्यवीथिका॥' इति—(अम० ना० लिं० पृ० ११७ श्लो० २)।'आपण पण्यवीथ्यां च, पण्ये च विपणि स्त्रियाम्।' इति रभस' इति—(अम० सु० व्या० पृ० ११७ स्तं० १ प० ७, ८)। 'आपणे पण्यवीथ्या च पण्ये च विपणि स्त्रियाम्।' इति च रुद्र.' इति—(अम० सु० व्या० पृ० ४०६ स्त० १ प० ३, ४)। दीधिति.=रश्मि, किरण।'भानु करो, मरीचिः स्त्री-पुंसयो,र्दीधितिः स्त्रियाम्।' इति—(अम० ना० लि० पृ० ४२ श्लोकः ३३)। वर्ति.=दीपादिसम्बन्धिवर्तितं द्रव्यम्, गात्रानुलेपयोग्यं पिष्टघृष्टसुगन्धिद्रव्यं च। 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः। गात्रानुलेपनीदीपदशादीपेषु योषिति।' इति—(मे० पृ० ५८ श्लो० ५५)। 'गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम्।' इति—(अम० ना० लि० पृ० २४८ श्लोकः १३३)। द्वौ द्वौ भिन्नार्थौ—इत्येके। 'गात्रानुलेपनी वर्तिर्विगन्धथ विलेपनम्। वर्णक.चाथ विच्छित्तिः स्त्री कषायोऽङ्गरागके।' इति च रभसः' इति—(अम० सु० व्या० पृ० २४८ स्तं० १ प० २१, २२)। वीथी=पङ्क्ति, मार्ग, गृहाङ्गम्, रूपकान्तर च। 'वीथी पङ्क्तौ गृहाङ्गे च रूप-कान्तर वर्त्मनोः।' इति—(मे० पृ० ७२ श्लो० १२)। गाथा=आर्या, श्लोक, संस्कृता-न्यभाषा, गेयम्, वृत्त च। ''गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः।' इति—(मे० पृ० ७२-श्लोकः ६)। कुथा=वर्णकम्बल.। त्रिषु लिङ्गेष्वित्येके। ''कुथेन नागेन्द्रमिवेन्द्रवाह-नम्।'' इति—(दु० लि० वि० पृ० ४ पं० १३)। 'कुथ. स्त्रीपुंसयोर्वर्णकम्बले, पुंसि बर्हिषि॥' इति च—(मे० पृ० ७२ श्लोकः ४)। वेदिः=यागोपकरणी, परिष्कृतभूतलम्, अङ्गुलिमुद्रा च। 'वेदि. स्यात्पण्डिते पुमान्। स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले।' इति—(मे० प० ७५ श्लो० १५)। अजमोदा—ब्रह्मकुशा, यवानीद्वयम्। 'अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका।' इति—(अम० ना० लि० पृ० १७७ श्लोकः १४५)। द्वा.=द्वारम्। 'स्त्री द्वार्द्वारं प्रतीहारः' इति—(अम० ना० लिं० पृ० १२२ श्लोक. १६)। मेधा=प्रज्ञा, धारणावद्बुद्धिः।

"मेधा बुद्धौ, क्रतौ पुमान् ।' इति—(मे० पृ० ७९ श्लोक १३) । अनुराधा = नक्षत्रविशेषः, सप्तदशनक्षत्रम्, राधामनुगता । राधा = विशाखानक्षत्रम्, गोपी, आमलकी, विष्णुक्रान्ता, विद्युत्, वेधविशेष, धन्विना चित्रभेदश्च । 'राधो मासान्तरे,राधा चित्रभेदे च धन्विनाम् । गोपीविशाखामलकीविष्णुक्रान्तासु विद्युति ।' इति—मे० पृ० ७९ श्लो० १३, १४) । शे० प्रा० ।

अथेदानीं सास्नादीन् स्वाहापर्य्यन्तान् स्त्रीलिङ्गवाचकशब्दानाह हेम—(अभि०सं० लि० पृ० ३ श्लोक. ३५ तः ४१ या०) ।

सास्ना सूना धाना पम्पा झम्पा शम्पा प्रपा शिफा ।
कम्बा भम्भा सभा हम्भा सीमा पामा–रुमे उमा ॥१९॥
चित्या पद्या पर्या योग्या छाया माया पेया कक्ष्या ।
दूष्या नस्या शम्पा सन्ध्या रथ्या कुल्या ज्या मङ्गल्या ॥१९॥
उपकार्या जलार्द्रे–रा प्रतिसीरा परम्परा ।
कण्डरा–ऽसृग्धरा होरा वागुरा शर्करा सिरा ॥२०॥
गुन्द्रा मुद्रा क्षुद्रा भद्रा भत्रा छत्रा यात्रा मात्रा ।
दंष्ट्रा फेला वेला मेला गोला दोला शाला माला ॥२१॥
मेखला सिध्मला लीला रसाला सर्वला बला ।
कुहाला शङ्कुला हेला शिला सुवर्चला कला ॥२२॥
उपला शारिवा मूर्वा लट्वा खट्वा शिवा दशा ।
कशा कुशे–शा मञ्जूषा शेषा मूषे–षया स्नसा ॥२३॥
वस्नसा विस्रसा भिस्सा नासा वाहा गुहा स्वाहा ॥इति॥

एषां व्याख्या—

सास्नेति । चित्येति । उपकार्य्येति । गुन्द्रेति । मेखलेति । उपलेति । वस्नसेति च । एते सास्नाप्रभृतयः स्वाहान्ता शब्दा ईषया सह स्त्रीलिङ्गा स्युः । सास्ना = गोगलचर्म्म ।

पाणिनीयेऽपि—(१) (यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव) ॥ एताः स्त्रियामेव स्युः । यात्रा = प्रस्थानम्, गमनम् । मात्रा = अक्षरायव, द्रव्यं च । भस्त्रा = अग्निदीपकचर्म्मनिर्मितयन्त्रविशेषः, चर्मप्रसेविका । दंष्ट्रा = दन्तविशेष, दाढा । वरत्रा = नद्ध्री, चर्म्ममयरज्जु । सि० कौ० पृ० ४०३ सू० १५६ ।

"गलकंबरी" इति लोके। 'सास्ना तु गलकम्बल ।' इति—(अम० ना० लि० पृ० ३२३ श्लोक: ६३)। सूना=पुत्री, वधस्थान च। 'सूना पुत्र्या वधस्थानगलशुण्डिकयो स्त्रियाम् ।' इति—(मे० पृ० ८४ श्लोक २४) धाना=भृष्टयव, धन्याक च। 'धानाभृष्टयवेऽपि च।' धन्याकेऽभिनवोद्भिन्ने' इति—(मे० पृ० ८३ श्लोक: १२)। पम्पा[१]=दण्डकारण्यान्तर्गतसरोविशेष:, ऋष्यमूकसमीपवर्त्तिनी पुष्करिणी, औड्रदेशस्थनदीविशेषश्च । झम्पा=सम्पातपनम्, लम्फ, प्लुतगति। "लाफ" इति लोके। स्वेच्छाधीनपतन च। "उछाल" "कुदान" "फलांग" "कुलांच" इति च लोके। शम्पा=विद्युत्, शतह्रदा। "बिजली" इति लोके। 'शम्पा शतह्रदाह्रादिन्यैरावल्य क्षणप्रभा ।' इति—(अम० ना० लि० पृ० ३२ श्लोक ९)। प्रपा=पानीयशाला। 'प्रपा पानीयशालिका ।' इति—(वै० पृ० १६० श्लोक. २३)। शिफा=जटा, नदी, मासी, माता च। 'शिफा जटाया सरिति मासिकाया च मातरि।' इति—(मे० पृ० १०४ श्लोक: ३) 'शिफा' इत्यपि। कु(क)म्बा=सुगहना वृति, सुगहना निबिडा, वृतिवेष्टम्, निविडवेष्टनम्, अस्पृश्यादिदर्शनवारणाय वेष्टनम्, यागभूमावन्त्यजदर्शनवारणाय वेष्टनम्। "यज्ञस्थान का घेरा" इति लोके। 'कुम्बा सुगहना वृति ।।' इति—(अम० ना० लिं० पृ० २५६ श्लोक १८)। भम्भा=भेरीवाद्यम्। "नगाडा" इति लोके। 'दुन्दुभिस्त्वानको भेरी भम्भा नासूश्च नान्यपि।' इति—(वै० पृ० १४६ श्लोक १३३)। सभा=परिषद्, गोष्ठी, सामाजिकं च। 'सभा सामाजिके गोष्ठ्या द्यूतमन्दिरयोरपि।' इति—(मे० पृ० १०६ श्लोक: ९)। 'सभा द्यूतसमूहयो.। गोष्ठ्या सभ्येषु शालायाम्' इति—(अने० स० पृ० २७ श्लोक. ३१७)। 'स्त्रियां सामाजिके गोष्ठ्या द्यूतमन्दिरयो सभा ।' इति च रभसः' इति—(अम० सु० व्या० पृ० ४२० स्तं० २ प० २१, २२)। हम्भा=गोध्वनि.। 'म्भा रेभण च गवां ध्वनौ।' इति—(त्रि० शे० पृ० ३०३ श्लोक २१)। सीमा=अवधि., आघाट, मर्यादा, ग्रामादीनामवधारितान्तभाग। "सीम" इति लोके। 'सीमाऽऽघाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम् ।' इति—(मे० पृ० ११० श्लोक: ३५)। पामा=विचर्चिका, कच्छू, खर्जूश्च। "खसुरोग" इति लोके। 'कच्छां तु पाम, पामा विचर्चिका।' इति—(अम० ना० लिं० पृ० २१९ श्लोक ५३)। रुमा=विशिष्टलवणाकर:, सुग्रीवपत्नी च। रुमा सुग्रीवदारेषु विशिष्टलवणाकरे।' इति—(मे० पृ० ११० श्लोक २७)। उमा=अतसी, पार्वती च। 'उमाऽतसीहैमवतीहरिद्राकीर्तिकान्तिषु ।' इति (मे० पृ० १०८ श्लोक २)। चित्या=मृतचिति:। "चिता" इति लोके। 'चित्या मृतचितौ स्त्रियाम् ।' इति—(श० र० स० पृ० २३५ पं०

---

(१) यल्लक्ष्यम्—पश्य लक्ष्मण। पम्पाया बकः परमधार्मिकः। 'इति रामायणम्' इति—(सं० चि० पृ० ४७ स्तं० २ पं० २० २१)।

८.) । पद्या = वर्त्म, मार्गः । ''रास्ता'' इति लोके । 'पद्या वर्त्मनि कीर्तिता ।' इति—(मे० पृ० ११५ श्लो० ३५) च(प)र्या = ईर्य्या, नियमात्याग, ध्यानमौनादिकस्य भिक्षुव्रतस्यानुष्ठानम्, ईर्य्यापथस्थिति. ।''नियमित अनुष्ठान'' इति लोके । ईर्य्यते गुरो शास्त्रोपासनया ज्ञायते इति ईर्य्या । ईर्य्याया पन्थाः । ईर्य्यापथे ध्यानाद्युपाये परिव्राजकादीना स्थितिः सेत्यर्थः.' इति—(श० चिं० पृ० ९११ स्तं० १ प० १९ त) । 'चर्य्या त्वीर्य्यापथस्थिति ।' इति—(वै० पृ० ९२ श्लो० ११६) योग्या = अभ्यासः, अर्कयोषिच्चे । 'स्त्र्यभ्यासार्कयोषितो ।' इति (मे० पृ० ११६ श्लो० ४९) । छाया = प्रतिबिम्बम्, अनातपः, कान्ति, भानुभार्य्या च । 'कान्त्य(न्ता)नातपयोश्छाया' इति--(अने० ध्व० म० पृ० २५ श्लो० २०९) । 'छाया त्वनातपे कान्तौ प्रतिबिम्बार्कजाययो ।' इति च—(वै० पृ० २२१ श्लो० १३) । माया = शाम्बरी, दम्भ, बुद्धि, दया च । 'माया दम्भे दयाबुद्ध्यो' इति—(अने० ति० पृ० २६ श्लोकः २२९) । पेया = श्राणा, यवागू, अच्छमण्डश्च । 'पेया श्राणाच्छमण्डयो ।' इति—(मे० पृ० ११५ श्लो० ३९) । कक्ष्या=कच्छ, वरत्रा, काञ्ची च ।'कक्ष्या कच्छे वरत्रायां काच्यां गेहप्रकोष्ठके ।' इति (वै० पृ० २२० श्लो० ७) । दूष्या = कक्ष्या, गजमध्यबन्धनम् । 'दूष्या कक्ष्या, निन्द्ये त्वय त्रिषु ।' इति--(ना० र० मा० पृ० ४५ पं० ३) । नस्या = नासिका, नासारज्जूश्च । ''नकेल'' ''नाथ'' इति च लोके । 'नसा नस्या च नासिका । गन्धनाली च नासिक्यम्' इति—(त्रि० शे० पृ० २९२ श्लो० २८) । शम्या = युगकीलक, यज्ञाङ्गभूतः शूलाकारः काष्ठविशेषश्च । 'अथ शम्या स्त्री युगकीलक ।' इति—(अम० ना० लिं० पृ० ३०६ श्लो० १४) । दक्षिणहस्तगृहीततालविशेष, यष्टिश्च । यथा--'धनुः शतं परीहारो ग्रामस्य स्यात्समन्ततः । शम्या पातास्त्रयो वापि त्रिगुणो नगरस्य तु ।' अत्र शम्या यष्टिरिति कुल्लूकभट्ट.' इति—(श० चि० पृ० ५१८ स्त० १ पं० २७ त) । सन्ध्या = सन्धिः, पितृप्रसूश्च । 'सन्ध्या सन्धौ पितृप्रस्वा प्रतिज्ञासीमयोरपि ।' इति—( ना० र० मा० पृ० ४२ प० ११) रथ्या = रथसमूह, विशिखा, वर्त्तनी च । 'रथ्या रथौघविशिखे' इति—ना० र० मा० पृ० ४४ पं० ३) । कुल्या = प्रणाली, कृत्रिमाऽल्पनदी च । 'कृत्रिमाऽल्पनदी कुल्या प्रणाल्यां च' इति—(ना० र० मा० पृ० ४४ पं० १८) । ज्या = धनुर्गुणः, मौर्वी, माता, भूमि, जया, विजया, रमा च । 'ज्या मौर्वीमातृभूमिषु ।' इति--(ना० र० मा० पृ० ८ प० ७) 'ज्या जया त्रिजया रमा ।' इति च (द्वयक्ष० ना० मा० पृ० १४ श्लो० ११) । मङ्गल्या = रोचना, प्रियङ्गु, शतपुष्पा च । 'मङ्गल्या रोचनायां च प्रियङ्गुशतपुष्पयोः ।' इति—(वि० प्र० पृ० १२२ श्लो० ९४) । उपकार्या = राजसद्म । 'उपकार्य्या राजसद्मन्युपकारोचितेऽन्यवत् ' इति—(मे० पृ० १२१ श्लो० ११८) जलार्द्रा = याज्ञिकाना व्यजनविशेषः,

धुवित्रम्, क्लिन्नवस्त्रम् च । 'धुवित्रं तालवृन्तं स्यादुत्क्षेपव्यजनं च तत् । जलेनार्द्रं जलार्द्रा स्यात्' इति--(वै० पृ० १७१ श्लोकः १५९) । इरा = पृथवी, वाक्, जलम्, मद्यं च । 'पृथिव्या वाचि पानीये मदिरायामिरा मता ।' इति--(अने० समु० पृ० २७ श्लोक ३०२) प्रतिसीरा= जवनिका, वस्त्रमयी । 'प्रतिसीरा जवनिकायां स्यात्' इति--(श० र० स० पृ० २९० पं० १५) । परम्परा=परिपाटी, हिंसा, सन्तानश्च । 'परम्परा परिपाट्या हिंसासन्तानयोरपि ।' इति--(मे० पृ० १४२ श्लोक २७८) । कण्डरा = महास्नायु, महानाडी । 'महास्नायुनि कण्डरा ।' इति--(त० र० मा० पृ० ४२ प० १) । 'कण्डरा तु महास्नायुर्महानाडी च सा स्मृता ।' इति च--(रा० नि० पृ० ४०१ श्लोक ५९) । असृग्धरा = त्वक् । 'स्त्रियां त्वगसृग्धरा ।' इति-(अम० ना०लि० पृ०२२३ श्लोक ६२) । होरा = लग्नम्, राश्यर्द्धम्, शास्त्रम्, रेखाप्रभेदश्च । 'होरा तु लग्ने राश्यर्द्धे शास्त्ररेखाप्रभेदयो ।' इति--(अने० स० पृ० ३८ श्लोक ४८५) । वागुरा = मृगबन्धनी । 'वागुरा मृगबन्धिन्याम्', इति--(श० र० स० पृ० २८० प० ३) । शर्करा = इक्षुरसविकार, खण्डविकृतिः । "मिश्री" इति लोके । 'शर्करा खण्ड-विकृतावुपलाकर्पराशयो. । शर्करान्वितदेशेऽपि रुग्भेदे सकलेऽपि च ।' इति--(मे० पृ० १३८ श्लोक. २२०) । कर्पराश = मृत्कपालखण्डम्, उपला, अश्मरूपा मृच्च । तयोर्यथा-- 'नगतरुशि-खरामर्दी सशर्करो मारुतश्चण्ड: ।' इत्यनेकार्थकैरवाकरकौमुदी' इति--(अम० सु० व्या० पृ० ११३ स्तं० २ टि० पं० ३९ तः) । सिरा = नाडी, अम्बुवाहिनी नाडी । "सीर" इति लोके । 'नाडी तु धमनि. सिरा ।' इति--(अम० ना० लिं० पृ० २२४ श्लोक. ६५) । 'शिरा' इत्यपि । 'शिरो ना पिप्पलीमूले, स्त्राद् धमन्या च योषिति ।' इति च रसभः' इति--(अम० सु० व्या० पृ० २२४ स्त० १ प० २३) । गुन्द्रा = प्रियङ्गु, भद्रमुस्तक च । 'गुन्द्रस्तेजनके, स्त्री तु प्रियङ्गौ भद्रमुस्तके ।' इति--(मे० पृ० १२४ श्लोकः २४) । मुद्रा = प्रत्ययकारिणी । 'मुद्रा प्रत्ययका-रिणी ।' इति--(त्रि० शे० पृ० २९८ श्लोक २९) । क्षुद्रा = सरघा, कण्टकारिका, व्यङ्गा, नटी च । 'क्षुद्रा व्यङ्गानटीकण्टकारिकासरघासु च ।' इति--(मे० पृ० १२४ श्लोक. १७) । भद्रा = तिथिकरणयोर्भेदः, प्रसारिणी, कट्फला, अनन्ता च । 'तिथिभेदे प्रसारिण्या कट्फलाऽ-नन्तयोरपि ।' इति--(मे० पृ० १२७ श्लोकः ७०) । भस्त्रा = कंसादिधमनी, चर्म्मप्रसेविका, अग्निज्वलनसाधनम् । 'भस्त्रा चर्म्मप्रसेविका' इति--(अम० ना० लिं० पृ० ३४८ श्लोकः ३३) । छत्रा = मधुरिका । "वनसोंफ" इति ख्याता । तृणविशेष, धान्याकं च । 'छत्रा मधुरिका मिसिः ।' इति । 'छत्राऽतिच्छत्रापालघ्नौ' इति । 'छत्रा वितुन्नकम । कुस्तुंबरु च धान्याकम्' इति च--(अम० ना० लि० पृ० १६३ श्लोकः १०५) यात्रा = प्रस्थानमात्रम्, गमनम्, गतिः, यापनोपायः, देवार्चनोत्सवश्च । 'यात्रा तु यापनेऽपि स्यादगमनोत्सवयोः स्त्रि-याम् ।' इति--(मे० पृ० १२८ श्लोकः ७८) । 'यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे ।' इति

च=(वि० प्र० पृ० १३२ श्लोक ९२)। मात्रा=परिच्छदः, आच्छादनम्, वस्त्रम्। "कपडा" इति लोके। परिमाणम्, अल्प च। 'मात्रा कर्णविभूषाया वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे, क्लीब कात्स्न्र्येऽवधारणे।' इति—(मे० पृ० १२८ श्लोक ७५)। 'मात्र त्ववधृतौ स्वार्थे कात्स्न्र्ये, मात्रा परिच्छदे। अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे। काले वृत्ते च' इति—(अने० स० पृ० ३७ श्लोक ४५९)। दष्ट्रा=दन्तविशेष, दाढा। "दाढ" इति लोके। दन्तपक्तिद्वयप्रान्ते चतस्रश्चरश्चतस्रो दन्तविशेषा दष्ट्रा। 'द्विगुणीकृता दन्तावलिरिति भावप्रकाश।' इति—(श० चिं० पृ० ११४४ स्त० १ प० ३ त:)। 'मध्यदन्ता राजदन्ता दष्ट्रा तत्पार्श्वयोर्द्वयो।' इति च (वै० पृ० १८० श्लोक: ८९)। फेला=भोजनोज्झितम्, भुक्तसमुज्झितम्। 'फेला फेलिस्तथोच्छिष्टे गदिता शब्दवेदिभि.।' इति—(ग० र० स० पृ० २९९ प० २)। वेला =काल, कालप्रभेदश्च। "चौघडिया" इति लोके। 'वेला काले च जलधेस्तीरनीरविकारयो।' इति—(वि० पृ० १५२ श्लोक ४१)। 'वेला कालविशेष. स्याद्वेला सिन्धुजलोद्गति.। वेला सेवाङ्गुलीछेदे वेला द्रोण्यन्तरे ध्वनि।' इति—(अने० ध्व० म० पृ० ६ श्लोक. ४४)। 'दन्तमासेऽपि वेला स्यात्' इति—(हा० व० पृ० ४०८ श्लोक २६८)। 'जलधिजलविकारे वेला, तटेऽप्युपचारात्' इति क्षीरस्वामी' इति—(दु० लि० श्लोक १५ विवेचने पृ० ४६ पं० १३)। 'अब्ध्यम्बुविकृतौ चन्द्रोदयादिना जलधिजलवृद्धौ (ज्वारभाटा) काले मर्यादाया च वेला।' इति च—(अम० अम० विवे० व्या० पृ० ३३२ प० २३, २४)। मेला=मसिजलम्, लेखनद्रव्यम्। 'मसिजलं तु मेला स्यात्' इति—(त्रि० शे० पृ० २९८ श्लोक: २७)। गोला=गोदावरी, सखी, कुनटी, दुर्गा च। 'गोला गोदावरीसख्योः कुनटीदुर्गयो स्त्रियाम्।' इति—(मे० पृ० १४६ श्लोक १४)। दोला=प्रेखा, यानान्तरम्। "डोली" इति लोके। नाली च। 'दोला नील्यां यानान्तरेऽपि च।' इति—(मे० पृ० १४७ श्लो० २७)। शाला=वृक्षस्कन्धशाखा, गृहैकदेश, गृहं च। "शाला द्रुस्कन्धशाखाया गृहे गृहैकदेशयो।' इति—(मे० पृ० १४८ श्लोक: ५१)। माला=स्रक्, पृक्का च। 'माल क्षेत्रे, स्त्रियां पृक्कास्रजो,र्जात्यन्तरे पुमान्।' इति—(मे० पृ० १४८ श्लो० ४५)। मेखला=रसना, काञ्ची, श्रोणिस्थान च। 'अथ मेखला। श्रोणिस्थाने कटितटे कटिबन्धेऽसिबन्धने।' इति—(वै० पृ० २४८ श्लोक १८)। सिध्मला=मत्स्यविकृति, शुष्कमीन.। 'सिध्मला शुष्कमीने स्त्री, त्रिलिङ्ग्यां तु किलासिनि।' इति—(त्रि० शे० पृ० ३७४ श्लो० ४०९)। लीला=विदग्धचेष्टा, शृङ्गारचेष्टा, केलि., विलासश्च। 'लीलां विदु केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु।' इति—(वि० प्र० पृ० १५२ श्लो० ४५)। रसाला=शिखरिणी, रसना, दूर्वा च। 'रसाला रसनादूर्वाविदारीमार्जितासु च।' इति—(मे० पृ० १५४ श्लोक: १२६)।

सर्वला = अस्त्रविशेष:, तोमर । 'तोमरोऽस्त्री लोहहुलदण्डे कासूश्च सर्वला ।' इति—(वै० पृ० ११७ श्लोक १६६) । बला = ओषधिभेद, वाट्यालक । ''बलिआर'' इति ख्यात । 'बल-युक्तेऽन्यलिङ्ग स्याद्, बला वाट्यालके स्त्रियाम् ।' इति—(मे० पृ० १४७ श्लोक: ३७) । क-(कु) हाला = काहला, वाद्यभाण्डविशेष । काहली इति हिमगिरिप्रसिद्धा ध्वनिनाला । ''बड़ा ढोल'' इति लोके । अप्सरसां प्रभेदश्च । 'ध्वनिनाला तु काहला ॥' इति—(त्रि० शे० पृ० २७१ श्लोक २) । काहला तु कहाला स्याच्चण्डकोलाहलेति च ॥' इति च—(वै० पृ० १४६ श्लोक १२६) । शङ्कुला = उत्पलपत्रिका, पूगकर्त्तनी । ''सरोता'' इति लोके । महाफला च । 'महाफला शाकफला सुभद्रा शङ्कुलाऽपि च ।' इति—(वै० पृ० ५९ श्लोक १७०) । हेला = अनादर:, अवज्ञा, वरयोषिता विलास, स्त्रीणा श्रृङ्गारभावजक्रियाविशेषश्च । 'हेला तु स्यादवज्ञाविलासयो: । हेला श्रृङ्गारभावस्य क्रियाया च निगद्यते ।' इति—(श० र० स० पृ० ३०१ श्लोक ७, ८) । शिला = दृषद्, पाषाण:, प्रस्तर । ''पत्थर'' इति लोके । मन.शिला, द्वाराध:स्थितदारु, स्तम्भशीर्षम्, कर्पूरं च । 'शिला द्वाराधोदारु कुनटी दृषद् ।' इति—(श० र० स० पृ० ३०० पं० १७) । 'अधस्ताद् दारुणि शिला' इति—(अम० ना० लिं० पृ० १२१ श्लोक: १३) । 'शिल उञ्छे, स्त्रिया ग्राव द्वाराध स्थितदारुणो: ।' इति रसभ.' इति च—(अम० सु० व्या० पृ० १२१ स्तं० १ प० ६, ७) । 'शिली' इत्यपि । 'तलदारु शिली योषिन्नासा दारूर्ध्वमस्य यत् ।' इति च बोपालित.' इति—(अम० सु० व्या० पृ० १२१ स्तं० १ पं० ८) । सुवर्चला = आदित्यभक्ता, शाकविशेष. । ''हुलहुल'' इति प्रसिद्धं शाकम् । अतसी । ''अलसी'' इति लोके । सूर्यपत्नी च । 'आदित्यभक्ता वरदार्कभक्ता सुवर्चला सूर्य्यलताऽर्ककान्ता ।' इति—(रा० नि० पृ० १५३ श्लोक: १४४) । 'चणकोमातसी क्षौमी रुद्रपत्नी सुवर्चला ।' इति —(प० र० मा० पृ० २५ पं० २) । 'सुवर्चलामसृण्यौ च' इति—(वै० पृ० १२६ श्लोक: ४५) । 'त्रसरेणुर्महावीर्य्या स्वाति: सूर्या सुवर्चला ।' इति—(त्रि० शे० पृ० २७० श्लोक: २०) । 'सुवर्चला । अर्कावर्त्ते तु मंडूक्याम्' इति च—(रा० नि० पृ० ४२५ श्लोक. ४१) । कला = चन्द्रषोडशांश., राशेरष्टादशशतभाग, अंशस्य षष्टिभाग:, कालभेद:, त्रिंशत्काष्ठा, शिल्पम्, शिल्पादि., मूलरैवृद्धिश्च । 'कला तु षोडशो भाग.' इति—(अम० ना० लिं० पृ० ३५ श्लोक: १५) । 'त्रिंशत्तु ता. (काष्ठा.) कला' इति—(अम० ना० लिं० पृ० ४७ श्लोक: ११) । 'काला शिल्पे कालभेदेऽपि' इति—(अम० ना० लिं० पृ० ४३१ श्लोक: १९८) । 'सौषा-वयवविज्ञानगमनेषु कला मता ।' इति—(अने० ध्व०मं० पृ० १७ श्लोक: १४७) 'काले शिल्पे वित्तवृद्धौ चन्द्रांशे कलने कला ।' इति । 'कला द्विसप्रतिमिता: शिल्पादिरूपा:' इति बाणश्च ।

उपला = शर्करा । ''मिश्री'' ''चीनी'' इति च लोके । 'उपल· प्रस्तरे रत्ने, शर्करायां तु योषिति ।' इति—(मे० पृ० १४९ श्लोक ६३) । शारिवा = औषधिविशेष , उत्पलशारिवा । ''गुलीसर'' इति ख्यात. । शालिविशेषश्च । 'गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ।' इति —(अम० ना० लि० पृ० १६६ श्लोक ११२) । मूर्वा = ज्याहेतु., तृणविशेष·, धनुर्गुणोपयुक्ता लताविशेष., मोरटा । 'मुहार'' इति ख्याता । पीलुपर्णी, बिम्बी च । 'मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ।' इति—(अम० ना० लि० पृ० १५७ श्लोक. ८३) । लट्वा = करञ्ज., करञ्जभेद., अलक्त·, फलम्, अवद्यम्, खगान्तर च । 'लट्वाऽलक्ते करञ्जेऽपि' इति शिव:' इति—(शि० को० पृ० ४६ श्लोक ५००) । 'लट्वा करञ्जभेदे स्यात्फलेऽवद्ये खगान्तरे ।' इति च–(मे० पृ० १५९ श्लोक २२) । खट्वा = कोलशिम्बी, कपिकच्छूविशेष , पर्य्यङ्क, मञ्चश्च । 'पलङ्ग'' ''खाट'' ''चारपाई'' इति च लोके । 'दधिपुष्पी खट्वाङ्गी खट्वा पर्य्यङ्कपादिका कूपा ।' इति—(रा० नि० पृ० ३६ श्लोक २०४) । 'आसन्दी मञ्चक खट्वापाश्रयो मत्तवारणम् ।' इति—(वै० पृ० १७२ श्लोक १६४) । लक्षणं तु यथा—'अष्टाभिः काष्टखण्डैश्च खट्वेति प्रतिचक्षते ।' इति—(श० चि० पृ० ७४५ स्तं० १ पं० २५, २६) । विशेषो युक्तिकल्पतरौ द्रष्टव्य. । शिवा = गौरी, शृगाली च । 'शिवा गौरी शिवा क्रोष्ट्री, शिवं श्रेय:, शिवाऽभया ।' इति—(अने० ध्वं०मं० पृ० १ श्लोक: ४) । दशा = अवस्था, वर्ति:, वस्त्रावयवश्च । 'दशाऽवस्था, दशावर्तिर्वाससोऽवयवे दशा ।' इति—(अने० समु० पृ० ३९ श्लोक ४३२) कशा = अश्वताडनी, अश्वादिताडनचर्म्मदण्ड· । 'अश्वादेस्ताडनी कशा ।' इति—(अम० ना० लिं० पृ० ३.४८ श्लोक ३१) । 'कशा काम्रा वक्त्रपट्टे' इति च—(वै० पृ० ११३ श्लोक ११४) । ईशा = लाङ्गलावयवविशेष । 'ईशा लाङ्गलदण्डके ।' इति—(मे० पृ० १६२ श्लोक २) । मञ्जूषा = वस्त्रालङ्कारादिस्थापनमञ्जूषा, दारुमयी पेटा । "पेटी'' इति ख्याता । 'पिटक. पेटक पेटा मञ्जूषा ।' इति—(अम० ना० लि० पृ० ३४७ श्लोक: २९) । शेषा = प्रसादेन स्वनिर्माल्यार्पणम्, निर्माल्यदानम् । 'प्रसादेन स्वनिर्माल्यार्पणे स्त्रियाम् ।' इति—(मे० पृ० १६७ श्लोक· २८) । मूषा = सुवर्णादिविलयनभाण्डम् । "घरिया'' ''कुठाली'' इति च लोके । 'तेजसावर्त्तनी मूषा' इति—(अम० ना० लि० पृ० ३४८ श्लोक. ३३) । 'मूषी' इत्यपि । 'मूषा त्वावर्त्तनी मूषी' इति च शब्दार्णव' इति—(अम० सु० व्या० पृ० ३४८ स्तं० २ पं० २५, २६) । ईषा = लाङ्गलावयवविशेष । स्नसा = स्नायुनाडी । वस्नसा = वायुवाहिनी नाडी, स्नायु·, अङ्गप्रत्यङ्गसन्धिबन्धनरूपा स्नायु. । 'अथ वस्नसा । स्नायु· स्त्रियाम्' इति—(अम० ना० लि० पृ० २२४ श्लोक: ६६) । 'अथ स्नसा । वस्नसा' इति च—(त्रि० शे० पृ० २९१ श्लोक १८) । विस्रसा = = जरा । "बुढापा'' इति लोके । 'विस्रसा जरा' इति—(अम० ना० लि० पृ० २१५

श्लोक. ४१)। भिस्सा = अन्नम्, ओदनम्, भक्तम्, सिद्धान्नम्। 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इति—(अम० ना० लि० पृ० ३१९ श्लोक. ४८)। नासा = नासिका, द्वारोर्ध्वदारु च। 'नासा तु नासिकायां च द्वारोर्ध्वदारुणि स्त्रियाम्।' इति—(मे० पृ० १७० श्लोकः ५)। 'घ्राण गन्धवहा नासा नसा नस्या च नासिका।' इति साहसाङ्क' इति—(अम० सु० व्या० पृ० २३३ स्तं० २ पं० २६, २७)। 'विज्ञेया नासिका नासा नासा द्वारोर्ध्वदारु च।' इति रुद्र' इति—(अम० सु० व्या० पृ० १२१ स्त० १ प० १४, १५)। 'नासा दारूपरि द्वारस्याधोदारु शिला स्त्रियाम्।' इति नाममाला' इति—(अम० सु० व्या० पृ० १२१ स्तं० १ पं० १५, १६)। वाहा = बाहु, भुज। "बाँह" इति लोके। 'वाहोऽश्वमानयो। वृषे, वाहा तु बाहौ स्यात्' इति—(अने० स० पृ० ४९ श्लोक ६१५)। गुहा = गिरिविवरम्, अकृत्रिमगिरिबिलम्। 'गुह पाण्मातुरे, गुहा। सिंह-पुच्छ्यां च गर्ते च पर्वतादेश्च गह्वरे (कन्दरे)।' इति—(मे० पृ० १७५ श्लोकः ४)। स्वाहा = अग्निपत्नी। 'अथाग्नायी स्वाहा च हुतभुक्प्रिया॥' इति—(अम० ना० लिं० पृ० २५६ श्लोकः २१)। 'स्वाहा देवहविर्दाने' इति च—(अम० ना० लिं० पृ० ४४५ श्लोक. ८)।

अमरोऽपि—(अम० ना० लि० पृ० ४५२ श्लोकः ९, १०)।

... ... ...नाभी राजसभाऽपि च॥
झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला।' इति।

अस्य व्याख्या—

नाभिरिति। एते नाभ्यादयः सिध्मलान्ता शब्दाः स्त्रियां स्यु.। नाभिः = अङ्गविशेष, उदरावर्त्तः, तुन्दकूपी। "सूँडी" इति लोके। कस्तूरिकामदं च। 'नाभिर्मुख्यनृपे चक्रमध्य-क्षत्रिययो. पुमान्। द्वयो. प्राणिप्रतीके स्यात्, स्त्रियां कस्तूरिकामदे।' इति—(मे० पृ० १०६ श्लोकः ५)। राजसभा = राज्ञां परिषद्। "राजदरबार" "कचहरी" इति च लोके। राज्ञां सभेति तत्पुरुष.। सभाराजेत्यत्र राजपर्य्यायस्यैवेष्यते इत्युक्तम्। तेन राजशब्दपूर्वकसभान्ततत्पु-रुषे क्लीबत्वस्य निषेधात् स्त्रीत्वम्। झल्लरी = वाद्यभेदः। 'झल्लरी झिल्लरी च द्वे हुडुक्के बा-लचक्रके।' इति—(मे० पृ० १३४ श्लोकः १५९)। चर्चरी = करशब्द हर्षक्रीडा वा। 'चर्चरी, गीतभेदे च केशभित्करशब्दयोः।' इति कोशान्तरात्' इति—(अम० सु० व्या० पृ० ४५२ स्तं० २ पं० २०, २१)। 'चर्चरी चर्भटिस्तुल्ये' इति च—(वै० पृ० ३३ श्लोक. २७)। पारी = हस्तिपादरज्जुः। ''पारी पूरपरागयो। पात्र्यां कर्पूरिकायां च पादबन्धे च हस्तिनाम्।' इति—(अने० सं० पृ० ३६ श्लोकः ४४८-९)। शेषं प्राग्वत्।

अथेदानी क्षान्तशब्दानाह हेम.--(अभि० सं० लिं० पृ० ३ श्लोक: ४१) ।

**कक्षा-ऽऽमिक्षा रिक्षा राक्षा' इति ।**

अस्य व्याख्या—

कक्षेति । एते कक्षादयो राक्षान्ता शब्दा स्त्रिलिङ्गा भवन्ति । कक्षा = अन्तरीयवस्त्रस्य पश्चिमाञ्चल, अधोऽशुकस्य पृष्ठतो निहिताञ्चल, इभरज्जु, करिमध्यरज्जु, काञ्ची, कार्यैकदेश., प्रकोष्ठश्च । 'कक्षा तु भवनान्तर्भूमेखलागजरज्जुषु ।' इति—(अने० ध्वं० मं० पृ० १३ श्लोक १०६) 'कक्षा स्यात्परिधानस्य पश्चादञ्चलपल्लवे । कक्षा स्पर्द्धास्पदेऽपि च ।' इति–(अने० समु० पृ० १३ श्लोक १२९, ७७१) । आमिक्षा = वैश्वदेवी, तप्ते पक्वे च पयसि दधियोगतो जाता दुग्धविकृति' । तत्र घनीभूत. पिण्ड आमिक्षा, जल, वाजिनम् । इति—(श० चि० पृ० २७५ स्तं० २ प० २० त ) । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति श्रुति.' इति—(त्रि० शे० व्या० पृ० १८, १९) । 'आमिक्षा मस्तु वाजिनम् ।।' इति--(त्रि० शे० पृ० ३११ श्लोक १७) । 'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगत. ।' इति—(अम० ना० लि० पृ० २५७ श्लोक: २३) । रिक्षा = यूकाण्डम्, लत्वे लिक्षा । लिक्षिका । "लीक" 'लीख" इति च प्रसिद्धः । केशकीट., परिमाणविशेषश्च । 'त्रसरेणुभिरष्टाभिर्लिक्षा सैव मरीचिका ।' इति--(वै० पृ० १८९ श्लोक ४२) । राक्षा = जतु, द्रुमामयः । "महावर" इति ख्यातः । लत्वे लाक्षा । 'राक्षा लाक्षा, जतु क्लीबे, यावोऽलक्तो द्रुमामय. ।' इति—(अम० ना० लिं० पृ० २४५ श्लोक: १२५) । 'स्याद्रङ्गमातृका लाक्षा' इति च--(त्रि० शे० पृ० २९२ श्लोक ३७) ।

तथा चामर.—(अम० ना० लिं० पृ० ४५२ श्लोक. १०)

**लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ।।' इति ।**

अस्य व्याख्या—

लाक्षेति । एते लाक्षादयो मस्यन्ताः शब्दा योषिति स्यु । 'गण्डूषा=उन्नतनाभिः । 'उन्नतनाभिस्तु गण्डूषा, नाऽपि मुखपूर्ति' इति बोपालितः' इति—(अम० सु० व्या० पृ० ४५२ स्तं० २ पं० ४१) पुंस्यपि—'गण्डूषो मुखपूर्ति स्याद् गजहस्ताङ्गुलावपि । प्रसृत्या प्रमितेऽपि स्यात्' इति--(अने० सं० पृ० १०८ श्लोक: ७७५) 'गण्डूषो मुखपूर्तीभपुष्करप्रसृताञ्जलि. ।'

इति रुद्र' इति--(अम० ना० लि० पृ० ४५२ स्त० २ प० ४०)। यादवस्त्वस्त्रीत्याह--'गण्डूषोऽस्त्रीगण्डपूर्तौ प्रसृते गजपुष्करे।' इति च (वै० पृ० २५९ श्लोक ३४)। गृध्रसी = वातरोगभेदः। स तूरुसन्धौ भवति। चमसी = यज्ञपात्रभेद। "प्रणीता" इति प्रसिद्धा। वैद्यकग्रन्थे तु--माषपिष्टपोटलिकाविशेषश्च। 'चमसो यज्ञपात्रस्य भेदेऽस्त्री, पिष्टकेस्त्रियाम्।' इति--(मे० पृ० १७१ श्लोक. २१)। मसी = कज्जलम्, मेला, लिपिप्रयोजना, पत्राञ्जनम्, लिपिसाधनविशेषः। "स्याही" इति लोके। शेफालिकावृन्ते च। 'मसि.' इत्यपि। 'अथ स्त्रीपुंसयो केलिर्मणिर्योनिर्मसिर्मुनि।' इति। 'मेला मसीजल पत्राञ्जन च स्यान्मसिर्द्वयो।' इति च--(त्रि० शे० पृ० २९८ श्लोक. २७)। हेमचन्द्रस्तु मूर्धन्योपधमाह--'मलिनाम्बु मषी मसी'--इति-(अभि० स० अभि० चि० पृ० २२ श्लोक ४८४)। शेष प्राग्वत्।

दुर्गस्तु क्रमरहितान् दृगादीन् स्वाहापर्य्यन्तान् स्त्रीलिङ्गवाचकशब्दानाह--(दु० लि० पृ० ४ त श्लोक. १० त १९ यावत्)।

···दृगो-षधि-र्ज्योत्स्ना नौः पृतना खनिः खानिः॥
रशना रसना रास्ना सास्ना धाना च रोचना धेनुः।
तनु-निःश्रेणि-वपा-वापी-कृपा-सशिफा-वणिज्या--ज्याः॥
हुम्भा-भम्भा-रम्भा अम्बा-कम्ब्य-क्षदुन्दुभिः सन्ध्या।
स्नायुः सरयु-रुमा मा शमी च सीमा छटा प्रतिमा॥
छाया माया रथ्या तारा च दया शिरोधरा धारा।
प्रतिसीरा च शिरा-ऽऽर्द्रा मथुरा कृसरा सुरा हारा॥
यात्रा मात्रा भस्त्रा द्रंष्टा निद्रा वरत्रया गोत्रा।
वागुरया कन्धरया शर्करया मन्दुरा मदिरा॥
एला लाला लीला हेला दोला मन.शिला माला।
शाला शिला च वेला कला-ऽऽवलि-तुलाश्च मेखलया॥
ज्वाला-ऽऽलि-बला-फेला वलि-रिल्वलया सुवर्चला धूलिः।
शष्कुलि-पालि-स्थाली-प्रवेणि-वेण्य-श्रि-तडि-त्ताडि॥
कृष्य-टवी-छवि-नीवी-ग्रीवा-मूर्वा-मुषुण्ढि-शम्या-ऽर्वाक्।
वासोदशा-कशा-पेशि-शारिवाः पथ्यया च कथा॥
मञ्जूषा गण्डूषा मूषा रुट् तृट् स्वधा मषि-र्मसी।

अतसी वृसी वसा नासा स्नुषयो-रु-र्गुहा च कुहूः ॥
द्राक्षा लक्षा लाक्षा लिक्षा कक्षा च काङ्क्षया स्वाहा ।' इति ।

एषा व्याख्या—

दृगिति । रशनेति । हम्भेति । छायेति । यात्रेति । एलेति । ज्वालेति । कृषीति । मञ्जूषेति । द्राक्षेति च । एते दृगादय स्वाहान्ता शब्दा सह शिफया, वरत्रया, वागुरया, कन्धरया, शर्करया, मेखलया, इल्वलया, पथ्यया, स्नुषया, काक्षया च सह स्त्रीलिङ्गा भवन्ति। दृक् = चक्षु , दर्शनम्, बुद्धिश्च । 'दृक् स्त्रिया दर्शने नेत्रे बुद्धौ च, त्रिषु वीक्षके ।' इति—(मे० पृ० १६३ श्लोक ८) । ओषधि. = व्रीहियवादि', फलपाकान्ता, फलपाक एवान्तो यस्याः । 'ओषधि फलपाकान्ता' इति (अम० ना० लि० पृ० १२९ श्लो० ६) । तथा च प्रयोगः—'यत्रौषधयो रजन्याम्' इति कुमार.—इति मुकुट. । 'यत्रान्या ओषधयो म्लायन्ते' इति श्रुति.' इति च-(अम० सु० व्या० टि० पृ० १२९ स्त० १ प० ३८, ३९) । 'ओषधी' इत्यपि । ज्योत्स्ना = चन्द्रप्रभा । 'ज्योत्स्ना चन्द्रातपेऽपि स्याज्ज्योत्स्नायुक्तनिशि स्मृता ।' इति—(मे० पृ० ८३ श्लो० ८) । नौ. = जलतरणकाष्ठप्रञ्चयविशेष , नौका । "नाव" इति लोके । 'स्त्रिया नौस्तरणिस्तरि. ।।' इति—(अम० ना० लि० पृ० ५६ श्लो० १०)। पृतना = सेनामात्रम्, सेनाविशेषश्च । 'सेना पृतनानीकिनी चमू.' इति । 'वाहिनी पृतना चमूः ।' इति च--(अम० ना० लि० पृ० २८९, २९० श्लो० ७८, ८१) । खनि. खानिश्च द्रव्याकरविशेषौ, रत्नाद्युत्पत्तिस्थानम्। 'खनि' स्त्रियामाकर. स्यात्' इति (अम० ना० लि० पृ० १२६ श्लो० ७) । 'खनिरेव मता खानि ' इति द्विरूपकोषः' इति—(अम० सु० व्या० पृ० १२६ स्तं० २ प० २५) । रशना = काञ्ची, स्त्रीकटिभूषणम् । 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ।' इति—(अम० ना० लि० पृ० २४० श्लोकः १०८) रसना = जिह्वा । 'रसनं स्वदने ध्वनौ । जिह्वाया तु न पुंसि स्यात्' इति—(मे० पृ० ९१ श्लोक. १२) । 'रसनं स्वदने ध्वाने, रसना काञ्चिजिह्वयोः । रसनं चापि रास्नायाम्' इति—(वि० प्र० पृ० ८७ श्लोकः ३०) । 'रसनं निस्वने स्वादे, रसना काञ्चिजिह्वयोः।' इत्यजयधरणी' इति—(अम० सु० व्या० पृ० २४० स्तं० २ पं० १५) । 'रसन तु ध्वनौ स्वादे, रसज्ञारास्नयो' स्त्रियाम् ।' इति रभस.' इति— (अम० सु० व्या० पृ० २३४ स्तं० २ प० १०, ११) । 'रशना' इत्यपि । दन्त्यतालव्यमध्योऽयम् । 'तालव्या अपि दन्त्याञ्च शम्बशम्बलशूकरा । रशनाऽपि जिह्वायाम्' इत्यूष्मविवेक.' इति च--(अम० सु० व्या० पृ० २४० स्तं० २ पं० १३, १४) । रास्ना = ओषधिविशेषः, गन्धनाकुली । "रासना" इति ख्याता । एलापर्णी च । 'नाकुली सुरसा-रास्ना सुगन्धा गन्धनाकुली ।।' इति—(अम० ना० लिं० पृ० १६७ श्लोक ११४) । एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ।' इति च--(अम० ना० लिं० पृ० १७५ श्लोकः १४०) ।

रोचना=गोपित्तम्, रक्तकह्लारम्, वरस्त्री च। 'रोचना रक्तकह्लारे गोपित्तवरयोषितोः।' इति—(मे० पृ० ९१ श्लोक १६)। धेनुः=प्रत्यग्रप्रसवा, अभिनवप्रसवा, नूतनप्रसूता। 'धेनुः स्यान्नवसूतिका।' इति—(अम० ना० लिं० पृ० ३२६ श्लोक. ७१)। 'धेनुर्गोमात्रके दोग्ध्र्याम्' इति—(अने० स० पृ० २३ श्लोक २७५)। तनुः=शरीरम्, त्वक् च। 'तनुः काये त्वचि स्त्री स्याद् त्रिस्वल्पे विरले कृशे।' इति—(मे० पृ० ८३ श्लोकः ९)। 'त्वग्देहयोरपि तनुः' इति च—(अम० ना० लिं० पृ० ४१६ श्लोकः ११३)। निश्रेणि=आरोहिणी, काष्ठादिकृतारोहणमार्गः, खर्जूरीवृक्षश्च। 'निश्रेणिरधिरोहिण्या खर्जूरीपादपेऽपि च।' इति—(अने० सं० पृ० ६६ श्लोक २२३)। वपा=विवरम्, विलम्, मेदश्च। 'वपा विवरमेदसो।' इति—(अने० स० पृ० २६ श्लोकः ३०३)। वापि=उदकाधारविशेष। "वावली" "वावड़ी" इति च लोके। 'वापि तु दीर्घिका।' इति—(अम० ना० लि० पृ० १०४ श्लोक २८)। 'वापि' इत्यपि। 'वाप्या वापिरिति स्मृता।' इति द्विरूपकोष' इति च—(अम० सु० व्या० पृ० १४ स्तं० १ पं० १०)। कृपा=करुणा, दया। 'कृपा दयायाम्' इति—(मे० पृ० १०२ श्लोकः ४)। सह शिफया वर्तत इति सशिफा। शिफा=तरुजटा, सरित्, नदी, मांसिका, जटामांसी, माता च। 'शिफा जटायां सरिति मांसिकायां च मातरि॥' इति—(मे० पृ० १०४ श्लोक ३)। वणिज्या=वणिग्भावः, वणिक्कर्म। 'वाणिज्यं तु वाणिज्या स्यात्' इति—(अम० ना० लि० पृ० ३२८ श्लोक ७९)। हम्भाभम्भारम्भाः—हम्भा च भम्भा च रम्भा च इतरेतरयोगो द्वन्द्वः। हम्भा=गोध्वनिः, गवां रेम्भणम्। "गौओं का राम्भणा" इति लोके। 'हम्भा रेम्भणं च गवां ध्वनौ॥' इति—(त्रि० शे० पृ० ३०३ श्लोकः २१)। भम्भा=वाद्यविशेषः, भेरी। 'दुन्दुभिस्त्वानको भेरी भम्भा नासूश्च नान्द्यपि।' इति—(वै० पृ० १४६ श्लोकः १३३)। रम्भा=मोचा, कदली। "केला" इति लोके अप्सरोविशेषश्च। 'कदली सुकुमारा च रम्भा भानुफला मता।' इति धन्वन्तरिः' इति—(अम० सु० व्या० पृ० १६७ स्तं० १ पं० ८, ९)। 'रम्भा कदल्यप्सरसो' इति च—(मे० पृ० १०६ श्लोक. ७)। अम्बा= जननी, माता। 'अम्बा तु माता' इति नाट्योक्ता' इति—(वै० पृ० १४४ श्लोकः १०६)। 'जनयित्री जनन्यम्बा माता' इति च—(वै० पृ० १७५ श्लोकः २६)। कम्बिः =वंशादीनां भागविशेषः, दर्विश्च। 'कम्बिरंशे च वंशस्य खजाकायामपि स्त्रियाम्॥' इति—(मे० पृ० १०४ श्लोकः २)। अक्षदुन्दुभिः=पाशकषडङ्किता। अक्षाः पाशकास्तैरुपलक्षितो दुन्दुभिः अक्षदुन्दुभिः। अक्षविषयो दुन्दुभिशब्दः स्त्रीलिङ्ग इत्यर्थः। इयं दुन्दुभिः पाशकषडङ्किता। अक्षबिन्दुत्रिकद्वयम्। तथा च प्रयोगः—'दुन्दुभ्या किल तत्कृतं पतितया यद् द्रौपदी हारिता' इति—(दु० लिं० व्या० पृ० ५ पं० १४-५)। अक्षग्रहणं वाद्यविशेषार्थस्य दुन्दुभिशब्दस्य निवृत्त्यर्थम्। तस्य पुंस्त्वमेव। 'केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम्' इति—(वेणीसं० अं० १

श्लोकः २२) । इति-(दु० लिं० व्या० पृ० ५ प० १६-७) । स्नायुः = अस्थिबन्धनम्, अङ्गप्रत्यङ्ग-सन्धिबन्धनरूपा स्नायुः । 'अथ वस्नसा । स्नायुः स्त्रियाम्' इति—(अम० ना० लि० पृ० २२५ श्लोकः ६६) । सरयुः = नदीविशेषः । 'सरयू' इत्यपि । 'सरयूसलिल स्वादु बलपुष्टिप्रदायकम् ।' इति—(रा० नि० पृ० ३८३ श्लोकः १३) । उमा = अतसी । "अलसी" इति लोके । पार्वती च । 'उमा दुर्गाऽतसी च' इति—(त्रि० शे० पृ० २५६ श्लोकः २९३) । मा = लक्ष्मीः, मानश्च । 'मा स्त्री माने मृतौ वेलामेधाश्रीमध्यमातृषु ।' इति नानार्थरत्नमाला । 'मा जालन्ध्री व्यथा लक्ष्मीर्माता' इति च--(एका० ना० मा० पृ० १० श्लोकः ७७) । शमी = शिम्बा, वृक्षविशेषश्च । 'शमी शक्तुफलाया स्याच्छिम्बाया गुग्गुलावपि ।' इति— (शि० को० पृ० ३० श्लोक ३३२) । 'शमी हरिद्रा वृद्धिश्च लक्ष्मी स्यात्पद्मचारिणी ।' इति च—(रा० नि० पृ० ४३० श्लोक ११) । प्रतिमा = प्रतिकृतिः, अनुकृतिः, गजदन्तबन्धश्च । 'प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि ।' इति—(मे० पृ० १११ श्लोक. ४८) । तारा = दशमहाविद्याप्रभेदः, भगवती, नक्षत्रम्, बालिभार्या, सुरगुरुपत्नी, कनीनिका च । 'नक्षत्रे चाक्षिमध्ये च तारा स्यात्तार इत्यपि ।' इति व्याडिः' इति—(अम० सु० व्या० पृ० ३७ स्त० २ प० २१, २२) । 'तारो वानरभिन्मुक्ताविशुद्ध्योः शुद्धमौक्तिके । ना, नक्षत्रेऽक्षिमध्ये च न ना, रूप्ये नपुंसकम् ॥ स्त्री बुद्धदेवताभेदे बालिगीष्पतिभार्य्ययोः । त्रिलिङ्गोऽत्युच्चशब्दे च' इति च— (मे० पृ० १२५, १२६ श्लोक. ४३, ४४) । दया = कृपा । 'कृपा दयाऽनुकम्पा स्यात्' इति—(अम० ना० लिं० पृ० ७८ श्लोकः १८) । शिरोधरा = ग्रीवा । 'शिरोधरा वसुबिरा शिरोधिर्ग्रीपलण्डिका ।' इति— (वै० पृ० १८० श्लोकः ८४) । धारा = जलादिप्रपातः, सैन्याग्रिमस्कन्धः, अश्वगतिपञ्चकं च । 'धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके ।' इति—(मे० पृ० १२६ श्लोक. ५०) । 'धारा सैन्याग्रदेशे च तुरङ्गगतिपञ्चके ॥ घटादिच्छिद्रसन्तत्योः प्रपाते स्याद् द्रवस्य च । खड्गादेर्निशिते देशे' इति च— (श० र० स० पृ० २५६ पं० २, ३, ४) । शिरा = रुधिरादिवाहिनी नाडी । 'शिरो ना पिप्पलीमूले, स्याद्धमन्या च योषिति ।' इति—(मे० पृ० १२९ श्लोक ९१) । मूर्धन्यादिरपि । 'नाडी तु धमनिः षिरा' इति च—(अम० ना० लि० पृ० २२४ श्लोकः ६५) । नक्षत्रविशेषः, षष्ठनक्षत्रम् । 'आर्द्रा नक्षत्रभेदे स्यात्स्त्रिया, क्लिन्नेऽभिधेयवत् ॥' इति—(मे० पृ० १२३ श्लोकः ७) मथुरा = पुरीविशेषः, मधुपुरी, मधुरा । 'मथुरा तु मधूपघ्नम्' इति—(त्रि० शे० पृ० २७९ श्लोक १५) । शब्दार्थचिन्तामणौ त्वस्या नाम्नो विशेषतोक्ता—'मथुराऽत्र विलोमेन मध्यमोनं यदक्षरम् । यो न स्मरति लोकेऽस्मिंस्तन्मध्य तन्मुखोपरि ।' इति च—(श० चि० पृ० ४९८ स्तं० १ पं० २७, २८) ।'मथूरा' इत्यपि । कृसरा = तिलौदनः । "खिचड़ी" इति लोके । 'कृसरा कृसरस्तिलौदनः' इति हर्षारुणौ' इति—(दु० लिं० पृ० ४६ पं० १) । अयं कृसरः,

इयं कृसरा, तिलतण्डुलमिश्रं भोजनम् । तालव्यमध्योऽपि–'कृशराऽपि तिलौदने ॥' इति—(हा० व० पृ० ४०४ श्लो० २६९) । 'किगरा' इत्यपि । 'कृशरा किशराऽपि च ।' इति च—(द्वि० को० पृ० ४१० श्लो० २१) । सुरा = मदिरा, देवस्त्री । 'सुरा देवस्त्रियां मद्ये' इति—(ना० मं० पृ० ७१ प० १६) । हारा = मुक्तामाला । 'क्रोडा हारा तथा दारा त्रय एते यथाक्रमम् । क्रोडे हारे च दारेषु शब्दा. प्रोक्ता मनीषिभि ॥' इति व्याडिशुभाङ्कौ । 'हट्टचन्द्र' इति वा पाठ ।' इति—(अम० सु० व्या० पृ० २०५ स्त० १ पं० २४, २५) । निद्रा = स्वप्न । 'स्वापस्तु स्वप्नसशयौ । निद्रा गुडाका सुप्त च' इति—(वै० पृ० ९९ श्लोक: १९७) । वरत्रा = चर्म्मरज्जु, गजमध्यबन्धन च । 'वद्ध्री नद्ध्री वरत्रा च' इति—(वै० पृ० १३९ श्लोक ४४) । 'चूषा कक्ष्या वरत्रा स्यात्' इति च—(वै० पृ० १११ श्लोक: ८४) । गोत्रा = पृथिवी, गोसमूहश्च । 'गोत्रा भूगव्ययो:' इति (मे० पृ० १२४ श्लोक: २६) । कन्धरा = ग्रीवा । 'ग्रीवाया कन्धरा मता ।' इति—(मे० पृ० १३१ श्लो० १२३) । मन्दुरा = अश्वशाला । 'मन्दुरा वाजिशालायाम्' इति—(मे० पृ० १३७ श्लो० २००) । मदिरा = मद्यम् । 'मदिरा कश्यमद्येऽपि' इति च—(अम० ना० लिं० पृ० ३५० श्लोक ४०) । एला = बहुलगन्धा, ऐन्द्री । "इलायची" इति लोके । 'तटनीलिकयोरेला' इति—(रा० नि० पृ० ४२६ श्लो० ५५) । लाला = श्लेष्मादिस्रव, मुखस्राव । "लार" थूक" इति च लोके । 'लाला भवेन्मुखस्राव सृणिका स्यन्दिनी च सा ।' इति—(रा० नि० पृ० ४०० श्लो० ५५) । मन:शिला = धातुद्रव्यविशेष । 'कुनटी तु मन शिला' इति—(रा० नि० पृ० ४२१ श्लोक: ६) । 'मन शिला स्यात्कुनटी मनोज्ञा शिला मनोह्वापि च नागजिह्वा ।' इति च—(रा० नि० पृ० १५५ श्लो० १५८) । आवलि. = सान्तर्पक्ति, वृक्षादिपक्ति, परम्परा च । 'आवलि: पद्धति. पंक्तिरालिर्लेखा च मालिका ।' इति—(वै० पृ० १८८ श्लो० २८) । तुला = ऊर्ध्वमानम्, पलशतम्, राशिविशेष, सादृश्य च । 'तुला सादृश्यमानयो ॥ गृहाणा दारुबन्धाय पीठिकायामपीष्यते । राशौ पलशते भाण्डे' इति—(मे० पृ० १४६ श्लो० २४, २५) । ज्वाला च आलिश्च बला च फेला चेतीतरेतरयोगो द्वन्द्व: । ज्वाला = अग्न्यर्चिर्विशेष: । 'शिखा जिह्वार्चिरपुमान्, कीला ज्वाला च नृस्त्रियो ।' इति—(वै० पृ० ११ श्लो० २९) । आलि:- = सखी, रेखा च । 'आलि सखी सेतुरालिरालिरावलिरिष्यते ।' इति—(अने० समु० पृ० ३८ श्लो० ४२३) । वलि. = त्वग्मांससङ्कोच, मध्यगरेखा, ऊर्मि:, गृहदारु च । 'वलिर्मध्यगरेखोर्मिजीर्णत्वग्गृहदारु च ।' इति—(वै० पृ० २२२ श्लो० ३३) । इल्वला: = मृगशीर्षशिरोदेशस्था: पञ्च स्वल्पतारका: । नित्यबहुवचनान्तोऽयम् । 'इन्वका अपि ।' 'इन्वकास्तच्छिरोदेशे तारका इल्वला मता ।' इति—(वै० पृ० २० श्लो० ३९) । धूलि: = पांशु. । 'धूलि: स्त्रियां,

रजः पांशू रेणुः पुंसि' इति—(वै० पृ० १२५ श्लो० २५) । शष्कुलिश्च पालिश्च स्थाली च प्रवेणिश्च वेणी च अश्रिश्च तडिश्च ताडिश्च एषां समाहारो द्वन्द्वः । शष्कुलिः=कर्णदेशः, अपूपविशेषश्च । "सोहाली" इति लोके । 'शष्कुल्यपूपभेदेऽपि' इति—(वै० पृ० २४९ श्लो० २६) । 'शष्कुली त्वायता पिष्टगुडतैलतिलैः कृता ।' इति च—(वै० पृ० १६५ श्लो० ७५) । पालिः=कर्णलतिका, सेतुश्च । 'पालि स्त्र्यस्त्र्यङ्कपंक्तिषु ।।' इति—(अम० ना० लिं० पृ० ४३१ श्लो० १९७)। 'सश्मश्रुयुवती पालि प्रस्थः (पक्ति) कर्णलताऽपि च ।' इति–(त्रि० शे० पृ० ३७२ श्लो० ३९९) । 'पालि कर्णलताया स्यात्प्रदेशे पक्तिचिह्नयो. ।' इत्यजय' इति—(अम० सु० व्या० पृ० ४३१ स्त० २ प० २४, २५) । 'पाली' इत्यपि । 'पालिः कर्णलताग्रेऽस्नौ पक्तावङ्कप्रदेशयो । छात्रादिदेये, स्त्री पाली यूका सश्मश्रुयोषितो. ।' इति च–(मे० पृ० ४३१ श्लो० १९७) । स्थाली=पिठर, ओदनादिपचनपात्रम् । 'स्थाल भाजनभेदेऽपि, स्थाली स्यात्पाटलोखयो. ।' इति—(मे० पृ० १४९ श्लो० ५५) । प्रवेणिः=गीतप्रस्तारः । गजोपर्य्यास्तरणचित्रकम्बलः । प्रोषितभर्त्तृकादिधार्यकेशरचनाविशेषश्च । 'प्रवेणिः स्त्री कुथावेण्यो.' इति—(मे० पृ० ४९ श्लो० ६३) । 'प्रवेणी' इत्यपि । 'स्त्री प्रवेणी' । 'कुथं त्रिषु' इति बोपालितः' इति—(अम० सु० व्या० पृ० २७९ स्तं० २ पं० २४) । 'प्रवेण्यास्तरणं वर्ण.' इति च—(अम० ना० लिं० पृ० २७९ श्लो० ४२) । वेणिः=केशबन्धनविशेषः । 'वेणिप्रवेणी' इति—(अम० ना० लिं० पृ० २३७ श्लो० ९८) । 'करणिश्रोणिवेणय.' इति स्त्रीकाण्डे निगम.' इति—(अम० सु० व्या० पृ० २३७ स्तं० १ पं० २०, २१) । 'वेण्यपि' । 'वेणी सेतुप्रवाहयोः । देवताडे केशबन्धे' इति—(अने० स० पृ० १४ श्लोकः १५६) । 'देवताडेऽपि वेणी स्यात्प्रवेण्यामपि योषिति ।' इति रभस' इति च—(अम० सु० व्या० पृ० १५१ स्तं० २ प० ३०, ३१) । अश्रिः=कोटिः, कोणभाग. । 'कोणस्तु स्त्रियः पाल्यश्रिकोटयः ।।' इति—(अम० ना० लि० पृ० २९५ श्लोक ९३) । 'अश्रि. कोणैकदेशयोः ।' इति च धरणिः' इति— (अम० सु० व्या० पृ० २९५ स्त० २ प० १४) । तडिः=आघातस्थानम् । ताडि =वृक्षविशेष., आभरणविशेषश्च । 'ताल्या दृढदला ताडी पत्रताली वराङ्गना ।' इति—(वै० पृ० ६३ श्लोकः २२४) । कृषि.=कर्षणम् । "जुताई" "किसानी" इति च—लोके । 'अनृतं कृषि' इति—(अम० ना० लिं० पृ० ३०३ श्लोक २) । 'अनृत कृषावसत्ये च' इति रुद्रः । 'प्रमृत' इति तु सभ्यपाठः–इति स्वामी । 'प्रमृतं कर्षण स्मृतम् ।' इति (मनु ४।५) अत्र तु कृषेर्निरुक्तिः—'शुनो वृत्ति स्मृता सेवा गर्हितं तद् द्विजन्मनाम् । हिंसादोषप्रधानत्वादनृतं कृषिरुच्यते ।' इति च—(अम० सु० व्या० पृ० ३०३ स्तं १ पं० ७त) । अटवी=अरण्यम्, वनम् । 'अटव्यरण्य विपिनम्' इति—(अम० ना० लि० पृ० १२७ श्लो० १) । छविः=त्वक् । 'राढा शोभा छवी रुक् त्विट्' इति—(वै० पृ० १७१ श्लो० १५०) । 'छविः

शोभारुचोर्योषित्' इति च--(मे० पृ० १५८ श्लो० ७)। नीवी=मूलधनम्, युवतिजघन-वस्त्रबन्धश्च। 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च।' इति--(अम० ना० लि० पृ० ४३४ श्लो० २१२) 'नीवी स्त्रीकटीवस्त्रबन्धने। मूलद्रव्ये परिपणे' इति--(अने० स० पृ० ४३ श्लो० ४५१)। परिपण आडम्बरः—इत्यनेकार्थकैरवाकरकौमुदी' इति च--(अम० सु० व्या० टि० पृ० ३२८ स्त० २, प० ३८)। ग्रीवा=कन्धरा। "गरदन" इति लोके। 'स्यात्तु ग्रीवा कन्धरायां तच्छिरायां च योषिति।' इति--(मे० पृ० १५८ श्लो० ६)। मुषुण्ढि=दण्डविशेष, अग्नियत्रम्, आयुधविशेषश्च। 'मुसुण्ठी' इत्यपि। 'मुसुण्ठी स्याद्दारुमयी वृत्ताय. कीलसञ्चिता।' इति--(वै० पृ० ११८ श्लो० १७०)। शब्दार्थचिन्तामणौ तु 'भुशुण्डी' इति दृश्यते। तत्रैव तस्या लक्षणम्—'उड्डीयोड्डीय च प्राप्य नदन्ती दशकर्त्तृका। क्रमते चानताङ्गी या सा 'भुशुण्डी' निगद्यते॥' इति च—(श० चि० पृ० ४४७ पं० ११ तः)। अन्यत्रापि, 'भुशुण्डी परिघायुधा।' इति। शम्या=दक्षिणहस्तगृहीततालविशेषः, युगकीलिका च। "सैला" "संबल" इति वा लोके। 'शम्या तु युगकीलकम्।' इति--(वै० पृ० १२५ श्लोक २८)। यष्टिरपि। यथा--'धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः। शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य तु॥' अत्र शम्या यष्टिरिति कुल्लूकभट्ट' इति च--(श० चि० पृ० ५१८ स्तं० १ पं० २७ तः)। अर्वाक्=अवान्तरम्, प्रधानान्त.पाति, मध्य-वर्तिं, अन्तर्गतम्। वासा=औषधिविशेष, आटरूषक.। "अरडूसा" इति लोके। वृषो वासाऽऽटरूषकः।' इति--(प० र० मा० पृ० १५ प०१०)। 'वासो गृहेऽप्यवस्थाने, वासा स्यादाटरूषके।' इति च रुद्रः' इति--(अम० सु० व्या० पृ० १६३ पं० २३)। पेशि=मांसा-द्येकदेश., शुण्ठः, मांसलता, पक्षिणामण्ड च। 'पेशिः शुण्ठ.' इति--(वै० पृ० १६६ श्लोक. ८९)। 'पेशिर्मांसलता' इति—(वै० पृ० १८२ श्लोकः ११२)। 'पेशी' इत्यपि। 'पेशी कोशश्च डिम्बोऽण्डम्' इति--(वै० पृ० ३० श्लोक. ५०)। 'पेशी सुपक्वकणिके मांस्यां खड्गपिधानके। मांसपिण्ड्यामण्डभेदे' इति च—(मे० पृ० १६३ श्लोकः १२)। पथ्या=हरी-तकी। "हड़" इति लोके। 'पथ्या मुण्डी–विजया–वन्ध्या–पद्मासु' इति—(शि० को० पृ० ३१ श्लोकः ३४३)। 'पथ्या हरीतकी, महाश्रावणी, पद्मचारिणी च' इति धन्वन्तरि.' इति--(रा० नि० पृ० ४३९ द्रव्यसख्या ५३)।' 'अभया चिर्भिटा वन्ध्याकर्कोटी च मृगादनी। पथ्याया सम्प्रवक्ष्यन्ते चतस्रश्च भिषग्वरै.।' इति च—(रा० नि० पृ० ४२९ श्लोकः ३)। कथा= कथनम्, प्रबन्धकल्पना, कादम्बर्य्यादिः। 'प्रबन्धकल्पना कथा' इति—(अम० ना० लिं० पृ० ६५ श्लोकः ६)। 'कथा सूत्रं प्ररोचना।' इति—(वै० पृ० १४७ श्लोकः १४१)। 'कथा त्वाख्यायिकाऽऽख्यानम्' इति च--(वै० पृ० ३४ श्लो० ३८)। रुट्=रोषः, कोपः।

'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ।' इति––(अम० ना० लि० पृ० ८० श्लोक २६)। टापि। (भागुरिमतेन) 'क्रोधो भाम क्रुधा रुषा।' इति च शब्दार्णव' इति––(अम० सु० व्या० पृ० ८० स्त० २ प० १९)। तृट्=तृष्णा। 'तृट् लिप्सायामुदन्यायां स्मरपुत्र्यामपि स्त्रियाम्।' इति––(मे० पृ० १६६ श्लो० १४) (टाबन्तापि भागुरिमते) 'तृषा लिप्सार्तृषोः स्त्रियाम्।' इति च––(मे० पृ० १६६ श्लोक १३)। स्वधा=पितृदानार्थो मत्रविशेष.। मषि=लेखद्रव्यविशेष। 'मषी' इत्यपि। 'मालिनाम्बु मषी मसी' इति––(अभि० स० अभि० चिं० पृ० २२ श्लोक ४८४)। 'मसि' 'मसी' इति च। 'मेला पत्राञ्जन मसि।' इति––(हा० व० पृ० ४०६ श्लो० २१२)। 'वर्गिका मसी॥ मसिर्ना' इति––(त्रि० शे० पृ० २७२ श्लोक ३, ४)। 'मसिजल तु मेला स्यात्पत्राञ्जन, मसिर्द्वयो॥' इति च––(त्रि० शे० पृ० २९८ श्लो० २७)। मासी=गन्धद्रव्यविशेष। 'मासी कङ्कोलीजटयो स्त्रियाम्।' इति––(शि० को० पृ० ४८ श्लोक. ५२५)। 'अथ जटादिमास्याम्। मांसी रुदन्त्याम्' इति च––(रा० नि० पृ० ४२७ श्लोक ७७)। अतसी=क्षुमा। "अलसी" इति लोके। 'अतसी स्यादुमा क्षुमा।' इति––(अम० ना० लि० पृ० ३०८ श्लोक. २०)। वृसी=आसनविशेष:, ब्रह्मचर्याद्यासनम्। 'अतसी वृसी मासी' इति चन्द्रगोमी' इति––(अम० सु० व्या० पृ० २६४ स्त० १ प० २४)। 'मूर्धन्यान्तोऽपि।' 'व्रतिनामासन वृषी।' इति––(अम० ना० लिं० पृ० २६४ श्लोक. ४६)। 'गण्डूषा मञ्जूषा वृषी' इति च मूर्धन्यान्तेषु लिङ्गकारिका––इति मुकुटः' इति––(अम० सु० व्या० टि० पृ० २६४ स्तं० १ प० ३९, ४०)। वसा=मेद, शुद्धमांस-स्नेह। 'वसा त्वामिषो रसः।' इति –(वै० पृ० १८२ श्लोक. ११४)। नासा=नासिका। 'घ्राणं गन्धवहा नासा नसा नस्या च नासिका।' इति साहसाङ्क' इति–– (अम० सु० व्या० पृ० २३३ स्तं० २ प० २६, २७)। स्नुषा=पुत्रपत्नी। 'समाः स्नुषाजनीवध्व.' इति––(अम० ना० लिं० पृ० २०६ श्लोक. ९)। ऊरु=जघा, जानूपरिभाग। 'सक्थि क्लीबे, पुमानूरुः' इति––(अम० ना० लिं० पृ० २२७ श्लोक ७३)। कुहू=अमावस्याविशेषः, नष्टचन्द्रकला। 'सा (अमावास्या) नष्टेन्दुकला कुहू।' इति––(अम० ना० लि० पृ० ४६ श्लोक. ९)। 'कुहू स्त्री कोकिलालापनष्टेन्दुकलदर्शयो॥' इति––(मे० पृ० १७५ श्लोकः २)। 'कुहु' इत्यपि।। मृग-य्वादित्वाद् ह्रस्वोऽपीत्यन्ये। 'धेनूरुरज्जूकुहुसरयुतनुकरेणव स्त्रियाम्' इति च विन्ध्यवासी' इति–– (अम० सु० व्या० पृ० ४६, स्तं० २ प० १६, १७)। द्राक्षा=मृद्वीका। "दाख" "मुनक्का" "अँगूर" इति च लोके। 'मृद्वीका गोस्तनी द्राक्षा' इति– (अम० ना० लिं० पृ० १६४ श्लोकः १०७)। लक्षा=सहस्राणा शतम्। 'लक्षा न पुंसि संख्याया, क्लीबं व्याजशरव्ययोः॥' इति––(मे० पृ० १६७ श्लोकः २३)। कांक्षा=वाञ्छा, इच्छा। 'इच्छा कांक्षा स्पृहेहा तृड्

वाञ्छा लिप्सा मनोरथ ।।' इति--(अम० ना० लि० पृ० ८१ श्लोक २७) ।

अथेदानी ह्रस्वेकारान्तान् भङ्ग्यादीन् कीर्त्यन्तान् स्त्रीलिङ्गवाचकशब्दानाह हेम । इति--(अभि० सं० लि० पृ० ३४ श्लोक ४१, ४२, ४३, ४४, ४५, ४६) । ।

... .... भङ्ग्या-ऽऽवल्या-ऽऽयति-स्त्रोटिः ।। २४ ।
पेशि-र्वासि-र्वसति-विपणी नाभि[१]-नाल्या-ऽऽलि पालि-
र्भल्लिः पल्लि-र्भ्रुकुटि-शकटी चर्चरिः शाटि-भार्चतिः ।
खाटि-र्वर्ति-र्व्रतति-वमि-शुण्ठी-ति रीति-र्वितर्दि-
र्द[२]र्वि-र्नीवि-च्छवि-लिबि-शठि-श्रेढि-जात्या[३]ऽजि-रा[४]जि ।।२५।।
रुचिः सूचि-साची खनिः खानि-खा[५]री ।
खलिः कीलि-तूली क्लमि-र्वापि-धूली ।
कृषिः स्थालि-हिण्डी त्रुटि-र्वेदि-नान्दी
किकिः कुक्कुटिः काकलिः शुक्ति-पंक्ती ।।२६।।
किखि-स्ताडि-कम्बी द्युतिः शारि-राति-

---

पाणिनीयेऽपि--(१) (नाभिरक्षत्रिये) । क्षत्रियार्थे रहिते नाभिः स्त्रियां स्यात् । नाभिः=मृगमदः । सि० कौ० पृ० ३९७ सू० १५ ।

पाणिनीयेऽपि--(२) (दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः) एते स्त्रियां स्युः । पक्षे ङीष्--दर्वी, दर्वि =पाकोपकरणम् । विदी, विदिः=वेदी, वेदि =यागोपकरणी, परिष्कृता भूमिः । खनी, खनिः= आकर, गञ्जा । शानी, शानिः = पट्टवृक्षः । अश्री, अश्रि =कोटि, खड्गाद्यग्रभागः । वेशी, वेशिः=वारवध्वालयः । कृषी, कृषि =वैश्यवृत्तिविशेषः, अनृतम् । ओषधी, ओषधिः=फलपाकान्त कदल्यादिः, व्रीहिर्यवादिः । कटी, कटिः=श्रोणिदेश । अङ्गुली, अङ्गुलि =करशाखा । सि० कौ० पृ० ३९८ सू० २४ ।

(३) (आजिः स्त्रियामेव) ।। आजिः=युद्धम् । सि० कौ० पृ० ४०३ सू० १६२ ।

(४) (शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिबलिपङ्क्तयः) ।। एतेऽपि स्त्रियां स्युः । शष्कुली, शष्कुलिः= कर्णदेशः । अपूपविशेषश्च । राजी, राजिः=रेखा । कुटी, कुटि =स्वल्पगृहम् । अशनी, अशनिः=विद्युत्, पविश्च । वर्त्ती, वर्तिः=दीपादिसम्बन्धिवर्तित द्रव्यम् । भ्रुकुटी, भ्रुकुटिः=भ्रूभङ्गः । त्रुटी, त्रुटिः = कालविशेषः । बली, बलिः=जरया श्लथचर्म, त्वङ्मांससङ्कोचः । पंक्ती पङ्क्तिः = श्रेणिः, सान्तरवीथी । सि० कौ० पृ० ३९८ सू० २६ ।

(५) (खारीमानिके स्त्रियाम्) ।। इय खारी=मानविशेषः । मानिका=द्रोणचतुष्टयम् । सि० कौ० पृ० ४०१ सू० १०४ ।

स्तटि: कोटि-विष्टी वटिर्गृष्टि-वीथी ।
दरि-र्वल्लरि-र्मञ्जरिः पुञ्जि-भेरी ।
शरारि-स्तुरिः पिण्डि-माढी भुषुण्ढिः ॥२७॥
राटि-राटि-रटविः परिपाटिः
फालि-गालि-जनि-काकिनि कांतिः (नि.) ।
चारि-हानि-वलभि प्रधि-कृत्ती
चुल्लि-चुण्डि-तरयोऽतिथि-शाणी ॥२८॥
सनि: सानि-मेनी-मरि-र्मारि-रश्र्यो-
षधी विद्रिधि-र्झल्लरिः पारि-रभ्रिः
शिरोधिः कविः कीर्त्ति, इति ।

एषा व्याख्या—

भङ्गीति । पेशिरिति । रुचिरिति । किखिरिति । राटिरिति । सनिरिति च । एते भङ्ग्यादय. कीर्त्यन्ता ह्रस्वेकारान्तशब्दाः स्त्रीलिङ्गा भवन्ति । भङ्गिश्च आवलिश्च तयोः समाहारो द्वन्द्वः व्याख्या तु प्राग्वत् । आयति =दैर्घ्यम्, प्रभाव, आगामिकालश्च । 'आयतिस्तु स्त्रियां दैर्घे प्रभावागामिकालयो. ।' इति—(मे० पृ० ६१ श्लो० ९४) । वासि =तक्षणी । ''वसूली' इति लोके । 'वासी स्याद् दारुतक्षणी ।' इति—(वै० पृ० १३९ श्लोकः ३६) । वसति. =वास , निशा, निकेतन च । 'वसति स्यात् स्त्रिया वासे यामिन्या च निकेतने ।' इति—(मे० पृ० ६५ श्लो० १५१) । नालि =नाडी, शिरा, पद्मादिदण्डः, शाकविशेषः । 'मतान्तरे तु' कन्दली, तृणविशेषश्च । आलि. =वयस्या, सेतु, पक्तिश्च । 'आलिर्विशदाशये । त्रिषु, स्त्रिया वयस्याया सेतौ पक्तौ च कीर्तिता ।' इति—(मे० पृ० १४५ श्लोक २) । पालि =कर्णलताग्र, अस्रिश्च । 'पालि कर्णलताग्रेऽस्रौ पक्तावङ्कप्रदे-

(१) (त(तृ)टिसीमासम्बन्ध्याः) ॥ त(तृ)टिः=तीर कूल च । सीमा=अवधि. । सम्बध्या=सि० कौ० पृ० ३९८ सू० ३१।

(२) (लक्षा कोटि स्त्रियाम्) ॥ इयं लक्षा=सहस्राणा शतम् । कोटि—लक्षाणा शतम् । "वा लक्षा नियुत च तत्" इत्यमरात् क्लीबेऽपि लक्षम् । सि० कौ० पृ० ४०२ सू० १४७ ।

(३) (अटवी स्त्रियाम्) ॥ अटवी, अटवि—अरण्यम् । सि० कौ० पृ० ४०२ सू० १४१ ।

(४) (चुल्लिवेणिखार्य्यश्च) ॥ चुल्लि—उद्धानम् । वेणि—केशबन्धनविशेषः । खारी—मानविशेषः सि० कौ० पृ० ३९८ स० ३२

शयो ।' इति––(मे० पृ० १४७ श्लोक ३०) । भल्लि =भल्लातक । ''भिलावा'' इति लोके । पल्लि.=भिल्लादिनिवासविशेष', क्षुद्रग्राम:, कुटी, कुटीसमूहश्च । शकटि =वाहनविशेष, मुनीना वाहनविशेषश्च । चर्चरि:=गीतभेद, अनृजुकेश', करशब्दश्च । 'चर्चरी गीतभेदे च केशभित्करशब्दयो: ।' इति रुद्र ' इति––(श० चि० पृ० ९०९ स्त० १ प० ३त:) हर्षक्रीडेति सुभूतिश्च । शाटि =प्रावरणविशेष: । भाति.=शोभा । खाटि =असद्ग्रह', किण: शवरथश्च । 'शवयानं कट खाटि ' इति––(वै० पृ० १२२ श्लोक २१६) । व्रतति:=लता । 'वल्ली तु व्रततिर्व्रतती लता ।' इति––(वै० पृ० ४५ श्लोक ७) । वमि =वान्ति । 'वमन' इति लोके । 'वमिर्वान्तौ स्त्रियाम् ।' इति—(मे० ११० श्लोक २९) । शुण्ठि =महौषधम्. शुण्ठी । ''सूंठ'' इति लोके । इति =गति, गमनम् । रीति =पित्तलम् । वैदर्भ्यादिश्च । 'रीति: स्त्रिया स्पन्दप्रचारयो । पित्तले लोहकिट्टे च' इति––(मे० पृ० ५७ श्लोक: ५१) वितर्दि:=वेदिका, प्राङ्गणादिषु कृतस्योपवेशस्थानम् । 'स्याद्वितर्दिस्तु वेदिका ।' इति–(अम० ना० लि० पृ० १२२ श्लोक १६) । 'वेदिका तु वितर्दिका ।' इति च—(वै० पृ० १६१ श्लो० ३६) । दर्वि =खजाका, सर्पफणा च । 'दर्वि' स्त्रिया खजाकाया फणाया सुरगस्य च ।' इति—(मे० पृ० १०५ श्लोक ५) । लिबि'=लिपि, लिखितवर्ण', अक्षरपद्धति:, लिखिताक्षरविन्यास:, लेखनम् । 'लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ ।' इति––(अम० ना० लि० पृ० २७० श्लोक. १६) । शठि.=गन्धशटी, गन्धमूली, गन्धपलाशी । ''कचूर'' इति लोके । 'गन्धपलाशी' सुगन्धद्रव्यम् काश्मीरे प्रसिद्धम् । 'सुगन्धमूला गन्धाली शटिका च पलाशिका ।' इति—(रा० नि० पृ० १९ श्लोक: ८६) । श्रेढि =गणितप्रभेद:, लीलावत्युक्ताङ्कविशेष: । जाति:=मालती, जातीफलम्, गोत्रम्, जन्म च । 'जातिश्छन्दो जन्म गोत्रं सव्याहृतिकरोत्तरम् । सामान्यं मालती च' इति—(ना० र० मा० पृ० २८ प० ५) । आजि =युद्धम्, समस्थलं च । 'आजिर्युद्धे समस्थले ।' इति––(ना० र० मा० पृ० १७ पं० १४) । राजि:=पंक्ति', रेखा च । 'राजिस्तु पंक्तौ रेखायाम्' इति—(ना० र० मा० पृ० १७ पं० १४) । रुचि:=शोभा, दीप्तिश्च । 'रुचि. शोभास्पृहाभिष्वङ्गदीप्तिषु ।' इति–– (अने० ति० पृ० २८ श्लोक' २५१) । साचि'=तिर्यक् । ''तिरछा'' इति । ''टेढा'' इति च लोके 'तिर्यक् साचिरपि स्त्रियाम् ।' इति रत्नकोष:' इति––(अम० सु० व्या० टि० पृ० ४४', स्त० १ प० ३९) । तथा च प्रयोग — 'भित्तौ साची परिणतमुखी' इति च सप्तकुमारिका' इति—(अम० सु० व्या० टि० पृ० ४४५ स्तं० १ प० ३८, ३९) । खारि:=धान्यमानभेद: खारी, द्रोणचतुष्टयम् । 'तौ (वाहौ) द्वौ खारी' इति––(वै० पृ० १९० श्लोक: ५७) । खलि:=तैलकिट्टम् । ''खल'' इति लोके । पक्कान्नविशेषश्च । 'पिण्याको ना, खलि: स्त्रियाम् ।' इति—(वै० पृ० १३८ श्लोक: २७) । 'खलि: स्त्री तण्डुलै: पिष्टैर्जले पक्वा घनद्रवा ।' इति

च—(वै० पृ० १६५ श्लोक. ८१) । कीलि.=कीलिका । "धुरी की कील" इति लोके । तूलि:=तूली, ईषिका, स्वनाम्ना ख्यात चित्रकारोपकरणम्, चित्रकूर्चिका, शय्याविशेष:, शय्योपकरणम् । "तोसक" इति लोके । क्लमि =क्लान्ति. । हिण्डि.= । नान्दि = किकि =किकिदिव, चाष, नारिकेलश्च । कुक्कुटि:=दम्भचर्या । काकलि.= सूक्ष्मस्वर:, सूक्ष्मध्वनि. । 'काकली तु कले सूक्ष्मे' इति—(अम० ना० लि० पृ० ७२ श्लोक. २) । तथा च प्रयोग —'साधूदित काकलिभि कुलीनै:' इत्यभिनन्द.' इति—(अम० सु० व्या० पृ० ७२ स्त० १ प० १६, १७) । शुक्ति =मुक्तास्फोट. । "सीपी" इति लोके । शंखश्च । 'शुक्ति कपालशकले शखे शखनकेऽपि च । नख्यश्वावर्त्तदुर्नाममुक्तास्फोटेषु च स्त्रियाम् ।' इति—(मे० पृ० ५९ श्लोक ६६, ६७) । पक्ति =श्रेणी, दशाक्षरच्छन्द:, दशसख्या च । 'छन्दोऽपि दशम पक्ति.' इति—(ना० र० मा० पृ० २७ प० १३) । किखि:=फेरु, शृगालविशेष, लघुशृगाल. । "लोमड़ी" इति लोके । कालगोत्रविशेष., नालमूलविशेषश्च । 'किखि. स्त्री क्रोष्टुभेदेऽल्पे' इति—(वै० पृ० ६८ श्लोक: ३९) । द्युति:= रश्मि:, शोभा च । 'द्युति. स्त्री रश्मिशोभयो. ।' इति—(मे० पृ० ५५ श्लोक. २५) । शारि:=शकुनिकान्तरम्, युद्धार्थगजपर्य्याणम्, व्यवहारान्तर च । 'स्त्रियां शकुनिकान्तरे । युद्धार्थगजपर्य्याणे व्यवहारान्तरेऽपि च ।' इति—(मे० पृ० १२९ श्लोक. ८८) आति:= पक्षिविशेष:, शरारिपक्षी । 'आतिस्त्वाटि. शराटिका ।' इति—(वै० पृ० २६ श्लोक. ११) । तटि:=नदस्य तटम् । विष्टि =करणविशेष:, भद्रा, सप्तमकरणम्, आजू: वेतन बिना कर्मकर्त्ता । "वेठी" "वेठु" "बेगारी" इति च लोके । 'विष्टिस्त्रिषु कर्मकरे, स्त्र्याजूवेतनकर्मसु ।' इति—(मे० पृ० ३५ श्लोक २८) । 'विष्टि: कर्मकरे मूल्ये भद्राजूप्रेषणेषु च ।' इति—(अने० स० पृ० १० १०१) । 'आजूवेतनयोर्विष्टि. कर्मकृत्कर्मणोरपि ।' इति—(अने० समु० पृ० ४५ श्लोक. ५०७) । 'हठादभृतिक क्लेशो विष्टिराजूश्च कीर्त्यते ।' इति कोषान्तरम् इति च—(श० चिं० पृ० २५० प० २३, २४) । वटि:=वटिका, उपजिह्विका च । "दीमक" इति लोके । 'अथो वटि ॥ उत्पादिका(को) देहिका स्यात्' इति—(त्रि० शे० पृ० २८८ श्लोक: १२, १३) । गृष्टि.=वाराही, वराहकान्ता, गृष्टिभेषजम्, कन्दविशेष: । "गेंठी" इति लोके । बदरम्, सकृत्सूतगवी च । 'अथ गृष्टि: सकृत्सूतगवीबदरयो: स्त्रियाम् ।' इति—(मे० पृ० ३४ श्लोक ११) । दरि =कन्दरा, कृत्रिमगृहाकार विवरम्, गुहा । 'दरी' इत्यपि । 'कन्दरे तु दरी स्मृता ।' इति—(मे० पृ० १२६ श्लोक: ४६) । वल्लरि:= मञ्जरि: । मञ्जरि.=वल्लरि । 'मञ्ज्या मञ्जरि वल्लरी ।' इति—(वै० पृ० ४६ श्लोक. २०) । 'वल्लरिर्मञ्जरि: स्त्रियौ ।' इति—(अम० ना० लि० पृ० १३२ श्लोक: १३) । तुलस्यादेरभिनवोद्भिद् । ङीषि दीर्घान्तोऽपि । 'मेथिकाचित्रमूलयो: । वल्लरी च' इति—

एषां व्याख्या—

(रा० नि० पृ० ४२६ श्लोक ५४, ५५)। 'नवपुष्पाढ्यशाखाग्रे वल्लरी मञ्जरी तथा।' इति—(रा० नि० पृ० ३२६ श्लोक २२)। मञ्जरी = तुलसी। 'सुरभिर्बहुपत्री च मञ्जरी सा हरिप्रिया।' इति च—(रा० नि० पृ० १४४ श्लोक ७८)। तथा च प्रयोग—'व्यवृणुत वेल्लितबाहुवल्लरीका' इति माघ'। 'नववञ्जुलमञ्जरीसनाथकरम्' इति काव्यप्रकाशे—इति मुकुट।' इति—(अम० सु० व्या० पृ० १३२ स्त० १ प० ३९, ४०)। पुञ्जि = समूह.। "ढेर" इति लोके। भेरि = वाद्यविशेष। "वडा ढोल" "नगाडा" इति वा लोके। शरारि: = पक्षिविशेष। "आडी" इति लोके। 'शराररिराटिराडिश्च' इति—(अम० ना० लिं० पृ० १९६ श्लोक. २५)। 'शरालि.' अपि। 'शराति' इति पाठान्तरम्। 'आडि शरालिर्वरटी गन्धोली वानरी कपी।' इति स्त्रीकाण्डे रत्नकोष' इति—(अम० सु० व्या० पृ० १९६ स्तं० २ पं० ७, ८)। तुरि = तन्तुवायस्य काष्ठनिर्मित उपकरणविशेष:, तुरी, तुली, वयन-साधनम्। 'तत्रकाष्ठं तुरी (रि) स्त्री स्यात्' इति—(त्रि० शे० पृ० ३०५ श्लोक. १२)। पिण्डि:=रथनाभि:, पिचिण्डिका, जानुनोऽधो मांसलप्रदेशश्च। राटि = युद्धम्। "राड़" इति लोके। आटि = पक्षिविशेष:, शरारि:। अटवि: = वनम्। "जॅगल" इति लोके। परिपाटि. = अनुक्रम:, आनुपूर्वी, क्रम:। 'आनुपूर्वी स्त्रिया वावृत्परिपाटी अनुक्रम॥' इति—(अम० ना० लिं० पृ० २६१ श्लोक. ३६)। ङीषि परिपाटी च। 'कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना' इति पूर्वप्रयोग:—इति मुकुट:' इति—(अम० सु० व्या० टि० पृ० २६१ स्त० १ पं० ३९, ४०)। फाणि: (लि.) = गुड., करम्भश्च। गालि: = निन्दा। 'क्षारण गर्हण निन्दा जुगुप्सा-गालिकुत्सना।' इति—(वै० पृ० ३३ श्लोक: ३३)। 'गालि. शपनम्' इति च—(त्रि० शे० पृ० ३१० श्लोक: ९)। जनि. = उत्पत्ति, अभूतप्रादुर्भाव:, जननम्। 'जनुर्जन्मन्यपि जनिस्त-दर्थेव निगद्यते।' इति—(श० र० स० पृ० १८६ प०२०)। 'पुंस्त्वमपि'। तथा च प्रयोग:—'किमर्थं जनिना जन्तो.' इति—मुकुटपीयूषौ' इति—(अम० सु० व्या० टि० पृ० ५४ स्तं० २ पं० ३९)। कान्ति. (नि.) = शोभा, इच्छा च। 'कान्ति: शोभेच्छयो. स्त्रियाम्।' इति—(मे० पृ० ५४ श्लो० ८)। चारि: = चारी, नृत्याङ्गविशेष, पितृप्रपा च। 'आम्रसेकस्तु यस्तत्र (गयायां) सा चारी सा पितृप्रपा।' इति—(वै ०पृ० ८८ श्लोक: ६७)। हानि: = अपचय:, क्षति., क्षयम्। 'हानि: क्षये स्त्रियाम्' इति—(श० र० स० पृ० १८९ प० १७)। वलभि: = गोपानसी, कुड्येषु छादनार्थं दत्तवक्रकाष्ठम्। "छज्जा" इति लोके। पटलाधारवंशपञ्जरं च। 'शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि।' इति रभस:' इति—(अम० सु० व्या० पृ० १२१ स्तं० २ पं० २१, २२)। 'वलभीच्छादन दारुवक्रं गोपानसीं विदु:।' इति कोशा-न्तरम्' इति—(अम० सु० व्या० टि० पृ० १२१ स्तं० २ पं० ३५)। 'ह्रस्वान्तप्रयोगस्तु'—

''ता कस्याचिद्भवनवलभौ' 'चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते' इति मेघदूत । 'दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था' इत्यादिप्रयोगानुरोधाद् दीर्घान्तोपि ।' इति--(अम० सु० व्या० टि० पृ० १२२ स्त० १ प० ३५ त.) । प्रधि =प्रकृष्टबुद्धिः । तदुक्ता च--प्रकृष्टा धीर्बुद्धिर्यस्या सा । कृत्ति =कृष्णसारादिचर्म, त्वक्, भूर्ज, नक्षत्रविशेष, कृत्तिकानक्षत्रम् । 'कृत्तिश्चर्म्मत्वचोर्भूर्जे कृत्तिकाया द्वय स्त्रियाम् ।।' इति--(मे० पृ० ५४ श्लोकः १२) । चुल्लि =अश्मन्तम्, उद्धानम् । ''चूल्हा'' इति लोके । 'चुल्ली चितायामुद्धाने क्वचिद् वाक्येऽप्युदीरिता ।' इति--(श० र० स० पृ० २९७ प० २) । चुण्टि (ण्डि) = चुण्टी, कूप, कूपसमीपाल्पजलाशयश्च । 'चुण्टा चुण्टी च लूता' इति--(त्रि० शे० पृ० २७६ श्लोक. २०) । तरि =नौका, वस्त्रादीनां पेटकं च । 'स्त्रियां नौस्तरणिस्तरि ।।' इति--(अम० ना० लिं० पृ० ९६ श्लोक. १०) 'तारिर्दशायां वेडायां वस्त्रादीना च पेटके ।' इति--(अने० स० पृ० ३५ श्लोक. ४३८) । अन्ति =नाट्योक्तया ज्येष्ठभगिनी । सनि. =भक्ति, दानम्, अध्येषणा, भिक्षा च । 'भिक्षा च सनिरक्ली स्यात्' इति--(वै० पृ० ९३ श्लोक १२१) । सानि =वाद्यविशेष. । ''सनाई'' इति लोके । वशीवाद्य च । नेमि. =चक्रावयवविशेषः । 'नेमिर्ना तिनिशे, कूपत्रिकाचक्रान्तयोः स्त्रियाम् ।' इति--(मे० पृ० १०९ श्लोकः ७) । मरिः = । मारि =मारणम्, वर्षम्, जनक्षयः, मरकश्च । 'मारिः स्त्री मारणे वर्षे' इति--(मे० पृ० १२८ श्लोक ७७) । अश्रि =कोटिः, खड्गाद्यग्रभाग., कोणभागः । 'अश्रि. कोणैकदेशयो ।' इति--धरणि.' इति--(अम० सु० व्या० पृ० २९५ स्तं० २ प० १४) । विद्रधि =रोगविशेष । ''फोडा'' इति लोके । 'व्याधिभेदा विद्रधिः स्त्री, ज्वरमेहभगन्दरा ।' इति--(अम० ना० लिं० पृ० २२० श्लोक ५६) । पुस्त्वमप्याह भावमिश्र --'स विद्रधिरिति ख्यातो विज्ञेय षड्विधश्च स ।' इति--(भा० प्र० पृ० ८८० श्लोक २) । यादवस्तु स्त्रीपुंसयोरित्याह--'रुग्भेदा शूलाद्या, विद्रधिर्न षण् ।' इति च--(वै० पृ० १८४ श्लोक १३७) । अभ्रि =काष्ठकुद्दाल, नौमलोत्सारक, पोतादेर्मलापसारणार्थं काष्ठादिरचितकुद्दाल । 'अभ्रि स्त्री काष्ठकुद्दाल.' इति--(अम० ना० लिं० पृ० ९७ श्लोक १३) । शिरोधि =ग्रीवा, कन्धरा । 'अथ ग्रीवायां शिरोधि कन्धरेत्यपि ।' इति--(अन० ना० लिं० पृ० २३३ श्लोक ८८) । कवि =कविका, खलीनम् । ''कडि आली'' ''लगाम'' ''रास'' इति च लोके । 'सूरौ काव्यकरे पुंसि, खलीने स्यात्तु योषिति ।' इति--(मे० पृ० १५७ श्लोक ४) । कीर्ति =यश., समज्ञा, प्रसाद, विस्तार, कर्दमश्च । 'कीर्ति प्रसादयशसोर्योषित्' इति--(मे० पृ० ५४ श्लोकः १०) ।

अथेदानी मंत्र्यादीन् क्षैरेयीत्यन्तान् दीर्घेकारान्तान् स्त्रीलिङ्गवाचकशब्दानाह हेम:, इति--(अभि० स० लिं० पृ० ४ श्लोक ४६, ४७, ४८, ४९) ।

... ...गन्त्री–कबर्य्यः ।
कुमार्य्या–ढकी स्वेदनी ह्लदिनी–ली ॥२९॥
हरिण्य–श्मरी कर्त्तनी–स्थग्य–पट्यः
करीर्य्ये–कपद्य–क्षवत्य: प्रतोली ।
कृपाणी–कदल्यौ 'पलाली–हसन्यौ
वृसी गृध्रसी घर्घरी कर्परी च ॥३०॥
काण्डी खल्ली मदी घटी गोणी षण्डाल्ये–षणी द्रुणी ।
तिलपर्णी केवली खटी नद्ध्री–रसवत्यौ च पातली ॥३१॥
बाली गन्धोली–काकली–गोष्ठ्य–जाजी–
न्द्राणी मत्स्यण्डी दामनी शिञ्जिनी ।
शृङ्गी कस्तूरी देहली मौर्व्य–तिम्या–
क्षैरेयी' इति । ... ... ॥३२॥

एषा व्याख्या—

गन्त्रीति । हरिणीति । काण्डीति । बालीति च । एते गन्त्र्यादयः शब्दाः स्त्रीलिङ्गा भवन्ति । गंत्री=शकटिका, कम्बलिवाह्यकम्, वृषभवहनीयशकट । "गाडी" इति लोके । 'गंत्री कम्बलिवाह्यकम् ॥' इति—(अम० ना० लिं० पृ० २८३ श्लोक ५२) । कबरी=केशविन्यास, केशवेशः, पृथ्वी, तुङ्गी च । 'कबरी पुन । पृथ्वीतुङ्ग्यो केशवेशे' इति— (मे० पृ० १३२ श्लोकः १२७) । कुमारी=पार्वती, नवमाली, नदीभेदश्च । 'कुमारी शैलतनयानवमाल्योर्नदीभिदि ।' इति—(मे० पृ० १३२ श्लोक १३९) । आढकी=तुवरी । 'आढकी तु तुवर्य्यां स्त्री' इति—(मे० पृ० ५ श्लोक ४८) । स्वेदनी=कन्दु, कन्दुशाला च । 'कन्दुर्ना, स्वेदनी स्त्रियाम् ।' इति—(वै० पृ० १६३ श्लोक. ५६) । ह्लादिनी=वज्रम्, विद्युत्, शल्लकी, नदी च । 'ह्लादिनी वज्रतडितो' इति—(मे० पृ० ९४ श्लोक ५९) । ईली=खड्ग एकधारः, खड्ग., करवालिका, ह्रस्वगदाकारो हस्तदण्ड । "तलवार" इति ख्यात ।—"गुप्ती" इति ख्यातः—इत्यन्ये । 'स्यादीली करवालिका ।' इति—(अम० ना० लिं० पृ० २९४ श्लोकः ९१) । हरिणी=मृगी, एणी, हरिणस्य स्त्री, हरिणीवृत्तप्रभेद, स्वर्णप्रतिमा, हरिता च । 'हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥' इति—(अम० ना० लिं० पृ० ४०५ श्लोकः ५०) । 'हरिणी हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च' इति— ( मे० पृ० ५१ श्लोकः

८८) । अश्मरी = मूत्रकृच्छ्रम् । 'अश्मरी मूत्रकृच्छ्रं स्यात्' इति— (अम० ना० लि० पृ० २२० श्लोक ५६) । कर्त्तनी = कर्त्रिका । ''कैंची'' इति लोके । 'कर्त्रिका कर्त्तनी कृवी ।' इति— वै० पृ० १३८ श्लोक २६) । स्थगी = ताम्बूलपात्रविशेष', ताम्बूलकरङ्क । ''पानवट्टा'' इति लोके । अपटी = काण्डपट., वस्त्रप्रावरणम् । ''कनात'' इति लोके । करीरी = चीरिका, दन्तिना दन्तमूल च । एकपदी = पन्था., मार्ग. । ''रास्ता'' इति लोके । 'वर्त्तन्येकपदीति च ।।' इति— (अम० ना० लि० पृ० ११४ श्लोक १५) । अक्षवती = द्यूतक्रीडाविशेष. । ''चौपड़'' इति लोके । 'द्यूतोऽस्त्रियामक्षवती कैतव पण इत्यपि ।' इति—(अम० ना० लि० पृ० ३५२ श्लोक ४४) । प्रतोली = ग्राममध्यमार्ग , रथ्या, विशिखा । 'रथ्या प्रतोली विशिखा' इति— (अम० ना० लि० पृ० ११७ श्लोक: २) । कृपाणी = कर्त्तरी, असिलता, छुरिका च । 'कृपाणी कर्त्तरी समे ।।' इति—(अम० ना० लि० पृ० ३४९ श्लोक ३३) । कदली = मोचा, पताका, मृगविशेषश्च । 'कदलश्च कदल्यसौ ।' इति व्याडि·' इति—(अम० सु० व्या० पृ० १६६ स्तं० २ पं० ३५) । 'कदल त्रिषु' इत्यमरमाला' इति—(अम० सु० व्या० पृ० १८९ स्त० २ प०३८) 'रम्भावृक्षे च कदली पताकामृगभेदयो ।' इति—(मे० पृ० १५० श्लोक ७०-७१) । पलाली = महत्पलाल. । हसनी = हसन्ती, अङ्गारधानी, अङ्गारशकटी । ''बोरसी'' इति ख्याता । 'अङ्गार धानिकाङ्गारशकट्यपि हसन्त्यपि ।। हसन्यपि' इति—(अम० ना० लि० पृ० ३११ श्लोक: २९, ३०) । घर्घरी = क्षुद्रघण्टिका । कर्परी = दारुहरिद्राया क्वाथस्य तुत्थम्, क्वाथोद्भवतुत्थम्, दर्विका । काण्डी = औषधिविशेष. । 'काण्डी वसीरकाण्डीरौ गृहकाण्ड. शिरः पुमान् ।।' इति— (वै० पृ० १२९ श्लोक. ७८) । खल्ली = हस्तपादावमर्दनाख्यरोगः । मदी = चषकवस्तु, कृष्यङ्गं च । धटी = वाससश्चीरम् । ''धज्जी'' इति लोके । कौपीन च । गोणी = धान्याधारः । ''गूण'' इति भाषाप्रसिद्धमावपनम् । षण्डाली = सरसी, कामुकस्त्री, तैलमानः । ''छटॉक'' इति लोके । एषणी = एषणिका । ''कॉटा'' इति लोके । व्रणमार्गानुसारिणी, व्रणवेधशालाका च । तिलपर्णी = रक्तचन्दम्, श्रीवास', सिह्लक., मलयज च । केवली = ज्ञानविशेष., ग्रन्थविशेषश्च । खटी = कटिनी, धवलमृत्तिका । नद्ध्री = वरत्रा, चर्म्ममयरज्जु । रसवती = पाकस्थानम्, महानसम् । पातिली = वागुरा, नारी, मृत्पात्रविशेषश्च । ''पतीली'' इति लोके । 'पातिली वागुरायां स्यान्नारीपात्रप्रभेदयो ।' इति—(मे० पृ० १५३ श्लोक: १११) । बाली = मेध्यम्, स्वनाम्ना प्रसिद्धोऽलङ्कारविशेषश्च । 'अलङ्कारान्तरे मेध्ये (धौ) बाली' इति—(मे० पृ० १४८ श्लोक: ४०) । गन्धोली = वरटा । ''ततैया'' ''वरडै'' इति च भाषाप्रसिद्ध सपक्षकीट । शुण्ठी, भद्रा च । काकली = सूक्ष्मस्वर. । 'काकली तु कले सूक्ष्मे' इति—(अम० ना० लिं० पृ० ७२ श्लोक: २) । गोष्ठी = सभा, संलाप., पोष्यवर्गश्च । 'सभासलापयोर्गोष्ठी' इति—(ना० र० मा० पृ० २१

प० १४)। अजाजी=कृष्णजीरक, श्वेतजीरक, काकोदुम्बरिका च। इन्द्राणी=सिन्धुवार:, पौलोमी, शची, रतिबन्धश्च। 'इन्द्राणी स्यात्सिन्धुवारे पौलोमीरतिबन्धयो.।' इति—(ना० र० मा० पृ० ७६ प० ६)। मत्स्यण्डी=फाणितम्। "राब" इति लोके। दामनी=तन्ती, पशुबन्धनरज्जु.। शिञ्जिनी=मौर्वी, ज्या, धनुर्गुण:। शृङ्गी=अतिविषा, कुण्डलादिभूषणानां स्वर्णम्, मीनविशेषश्च। कस्तूरी=मृगमदम्, मृगनाभि, गन्धकेलिका, वेधमुख्या। देहली=गृहावग्रहणी, द्वारपिण्डी। "देहल" इति लोके। मौर्वी=ज्या, धनुर्गुण, अजशृङ्गी च। अतिभी:=वज्रज्वाला, विद्युत्। "बिजली" इति लोके। क्षैरेयी=यवागू, पायस च।

... ...दद्रु–पर्शू कणेरु.॥३२॥
कर्णान्दु–कच्छू तनु–रज्जु–चञ्चु
स्नायु:' इति—

अस्य व्याख्या—

दद्र्विति। एते दद्र्वादय स्नायुपर्यन्ता शब्दा: स्त्रीलिङ्गा भवन्ति। दद्रु:=रोगविशेष:। "दाद" इति प्रसिद्धो रोग:। 'अत्र चक्र तु दद्रु: स्त्री' इति—(वै० पृ० १८३ श्लोक: १२५)। पर्शु:=पार्श्वास्थि। "पासु" इति लोके। कणेरु=कर्णिकार:, करिणी, वेश्या च। 'कणेरु: कर्णिकारे च करिणीवेश्ययो. स्त्रियाम्।' इति--(मे० पृ० १३२ श्लोक १२९)। कर्णान्दु:=कर्णपाली, कर्णभूषणम्। "कानबाली" "बाली" इति च लोके। 'कर्णान्दुरुत्क्षिप्तिकायां कर्णपाल्यामपि स्त्रियाम्।' इति--(मे० पृ० ७६ श्लोक: २३)। कच्छु:=रोगविशेष:, पामरोग:। "खाज" इति लोके। शेष प्राग्वत्।

अथ साम्प्रत दीर्घोकारान्तेन द्यावा नावा च सह हलन्तान् स्त्रीलिङ्गवाचकशब्दानाह हेम.' इति—(अभि० स० लि० पृ० ४ श्लोक ४९, ५०)।

... ...,जुहू: सीम–धुरौ स्फिग–र्वाक्।

पाणिनीयेऽपि—(१) (धेनुरज्जुकुहुसरयुतनुरेणुप्रियङ्गव: स्त्रियाम्)॥ एते स्त्रियां स्यु:। धेनु:=नवप्रसूता गौ:। रज्जु:=बन्धनसाधनवस्तु, गुण:। कुहु:=नष्टेन्दुकलाऽमावास्या। सरयु:=नदीविशेष:। तनु:=शरीरम्। रेणु - धूलि.। प्रियङ्गु:=राजिका, राजसर्षप:। सि० कौ० पृ० ३९९ सू० ५२।

पाणिनीयेऽपि—(२) (आशीर्धूपूर्गीर्द्वार.)॥ एते स्त्रियां स्यु:। आशी.=आशीर्वाद:। धू:=भार:, विंशतितुलापरिमाणम्, यानमुख च। पू:=नगरम्, पुरी। गी:=वाणी। द्वा:=निर्गमनम्। सि० कौ० पृ० ३९८ सू० २८।

(३) '(स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिच:') एते स्त्रिया स्यु। स्रक्=मूर्ध्निन्यस्तपुष्पदाम, माल्यम्। त्वक्=

द्वा–द्यौ[1]–दिवौ स्त्रुक्[2]–त्व–गृचः शर–द्वा–
श्छर्दि–र्दर–त्याम–दृषद्–दृशो नौः ॥३३॥' इति ॥

अस्य व्याख्या—

जुहूरिति । एते जुह्वादयो नौपर्य्यन्ता शब्दा स्त्रिया स्यु । जुहू = स्रुग्भेद, पलाश-काष्ठनिर्मितमर्द्धचन्द्राकृतिरूप यज्ञपात्रम् । पर्णमयो यज्ञपात्रविशेषश्च । 'स्रुचो भेदा स्युर्जुहूरुप-भृद्ध्रुवा ।' इति—(वै० पृ० ९१ श्लोक १००) । स्फिक्=पुन्द, कटिप्रोथ । "चूतड" इति भाषाप्रसिद्ध कटिदेशस्थमासपिण्ड । द्योदिव्शब्दौ=स्वर्गवाचकौ, आकाशवाचकौ च । स्रुक्=यज्ञपात्रविशेष । त्वक्=त्वचा, शरीरच्छवि । ऋक्=वेदमत्रविशेष । शरद्=ऋतु-विशेष, वर्ष च । छर्दि =वान्ति । पामा=कण्डू । दृषद्=शिला, प्रस्तर । शेष प्राग्वत् ।

दुर्गसिहस्तु क्रमरहितान् काञ्च्यादीन् खारीपर्य्यन्तान् स्त्रीलिङ्गवाचकशब्दानाह—(दु० लि० पृ० ८, ९, १०, ११ श्लोक १९ त २५ यावत्) ।

काञ्चि–र्वीचिः सूचि–र्मारि–भेरी हरिद्राऽऽरा ॥
द्युति–पल्लि–तुलि–लिपि–लिबि–रुचि–कृपि–किखि–
कीलि–र्नालिभि–श्चूर्णिः ।
सरणि–र्ग्रहणि–रिती–दूदन्तं चा–ऽवी–चमूप्रभृति ॥
एकस्वर–मी–दूदन्तं शाटि–र्भावसूचित–स्नाश्च ।
स्रक् स्रुक् स्फिक् त्वक् वाक् संवि–दुपानद् गी–दृषद् धूः पूः ॥
प्राण्यङ्ग–मिदन्त विप्रुट्–छर्दि–शरद्–समिद्–द्यु–सुमन–र्चः ।
स्यु–र्भू–विद्युद्–वल्ली–निशा–ऽङ्गना–दिग्–नदीनाम ॥
सम्प–त्प्र[3]तिप–द्विपदा–ऽऽपत्–संस–त्समि–दपि क्षुधा परिषत् ।

---

चर्म । ज्योक्= । वाक्=वाणी । यवागूः=षड्गुणजलपक्वघनद्रवद्रव्यविशेष, यज्ञद्रव्यविशेषश्च । नौः=नौका । स्फिक्=कटिप्रोथ, कटिदेशस्थमासपिण्ड । सि० कौ० पृ० ३९८ सू० ३० ।

(१) (द्यौ स्त्रियाम्) ॥ द्यौः=स्वर्ग । द्योदिवौ—तत्रेणोपादानमिदम् । सि० कौ० पृ० ३९९ सू० ४५ ।

(२) (भाः स्रुक्स्रग्दिगुपानह) ॥ एते स्त्रिया स्यु । भाः=दीप्ति । स्रुक्=होमपात्रान्तरम्, स्रुवा ॥ स्रग्=माल्यम । दिक्=दिशा । उपानत्=पन्नध्री, पादुका । सि० कौ० पृ०३९७ सू० २० ।

पाणिनीयेऽपि—(३) (प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुष संवित्क्षुत्पुत्मुत्समिध) ॥ एते स्त्रिया स्युः ।

गायत्र्याद्या. क्य–ऽभावे प्रावृड्–दर्वि–मुद्–भासः ॥
वासोदशा मघा आपो–ऽप्सरस कृत्तिकाः समा वर्षाः ।
बह्वर्था विशतय–स्त्वेकार्था. स्यु–र्नवत्यन्ताः ॥
शुक्ति पामा सीमा जिह्वा कारे–लया–ऽऽशिषा सयत् ।
ईषा–नेमि–सृभाः खारी स्त्रीलिङ्गा इति समाप्ताः ॥' इति ।

एषां व्याख्या

काञ्चिरिति । द्युतीति । एकेति । प्राण्यङ्गमिति । सम्पदिति । वास इति । शुक्तिरिति च । एते काञ्च्यादय शब्दा द्युतिपल्लितूलिलिपिलिबिरुचिक्रुपिकिखिकीलिनालिभि·, क्षुधा, इलया, आशिषा च सह स्त्रीलिङ्गा· भवन्ति। काञ्चि. = रशना, पुरी च । 'काञ्ची पुरीमेखलयो.' इति––(ना० र० मा० पृ० १६ प० ११) । वीचि = कुन्तलवक्रत्वम्, स्वल्पम्, पक्ति:, तरङ्गश्च । 'वीचि कुन्तलवक्रत्वे स्वल्पे पक्तितरङ्गयो ।' इति––(ना० र० मा० पृ० १६ पं० १०) । आरा = चर्म्मवेधिनी । 'आरा चर्म्मप्रभेदिन्याम्' इति––(ना० र० मा० पृ० ४८ पं० १५) । लिपिर्लिबिश्च = अक्षरपद्धती, अक्षरविन्यासौ । क्रुपि = छेदोपकरणविशेष· । सरणि· = मार्गः । ग्रहणि = रोगविशेष । इति शब्द. अत्र आकृतिगणार्थं तेन विटि: = पीतचन्दनम् । हलि: = । मूलि. = । कूलि = । सृणि· = अङ्कुशः । 'अङ्कुशोऽस्त्री, सृणिः स्त्रियाम् ॥' इति––(अम० ना० लि० पृ० २७९ श्लोक: ४१) । 'सृणिः स्यादङ्कुशे पुमान् ।' इति कोषान्तरम् । तेनोभयलिङ्गोयमकुशे' इति––(श० चि० पृ० ८९९ स्तं० १ प० ३) । तथा च प्रयोग ––'आरक्षमग्नमवमस्य सृणि शिताग्रम्' इति माघ' इति––(अम० सु० व्या० पृ० २७९ स्त० १ प० १४)। सूणि = । अवी = ऋतुमती । चमू = सेना। तरी = नौः, वेडा, द्रोणी, वस्त्रादिपेटक च । तत्री = वीणाप्रभेद, गुडूची, देहशिरा, नाडी, रज्जूश्च । लक्ष्मी = रमा । वधू = स्नुषा । "बहू" इति लोके । नवोढा, भार्या, अङ्गना च। जम्बू ––राजफला । "जामुन" इति लोके । दृम्भू·(दम्भू) = सर्प, चक्रसर्पश्च । दिधिषू· =

इयं––प्रतिपत् = तिथिविशेषः, पक्षतिः । आपत् = आपत्तिः । विपत् = विपत्ति, तृतीयतारा च । सम्पत् = सम्पत्ति । द्वितीयतारा च । शरत् = सॅंवत्सर । ऋतुविशेषश्च । संसत = सभा । परिषत् = सभा । उष = उषा, उच्छन्ति । प्रातरधिष्ठात्री देवता च । सवित् = बुद्धि. । क्षुत् = क्षुधा। युत् = सग्राम । मुत् = हर्षः । समित् = याज्ञिकप्रसिद्ध प्रादेशमात्रं काष्ठम् । सि० कौ० पृ० ३९८ सू० २७।

(१) (प्रावृट्विप्रुट्रुट्तृड्विट्त्विषः) ॥ एते स्त्रिया स्यु. । प्रावृट् = वर्षाकालः । विप्रट् = बिन्दुः, जलकणः । रुट् = रोषः । तृट् = तृष्णा । विट् = विष्ठा । त्विट् = शोभा । सि० कौ० पृ० ३९८ सू० २३ ।

द्विरूढा, पुनर्भूः। कर्कन्धू =बदरी, बदरीफल च। "बेर" इति लोके। अलाबू =तुम्बी। कसेरू =तृणकन्दम्, पृष्ठकीकसम्, गणजातिश्च। कच्छू =पामरोग। आकृतिगणश्चायम्। भावसूचित ताश्चति। 'तत्वौ भावे।' भावेन सूचित उपलक्षितो य ताप्रत्यय इति। पुरुषता =पुरुषस्य भाव। जडता =जडस्यभाव कर्म वा। ग्रामता =ग्रामाणा समूह। जनता =जनाना समूह। राजता=राज्ञा समूह। बन्धुता =बन्धूना समूह। सहायता =सहायाना भाव। देवता =देव एव। स्रक् =माला। वाक् =वाणी। सवित् =सवेदनम्। उपानत् =चर्मपादुका। गी =वाणी। पू =पुरी, प्राणिनामङ्गम्, प्राण्यङ्गम्। इत् अन्ते यस्य तदिदन्त प्राण्यङ्गम्। विप्रुट् च छर्दिश्च शरच्च समिच्च द्यौश्च सुमनाश्च ऋक् चेतीतरेतरयोगो द्वन्द्व। विप्रुट् = बिन्दु। समित् =याज्ञिकप्रसिद्ध प्रादेशमात्र काष्ठम्। सुमना =पुष्पम्। शोभन मनो यस्येति बहुव्रीहिणा तु वाच्यलिङ्गता। भूश्च विद्युच्च वल्ली च निशा च अङ्गना च दिक् च नदी चेतीतरेतरयोगो द्वन्द्व। एषां विप्रुडादीना भ्वादीना च शब्दाना नाम सज्ञा च स्त्रिया स्यु:। भूनाम—भू, भूमि, क्षितिरित्यादय। विद्युन्नाम-विद्युत्, तडित्, अचिराभेत्यादि। वल्लीनाम— वल्ली, लता, व्रततिरित्यादि। निशानाम—निशा, क्षपा, रात्रिरित्यादि। अङ्गनानाम— अङ्गना, योषित्, वनितेत्यादि। दिङ्नाम—दिक्, ककुप्, काष्ठेत्यादि। नदीनाम—नदी, सरित्, धुनीत्यादि:। अत्र कस्यचित् अम्भ शब्दादे. नद्यादिनाम्नोऽपि असन्तत्वात् नपुसकत्व एव परत्वेन। क्वचित् "पूर्वपरयो परो विधिर्बलीयान्" इति परस्येष्टवाचित्वात्। यथा को· उषसश्च उदन्तस्य असन्तस्य च भूनाम्नो अङ्गनानाम्नश्च स्त्रीत्व सिद्धम्। सम्पत् =सम्पत्ति प्रतिपद =तिथिविशेष, आद्या तिथि। विपद् =विपत्ति। आपद् =आपत्ति। ससत् =सभा समित् =संग्राम। क्षुत् =बुभुक्षा। परिषत् =सभा। गायत्री आद्या यासामिति गायत्र्याद्या। एताश्छन्दसा जातय। ब्रह्महत्या =ब्रह्मणो हननम्। अश्वहत्या =अश्वस्य हननम्। प्रावृट् = वर्षासमय:। दर्वि. =पाकोपकरणम्। मुद् =हर्ष·। भा =दीप्ति·। वाससो दशा वासोदशा। बहवोऽर्था आसामिति बह्वर्था·। ताश्च स्वभावात् व्यक्तिभेदे एव वर्त्तन्ते, न जातावित्यर्थ:। विंशतयस्त्विवति बहुवचन गण सूचयति। तूशब्दो वाक्यभेदे। नवतिरेवान्तोऽवयव आसामिति नवत्यन्ता एक एवार्थ. आसामिति एकार्था। स्वभावात्समुदाये वर्त्तन्ते नावयवभेदे इत्यर्थ। वस्त्रस्य दशा.। अवस्थावाचिकायास्तु बह्वर्थताया अनियम। इय दशा अवस्था इति। समा: =सँव्वत्सर। केचित्समेति पाठ मन्यते। तेषा इय समा इत्यपि भवति। 'समा समा विजायते' इत्येकत्वेऽपि दृश्यते। इति क्षीरस्वामी। एकत्वे लक्ष्यम्—'तृतीयस्या समायास्तु समां समां विजायते।' 'तृतीयस्याः समायास्तु' इति बहुत्व प्रायिकम्। समा समा विजायते इत्यत्र 'समाया समाया' इति भाष्यात्। 'निर्गतत्व समाया' इत्यादौ वाक्यदर्शनाच्च। जिह्वा =रसना।

कारा=बन्धनगृहम् । इला=पृथ्वी । आशी = आशसनम् । सयत्=सग्राम । सभा=परिषत्
इति––(दु० लि० स्वोपज्ञवृत्ति पृ० ८, ९, १०, ११ श्लोक १९, २०, २१, २२, २३, २४,
२५) ।

पुरुषोत्तमदेवोऽपि क्रमरहितान् आज्यादीन् स्त्रीलिङ्गवाचकान् कतिचिच्छब्दानाह––
(त्रि० शे० पृ० ३८६ श्लोक १) ।

लिङ्गादिसंग्रहेऽनुक्तममरेणाभिदध्महे ।
स्त्रियामाजि–र्दर–ज्जातिः पुरु–र्भा द्वाः समाः शरत् ॥
सिकताद्या बहुत्वेऽपि विशत्याद्येकवागपि ।' इति ।

अस्य व्याख्या–

लिङ्गेति । इह स्त्रियामित्यधिकार शरच्छब्दपर्य्यन्त ज्ञेय । आज्यादिशरत्पर्य्यन्ताना
यदभिधानं तत्स्त्रिया स्यात् । पुरु.=नदीविशे र । शेषशब्दाना व्याख्या तु प्राग्वद् बोध्या ।
सिकताद्या बहुत्वे भूम्नि योषिति भवन्ति । विंशति द्विदशकसख्या । आदिपदात् एकविंशति
द्वाविंशतिरित्यादिनवत्यन्ता संख्या एकवागपि योषिल्लिङ्गैकवचन स्यादित्यर्थः । शेषं प्राग्वद् ।

यादवस्तु सक्षेपतः स्त्रीलिङ्गानुशासनमाह––(वै० पृ० २८९ श्लोक २ त ८ यावत् ।

एक स्वरं हलादी–दूद् दृङ् मा श्री–भ्रू–रिति स्त्रियाम् ॥
इच्च सर्वमुदन्तेषु पाकु–रज्ज्वादि किञ्चन ।
नदीनामाह्वयाः सर्वे प्रायेण च लताह्वयाः ॥
णचो ञि व्यवहाराद्या, अङ्डन्तास्तु पचादयः, ।
अप्रत्यये जुगुप्साद्या, युजन्ता भावनादयः, ॥
क्तिन्नन्ता–स्तति–गत्याद्या, क्विबन्ताः सम्पदादयः, ।
इञि स्युः कारिबोध्याद्या, ण्वुलि प्रच्छर्दिकादयः, ॥
क्रीडाप्रहरणे णान्ता पाल्लवाद्या, घञ्स्तु ञो ।
क्रियायां दाण्डपाताद्या,–स्त–ङ्या–बूङ्ऽव–न्धतादयः,
अके वैरादिवीप्सादौ स्यु काकोलूकिकादयः, ।
क्यपि तु ब्रह्महत्याद्या,दल्याद्य–ल्पत्वकीर्त्तने ॥
त्रिलोकीत्यादयोऽदन्तैः समाहारार्थकद्विगौ ।
त्रिपात्र–त्रियुगाद्याः ष–ण्ण भवन्त्यादय–स्त्वनौ ॥' इति ।

एषा व्याख्या—

एकस्वरमिति। इदिदि। णच इति। क्तिनिति। क्रीडेति। अक इति। त्रिलोकीति च। एक स्वर यस्मिन् शब्दे तदेकस्वर, हल् आदिर्यस्मिन् तद्धलादि, ईदूदन्तं ईकारान्तं ऊकारान्तं च दृक् मा श्री भ्रूश्चेति स्त्रिया स्त्रीलिङ्गा स्यु.। सर्वं समस्तं इत् इदन्त स्त्रिया स्यात्। उदन्तेषु ह्रस्वोकारान्तेषु किञ्चन पाकुरज्ज्वादि स्त्रियां स्यात्। पाकु.=सूपकार.। रज्जु=वेणी, बन्धनसाधनवस्तु च। ''रस्सी'' ''डोरी' इति च लोके। 'रज्जुर्वेण्यां गुणे योषित्' इति—(मे० पृ० ३० श्लोक १४)। नदीना सरिता सर्वे समस्ता आह्वया नामानि स्त्रियां स्यु:। लताह्वया लताना नामानि च प्रायेण स्त्रियां स्यु.। णचो अञ्जि व्यावहाराद्या स्त्रिया स्यु। एव अङन्ता पचादय.। अप्रत्यये जुगुप्साद्या। युजन्ता भावनादय। क्तिन्नन्ता ततिगत्याद्या। क्विबन्ता: सम्पदादय। इञि इञ्प्रत्ययान्ता कारिबोध्याद्या:। ण्वुलि ण्वुलप्रत्ययान्ता: प्रच्छर्दिकादय। क्रीडाप्रहरणे णान्ता पाल्लवाद्या घञो ञो क्रियाया दाण्डपाताद्या। तल्ङ्याबूङ्क्षु तल्ङ्याबूङ्प्रत्ययान्ता अन्धतादय:। वैरादौ वीप्सादौ च अके अकप्रत्ययान्ता काकोलूकिकादय। क्यपि तु क्यप्प्रत्ययान्तास्तु ब्रह्महत्याद्या। अल्पत्वकीर्त्तने दल्यादि। अदन्तै: अकारान्तै समाहारार्थकद्विगौ त्रिलोक्यादयश्चैते योषिल्लिङ्गा भवन्ति। त्रिपात्रत्रियुगाद्या. षण् क्लीबे स्यु:, स्त्रियां न। अनौ अनिप्रत्ययान्ता भवन्यादयस्तु स्त्रिया स्यु।

॥ इति स्त्रीलिङ्गानुशासनम् ॥

अथ

## नपुंसकलिङ्गानुशासनम् ।

तत्रादौ नान्नादीन् कर्त्तृभिन्नमन्प्रत्ययान्तान् नपुंसकलिङ्गवाचकशब्दानाह हेम -- (अभि० स० लिं० पृ० ४ श्लोक. ५१) ।

न–लं[1]–र[2]तु–तं[3]–त्तं[4]–संयुक्त–र–रुं[5] या[6]–ऽन्तं नपुंसकम्[7] ।
वेध आदी–न्विना–ऽसन्त द्विस्वरं मं–न्नकर्त्तरि ॥१॥

पाणिनीयेऽपि—(१) (लोपध )॥ कुलम् -गोत्रम्, सजातीयगणाश्च। कूलम्= तीरम्, तटम्। स्थलम्=जलशून्याकृत्रिमभूभाग। सि० कौ० पृ० ४०२ सू० १४२।

(२) (५) (रुत्वन्त.) (दारुकसेरुजतुवस्तुमस्तूनि नपुंसके. ॥ एतानि नपुंसके स्यु । दारु=काष्ठम्। श० उ०। सि० कौ० पृ० ३९९ सू० ५६।

(३, ४) नवनीतावतानाऽनृताऽमृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि) ॥ एतानि नपुंसके स्यु । अवतानम्= । अनृतम्=असत्यम्। व्रतम्=ब्रह्मचर्यादिनियम । रजतम्=रूप्यम्, श्वेतं च। वृत्तम्=शीलम्, निस्तलं च। सि० कौ० पृ० ४०३ सू० १६६।

(६) (धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि) ॥ एतानि क्लीबे स्यु । वर्ण्यम्=कुङ्कुमम्। धृष्यम्= । हव्यम्=देवान्नम्, नैवेद्यम्। श० उ०। सि० कौ० पृ० ४०३ सू० १६९।

(७) (नपुंसकम्) ॥ अधिकारोऽयम्। सि० कौ० पृ० ४०१ सू० ११७।

(८) (असन्तो द्व्यच्कः)॥ असन्तो द्व्यच्क क्लीब स्यात् यशः= समज्ञा, सुख्याति.। मनः=मानसम्। तप=स्वाश्रमविहितकर्म, लोकविशेषश्च। (यादोनपुंसकम्) ॥ याद शब्द सरिद्वाचकोऽपि क्लीबः स्यात्। यादः=जलजन्तुः। द्व्यच्कः किम्। चन्द्रमा=विधुः। सि० कौ० पृ० ४०३ सू० १५३।

(९) (मन्द्व्यच्कोऽकर्त्तरि)॥ मन्प्रत्ययान्तो द्व्यच्क. क्लीब. स्यात, न तु कर्त्तरि। वर्म=कवचम्, तनुत्रम्। चर्म=त्वक्, अजिनम्। द्व्यच्क किम्। अणिमा, महिमा चेतौ द्वौ सिद्धिभेदौ। कर्त्तरि किम्। ददाति इति दामा=रज्जुः। सि० कौ० पृ० ४०२ सू० १५०।

(नामरोमणी नपुंसके) ॥ मन्द्व्यच्क इत्यस्याय प्रपञ्च.। नाम=अभिधानम्। रोम=लोम। सि० कौ० पृ० ४०३ सू० १५२।

वररुचीयलिङ्गानुशासनेऽपि–'नाम नपुंसकलिङ्गं तत्तनलस्तुत्वशब्दपर्यन्तम्। मन्नन्तो द्व्यजुदितमपि सन्तं हल्पूर्वंरुयान्तम् ॥ इति। पृ० २ श्लो० २।

अस्य व्याख्या—

नेति। नान्ताश्च लान्ताश्च स्वन्ताश्च तान्ताश्च त्तान्ताश्च सयुक्तरान्ताश्चसयुक्तरु-शब्दान्ताश्च सयुक्तयान्ताश्च तेषा समाहारो नलस्तुतत्तसयुक्तररुयान्त नपुसकं नपुसकलिङ्गाः स्युरित्यर्थ.। यथा--नान्ता काञ्चनजननेत्यादय। लान्ता चक्रवालमित्यादय। स्वन्ता वस्तु-मस्त्वित्यादय। तान्ता शीत-द्वैत-गीतप्रभृतयः। त्तान्ता भित्त-पित्तप्रभृतय.। संयुक्तरान्ता अग्रप्रभृतय। सयुक्तरुशब्दान्ता अस्रुप्रभृतय। सयुक्तयान्ता लक्ष्य-द्रव्यप्रभृतय। कर्तृभिन्नार्थक मन्प्रत्ययान्ता सद्म-वेश्म-भस्मप्रभृतय। अस् अन्ते यस्मिन् तद् असन्तम्। द्वौ स्वरौ यस्मिन् तद् द्विस्वरम्। वेध आदीन्विना यद् द्विस्वरमसन्त तन्नपुसक नपुसकलिङ्गा. स्युरित्यर्थ। यथा पय=दुग्धम, जल च। 'पय स्यात्क्षीरनीरयो।' इति—(मे० पृ० १७२ श्लोक: २८)। वय=अवस्था, पक्षी च। 'वय पक्षिणि बाल्यादौ यौवने च नपुसकम्।' इति—(मे० पृ० १७२ श्लोक ३५)। यश=सुख्याति, कीर्ति, समज्ञा। 'ख्याति कीर्ति. समज्ञा च' इति—(वै० पृ० ३४ श्लोक ३६)। यश कीर्त्योर्भेदो दृश्यते। 'दानादिप्रभवा कीर्ति· शौर्य्यादिप्रभवं यश.' इति। तथा च कस्यचित्प्रयोग--यश कीर्तिपरिभ्रष्टो जीवन्नपि न जीवति।' इति--(श० चि० पृ० १८ स्त० १ प० २२ त)। मन्नकर्त्तरीति। कर्तृभिन्नार्थकद्विस्वरमन्प्रत्य-यान्ताः च नपुसकलिङ्गा भवन्ति। यथा—भस्म=भसितम्। सद्म=गृहम्। जन्म=उत्पत्तिः इत्यादय.।

अथाधुना धनादीन् द्रवत्पर्य्यन्तान्नपुसकलिङ्गवाचकशब्दानाह हेमः (अभि० स० लिं०पृ० ४ श्लोक: ५२, ५३, ५४)

धन–रत्न–नभो–ऽन्न–हृषीक–तमो–
घुसृणा–ऽङ्गण–शुक्त–शुभा–ऽम्बुरुहाम्।
अघ–गूथ–जला–ऽशुक–दारु–मनो–
विल–पिच्छ–धनु–दल–तालु–हृदाम् ॥२॥

---

पाणिनीयेऽपि-(१) (मुखनयनलोहवनमासरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि)॥ एतेषामभि-धायकानि क्लीबे स्यु। मुख=आननम्। नयन=लोचनम्। लोहम्=कालम्। वनं=गहनम्। मास=आमि-षम्। रुधिर=रक्तम्। कार्मुक=धनुः। विवर=बिलम्। जल=वारि। हल=लाङ्गलम्। धन=द्रविणम्। अन्नम्=अशनम। सि० कौ० पृ० ४०२ सू० १३८।

(२) पाणिनीये तु धनुरेव नपुसके उक्तम्। (इसुसन्तः) क्लीब स्यात्। हविः=होतव्यद्रव्यम्। धनु=चाप.। सि० कौ० पृ० ४०२ सू० १३५

(३) तत्रैव ताल्वेव नपुसके उक्तम्। (श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुसके)॥ एतानि नपुसके

हल–दुःख–सुखाऽगुरु–हिङ्गु–रुत (च)
त्वच–भेषज–तुत्थ–कुसुम्भ–दृशाम् ।
मरिचाऽस्थि–शिलाभव–सृक्क–यकृ–
न्नलदा–ऽन्तिक–वल्कल–सिध्म–युधाम् ॥३॥
सौवीर–स्थानक–द्वार–क्लोम–धौतेयका–ऽसृजाम् ।
लवण–व्यञ्जन–फल–प्रसून–द्रवतां सभिद् ॥४॥

एषा व्याख्या—

धनेति । हलेति । सौवीरेति च । धनादीनामघादीना हलादीना मरिचादीना सौवीरादीनां लवणादीना चैषा सभिद् भेदसहिताना नाम नपुसक स्यात् । यथा—धनम्, वित्तम्, द्रविणमित्यादि । रत्नम्, मणिरित्यादि । नभः, खम्, व्योमेत्यादि । अन्नम्, भक्तम्, ओदनमित्यादि । हृषीकम्, विषयि, इन्द्रियमित्यादि । तमः, ध्वान्तमित्यादि । घसृणम्, कुङ्कुममित्यादि । अङ्गणम्, अङ्गनम्, चत्वरम, अजिरमित्यादि । शुक्तम्, चुक्रमित्यादि । शुभम्, कुशलम्, कल्याणम्, शिवम्, मङ्गलम्, भव्यमित्यादि । अम्बुरुट्, पङ्कजम्, सरोजम्, कमलमित्यादि । अघम्, पापम्, दुरितमित्यादि । गूथम्, विष्ठा, शकृदित्यादि । जलम्, अम्बु, उदकमित्यादि । अंशुकम्, वस्त्रमित्यादि । दारु, काष्ठमित्यादि । मनः, चेत, चित्तमित्यादि । विलम्, रन्ध्रम्, छिद्रमित्यादि । पिच्छम्, बर्हमित्यादि । धनुः, शरासनमित्यादि । दलम्, पत्रम्, पर्णमित्यादि । तालु, काकुदमित्यादि । हृद्, हृदयमित्यादि । हलम्, लाङ्गलमित्यादि । दुःखम्, कृच्छ्रम्, कष्टमित्यादि । सुखम्, शर्म, शातमित्यादि । अगुरु, वशकम्, राजार्हमित्यादि । हिङ्गु, रामठमित्यादि । रुतम्, वाशितमित्यादि । त्वचम्, त्वगित्यादि । भेषजम्, औषधमित्यादि । तुत्थम्, रसाञ्जनमित्यादि । कुसुम्भम् = महारजनपुष्पमित्यादि । दृग, नयनमित्यादि । मरिचम्, कोलकम्, ऊषणमित्यादि । अस्थि ,कीकसमित्यादि । शिलाभवम्, शैलेयमित्यादि । सृक्क, सृक्व, सृक्कमित्यादि । यकृत्, कालखण्डमित्यादि । नलदम्, सेव्यम्, अभयम्, अमृणालमित्यादि । अन्तिकम्, समीपम्, निकटमित्यादि । वल्कलम्, वल्कमित्यादि । सिध्मम्, किलासमित्यादि । युद्, रणमित्यादि । सौवीरम्, आरनालकम्, कुल्माषमित्यादि । स्थानकम्, आलवालम्, नगर-

स्यु. । (वसु चार्थवाचि) वसु=धनम् । अर्थवाचीति किम् । "वसुर्मयूखाग्निधनाधिपेषु" इति विश्वप्रकाशः । शे० उ० । सि० कौ० पृ० ३९९ सू० ५४

(१) (बलकुसुमशुल्बयुद्धपत्तनरणाभिधानानि) ॥ एषामभिधायकानि नपुसके स्यु । बलम् = वीर्य्यम् । कुसुमम् = प्रसूनम् । शुल्बम् = ताम्रम्, यज्ञकर्म च । युद्धम् = अयोधनम् । पत्तनम् = नगरम् । रणम् = जन्यम् । सि० कौ० पृ० ४०३ सू० १५९ ।

मित्यादि । द्वारम्, द्वा इत्यादि । क्लोम, तिलकमित्यादि । धौतेयकमित्यादि । असृक्, रक्तम्, रुधिरमित्यादि । लवणम्, अक्षीवम्, वसिरमित्यादि । व्यञ्जनम्, तेमनम्, निष्ठानमित्यादि । फलम्, निरीशम्, कुटकमित्यादि । प्रसूनम्, पुष्पम्, कुसुममित्यादि । द्रवत् = अग्निसयोगेन द्रवीभवता सुवर्णादीना सभेदाना च नामानि नपुसक स्यात् ।

अथेदानी पुरादीन् पथिशब्दपर्य्यन्तान्नपुसकलिङ्गवाचकशब्दानाह हेमः—(अभि० स० लि० पृ० ४ श्लोकः ५५, ५६, ५७, ५८) ।

पुरं सद्माऽङ्गयो,—श्छत्र—शीर्षयोः पुण्डरीक—के, ।
मधु द्रवे, ध्रुव शश्व—त्तर्कयोः, खपुरं घटे, ॥५॥
अयूपे, दैवे, अकार्यादौ, युगं, दिष्टं, तथा कटु,
असे द्वन्द्वं, स्थले धन्वा,—ऽरिष्ट—मद्रुम—पक्षिणोः, ॥६॥
धर्म्मं दानादिके, तुल्यभागे—ऽर्द्धं, ब्राह्मणं श्रुतौ, ।
न्याय्ये सारं, पद्म—मिभबिन्दौ, काम—मनुमतौ, ॥७॥
खलं भुवि, तथा लक्षं वेध्ये,—ऽहः सुदिनै—कतः ।,
भूमो—ऽसंख्यात एकार्थे, पथः संख्या—ऽव्ययो—त्तरः, ॥८॥

एषा व्याख्या—

पुरमिति । अयूप इति । धर्ममिति । खलमिति च । एते पुरादयः पथिपर्य्यन्ताः शब्दा उक्तार्थेषु नपुसकलिङ्गा स्यु. । सद्माङ्गयोर्गृहदेहयोरर्थे पुरम् । छत्रशीर्षयो पुण्डरीकके अर्थात् छत्रे पुण्डरीकम् शीर्षे कम् । द्रवे विद्रवे मधु । शश्वत्तर्कयो ध्रुवम् । घटे खपुरम् । अयूपे युगम् । दैवे भाग्ये दिष्टम् । अकार्यादौ अकार्यमत्सरदूषणेषु कटु । असे समासभिन्नेऽर्थे द्वन्द्वम् । स्थले धन्व । अद्रुमपक्षिणोर्वृक्षपक्षिवर्जितयोरर्थे अरिष्टम् । दानादिके धर्म्मम् । तुल्यभागे समानभागे अर्द्धम् । श्रुतौ वेदे ब्राह्मणम् । न्याय्ये गौतमोक्ते शास्त्रभेदे सारम् । इभबिन्दौ गजबिन्दौ पद्मम् । अनुमतौ कामम् । भुवि खलम् । वेध्ये लक्ष च नपुसकं स्यात् । सुदिनैकतः— सुदिनं च एकश्च सुदिनैकौ ताभ्यां परो विहित समासान्तोऽहन्शब्द क्लीबे स्यात् सुदिन च तदहश्च सुदिनाहम् । एक च तदहश्च एकाहम् । सुदिनमिह पुण्यमुच्यते । सुदिनशब्द प्रशस्तार्थो वा । तेन पुण्यं च तदहश्च पुण्याहम्, प्रशस्ताहम् । शोभनाहम् । कृतसमासान्त इति

पाणिनीयेऽपि—(१) (अपथपुण्याहे नपुसके) ॥ एते नपुसके स्त । अपथम् = अमार्गं । पथोऽभावश्च । पुण्याहम् = शोभनदिवस । सि० कौ० पृ० ४०२ सू० १३२

किम् । पुण्यानि अहानि यस्मिन् पुण्याहो माम । असख्याते अकृतसख्ये एकार्थे भूमिशब्दो नपुंसकलिङ्ग । पाण्डु भूमिरस्मिन् पाण्डुभूमम् । कृष्ण भूमिरस्मिन् कृष्णभूमम् । उदीची भूमिरुदग्भूममित्यादि । 'कृष्णोदकपाण्डुसख्याया भूमेरजिष्यते ।' इति । सख्याव्ययोत्तर पथिशब्दो नपुंसकलिङ्ग । सख्याया अव्ययाच्च पर पथ. क्लीबे स्यादित्यर्थ । यथा—द्वौ पन्थानौ समाहृतौ, द्वयो पथो समाहारो वा द्विपथम् । त्रयाणा पथा समाहारस्त्रिपथम् । चतुर्णा पथा समाहारश्चतुष्पथम । अव्ययाद्यथा—विगत पन्था अपथम् । विरुद्धः पन्था विपथम् । विरूप पन्था कापथम्, दुष्पथम्, उत्पथम् । सख्याव्ययात्पर किम् । धर्म्मस्य पन्था धर्मपथ । योगस्य पन्था योगपथ । जलपथ. । परमपथ । कृतसमासान्त (तत्पुरुषे) किम् । अतिपन्था. । सुपन्था. । सुपथा नगरी । उत्पथो देश ।

अथेदानी द्वन्द्वैकत्वाऽव्ययीभावादिजान् नपुसकलिङ्गवाचकशब्दानाह हेम.—(अभि० स० लि० पृ० ५ श्लोक ५९, ६०, ६१, ६२) ।

द्वन्द्वैकत्वाव्ययीभावौ[१][२], क्रिया-ऽव्यय-विशेषणे ।
कृत्याः क्ता[३]-ऽनाः[४] खल्-ञिद्-भावे[५], आ-त्वा-त्वा-ऽऽदिः समूहजः ।। ९।।

---

पाणिनीयेऽपि—(१) (द्वन्द्वैकत्वम्) ।। इद नपुसके स्यात् । पाणिपादम्=पाण्योः पादयोश्च समाहार । सि० कौ० पृ० ४०२ सू० १२४ ।

(२) (अव्ययीभाव.) ।। अय क्लीबे स्यात् । अधिस्त्रि=स्त्रियमधिकृत्य वर्तते । स्त्र्यधीन गृहकार्यमित्यर्थ. । सि० कौ० पृ० ४०२ सू० १२३ ।

(३) (निष्ठा च) ।। भावे या निष्ठा तदन्त क्लीब स्यात् । हसितम्=हास्यम्, अट्टहास्य च । गीतम्=गानम् । सि० कौ० पृ० ४०१ सू० ११९ ।

(४) (भावे ल्युडन्तः) ।। भावे ल्युट्प्रत्ययान्तः क्लीबे स्यात् । हसनम्=हास्यम् । भावे किम् । पचनः=अग्निः । इध्मव्रश्चन =कुठार. । सि० कौ० पृ० ४०१ सू० ११८ ।

(५) (त्वष्यञौ तद्धितौ) ।। एतौ चेत्तद्धितौ तदा नपुसके स्त । शुक्लस्य भाव. शुक्लत्वम्, शौक्ल्यम् । सि० कौ० पृ० ४०१ सू० १२० । (कर्मणि च ब्राह्मण.दिगुणवचनेभ्य.) । ब्राह्मणस्य कर्म—ब्राह्मण्यम् । सि० कौ० पृ० ४०१, २ सू० १२१ । (यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि) ।। तदन्तानि क्लीबानि । (स्तेनाद्यन्नलोपश्च)—स्तेयम् । (सख्युर्यः)—सख्यम् । (कपिज्ञात्योर्ढक्)—कापेयम् । (पत्यन्तपुरोहितादिभ्यो यक्)—आधिपत्यम् (प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्)—औष्ट्रम् । (हायनान्तयुवादिभ्योऽण्)—द्वैहायनम् । (द्वन्द्वमनोज्ञादिभ्यो वुञ्)—पितापुत्रकम् । (होत्रादिभ्यश्छः)—अच्छावाकीयम् । सि० कौ० पृ० ४०२ सू० १२२

(अभाषाया हेमन्तशिशिरावहोरात्रे च) स्पष्टम् । सि० कौ० पृ० ४०२ सू० १२५ ।

गायत्र्याद्य–ऽण् स्वार्थे–ऽव्यक्त–मथा–ऽनञ्[1]–कर्म्मधारयः ।
तत्पुरुषो वा, बहूनां चे–च्छाया[2], शालां विना सभा[3] ॥१०॥
राजवर्जित–राजार्थ–राक्षसादेः परापि च ।
आदा–वुपक्रमो–यज्ञे कन्थो–शीनरनाम्नि च ॥११॥
सेना–शाला–सुरा–च्छाया–निशं वो–र्णा[4] शशात् परा ।
भाद् गणो गृह[5]तः स्थूणा संख्या–ऽदन्ता शता[6]दिका ॥' इति ॥१२॥

एषा व्याख्या—

द्वन्द्वेति । गायत्रीति । राजेति । सेनेति च । एकत्वे द्वन्द्वो द्वन्द्वैकत्वम् । 'राजदन्तादि. ।' षष्ठीतत्पुरुषे तु, एकत्वस्य प्राधान्यात्तस्यैव लिङ्गान्वय स्यात्, न तु द्वन्द्वस्य । एकार्थको द्वन्द्व , समाहारद्वन्द्व , अव्ययीभावश्च क्लीबे स्यात् । द्वन्द्वैक्य यथा—पाण्यो: पादयोश्च समाहार पाणिपादम् । शिरसो ग्रीवायाश्च समाहार· शिरोग्रीवम् । एव मार्दङ्गिकपाणविकम् । अव्ययीभावो यथा—शक्तिमनतिक्रम्य यथाशक्ति । शास्त्रमनतिक्रम्य यथाशास्त्रम् । अधिहरि । अधिस्त्रि । अधिगोपम् । उपगङ्गम् । क्रियाव्ययविशेषणे नपुसक स्यात् । क्रियाणा भ्वादिधातूनां, अव्ययानां स्वरादिनिपातानां च, भेदकानि विशेषणानि, क्लीबे नपुसके, एकवचने च स्युरित्यर्थ· । क्रियाविशेषणं यथा— कुटिलं गच्छन्ति । मन्द पचन्ति । मृदु पचन्ति वा । सुखं तिष्ठन्ति योगिन । सलिल नृत्यन्ति बाला । अव्ययविशेषणं यथा—रम्य भद्र वा स्व· । सुखद प्रातः । प्रात· कमनीय वा । कृत्या इति । कृत्या —तव्यादिप्रत्यया । तदुक्तम्—सुपद्मसम्मतायां कारिकायाम्—'कृत्या. षट् ते समाख्याता क्यपण्यतौ भावकर्म्मणो । तव्यानीयावनन्ताद् यत् केलिम कर्मकर्त्तरि ॥' इति । कर्त्तरि कर्मणि चार्थे विहिता कृत्या वाच्यलिङ्गा भवन्ति ।' इति—(श० चि० पृ० ६६२ स्त० २ प० १६, १७, १८, १९) । भावे कृत्यप्रत्ययान्ता —एधनीय–भवनीय–करणीयप्रभृतय· । भावे क्तान्ता.—हसित–भूत–सहित–भुक्त-

(१) (अनञ्कर्मधारयस्तत्पुरुष ) ॥ अधिकारोऽयम् । सि० कौ० पृ० ४०२ सू० १२६ ।

(२) (अनल्पे छाया) ॥ शरच्छायम् । सि० कौ० पृ० ४०२ सू० १२७ ।

(३) (राजामनुष्यपूर्वा सभा) ॥ इनसभमित्यादि । सि० कौ० पृ० ४०२ सू० १२८ ।

(४।५) (गृहशशाभ्या क्लीबे) ॥ नियमार्थमिदम् । गृहशशपूर्वे स्थूणोर्णे यथासख्य नपुसके स्त· । गृहस्थूणम्=गृहधारणम् । शशोर्णम्=शशलोम । "शशोर्ण शशलोमानि" इत्यमर । सि० कौ० पृ० ३९८ सू० २३१

(६) (शतादि सख्या) । क्लीबे स्यात् । शतम्=दशगुणितदशसख्या, दशतिः, सख्येय च । सहस्रम्=दशशतम्, अनन्त च । शतादिरिति किम् । एक., द्वौ, बहव । सख्येति किम् । शतशृङ्गः=पर्वतविशेष. । सि० कौ० पृ० ४०२ सू० १४५ ।

प्रभृतयः । भावेऽनान्ता हसनप्रभृतयः । भावे खल्प्रत्ययान्ताः—दुर्भव–दुराढ्यभवप्रभृतयः । भावे ञिनप्रत्ययान्ताः–सांरावीण–सांकौटीनप्रभृतयः । 'ब्रह्मणस्त्वः' इत्यभिव्याप्य भावार्थकप्रत्ययान्ताः—शुक्लस्य कर्म भावो वा शौक्ल्यम्, शुक्लत्वम्, शुक्लता । सख्युः कर्म भावो वा सख्यम् । स्तेनस्य कर्म भावो वा स्तेयम् । चोरस्य कर्म भावो वा चौर्य्यम् । चपलस्य कर्म भावो वा चापलम् । कपेः कर्म भावो वा कापेयम्, कपित्वम् । ज्ञातेयम् । 'कपिज्ञात्योर्ढक्' इति । आचार्य्यस्य कर्म्म आचार्य्यकम् । 'योपधाद् गुरूपोत्तमाद् वुञ्' इति । द्विपिनो विकारो द्वैपम् । एवं द्वैहायनप्रभृतयः । गायत्र्यादितो गायत्री छन्दसां जातिस्तत्प्रभृतितः स्वार्थे योऽण्प्रययः क्रियते सोऽपि नपुंसकलिङ्गः स्यादित्यर्थः । गायत्र—त्रैष्टुभादयः । अव्यक्तम् = अव्यक्तलिङ्गकम् । अथानन्तरम् । 'अनञ्कर्म्मधारयस्तत्पुरुषो वा' इत्यधिक्रियते । समासे षष्ठीविभक्त्यन्तात्परा छाया नपुंसके स्यात् । 'छाया बाहुल्ये' इति पाणिनिसूत्रम् । सा चेद् बहूनां सम्बन्धिनी तर्ह्येव क्लीबे । यथा—वीनां पक्षिणां छाया विच्छायम् । इक्षूणां छाया इक्षुच्छायम् । एवं पादपच्छायम्, वृक्षच्छायम्, धनुश्छायम्, शरच्छायम्, इषुच्छायम्, शलभच्छायम्, गण्डच्छायम्, गृध्रच्छायम्, खगच्छायम्, रत्नच्छायमिति । बहूनामिति किम् । वृक्षस्य वृक्षयोर्वा छाया वृक्षच्छाया, वृक्षच्छायम् । कुड्यस्यच्छाया कुड्यच्छाया, कुड्यच्छायम् । एवं पर्वतच्छाया, पर्वतच्छायम् । छत्रच्छाया छत्रछायमिति वा । 'विभाषा सेनासुराच्छायाशालानिशानाम्' इति क्लीबत्वम् । शालां बिना राजवर्जितराजार्थराक्षसादेः परा सभा अपि क्लीबे स्यात् । अथ वा । समूहे वर्त्तमानो यः सभाशब्दस्तदन्तस्तत्पुरुषः क्लीबे, षष्ठ्यन्तात्परा चेत् । अथ वा । शालार्था गृहार्था अपिशब्दात् संहत्यर्था च या सभा सा अराजकात् राजशब्दवर्जितात्, राजाऽमनुष्याऽर्थात्, राजार्थात् राजपर्य्यायात्, अमनुष्यार्थात् रक्ष आदिशब्दात्षष्ठ्यन्तात्परा चेत् क्लीबे नपुंसके स्यादित्यर्थः । शाला गृहं अर्थो अभिधेयो यस्याः सा शालार्था । अराजकराजपर्य्यायात् यथा—इनसभम्, ईश्वरसभम्, इन्द्रसभम्, नृपसभम्, नृपतिसभम्, प्रभुसभम् । अमनुष्यार्थात् यथा—रक्षःसभम्, पिशाचसभम् । अराजकात्किम् । राज्ञः सभा राजसभा । राजपर्य्यायग्रहणान्नेह चन्द्रगुप्तसभा, जगत्तुङ्गसभा । राजविशेषोऽयम् । षष्ठ्यन्तात्किम् । नृपतिविषये सभा नृपतिसभा । नृणां पतिर्यस्यां सा चासौ सभा चेति वा नृपतिसभा । ईश्वरा सभा = ईश्वरसभा । न सभा–असभा । तत्पुरुषे इति किम् । ईश्वरस्य सभेव सभा यस्य स ईश्वरसभः । 'सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च' इति बहुव्रीहिः । अमनुष्यार्थादिति किम् । दासीसभा । दासीनां शालेत्यर्थ. । 'आदावुपक्रमोपज्ञे' इति । तयोरुपज्ञोपक्रमयोरादौ प्रथमे क्लीबे स्यात् । अथवा । उपज्ञा, उपक्रमश्चान्ते यस्य स तत्पुरुषः क्लीबे स्यात् । अथवा । तयोरुपज्ञोपक्रमयोरादित्वं प्राथम्यं तस्य प्रकाशने द्योतने उपज्ञान्त उपक्रमान्तश्च समासः क्लीबे स्यादित्यर्थः । उपज्ञायत इत्युपज्ञा । उपज्ञायाः उपज्ञेयस्य च प्राथम्य-

कथने गम्यमाने। उपज्ञा यथा—को ब्रह्मा तस्योपज्ञा कोपज्ञम्=स्वर्गः प्रजा वा। सृष्टिस्तेनादौ ज्ञाता। पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थ। अथ वा। पाणिन्युपज्ञं अकालकं व्याकरणम्। पाणिनिना प्रथम कालधिकाररहितं व्याकरण कर्त्तुं शक्यमिति परिज्ञातम्। चन्द्रस्योपज्ञा चन्द्रोपसज्ञकं व्याकरणम्। अथ वा। चन्द्रोपज्ञमसज्ञक व्याकरणम्। शाकटायनोपज्ञं शब्दानुशासनम्। तेन प्रथम ज्ञातम्। आदिदेवोपज्ञं धर्माधर्मव्याख्या। उपक्रम्यत इत्युपक्रम। उपक्रमस्य उपक्रम्यस्य च प्राथम्य कथने गम्यमाने। उपक्रमो यथा—कस्योपक्रमः? कोपक्रमम्=लोक। तेनादौ प्रक्रान्ता। कुरुराजोपक्रम (श्रेयासोपक्रम) दानम्। कुरुराजेन श्रेयसा प्रथम प्रवर्तितम्। नन्दोपक्रमाणि मानानि। तेन प्रथम कृतानि। अथवा—नन्दस्य उपक्रमः आद्यारम्भ, नन्दोपक्रमम् =द्रोण। कातंत्रोपक्रमम्=कालापकं व्याकरणमिति। उशीनरनाम्नि कन्था च क्लीबे स्यात्। अथवा। षष्ठ्यन्तात्परा या कन्था तदन्तस्तत्पुरुषः क्लीबे स्यात्, उशीनरदेशस्थसज्ञासु चेद्वर्त्तते। सौशमे. सौशमीना वा कन्था सौशमिकन्थम्, सौसमिकन्थम्, सौसमीकन्थम्। आह्वराणा कन्था आह्वरकन्थम्। शार्मिकी कन्था यस्यासौ शार्मिकिकन्थम्। उशीनरदेशे इति किम्? दाक्षीणां कन्था दाक्षिकन्था। ग्रामस्येय सज्ञा अस्ति किन्तु उशीनरदेशे स ग्रामो न भवति। बाह्लिकेष्वियं सज्ञा। नामसु किम्? वीरणानां वीरणैः कृता वा वीरणकन्था। कुत्रापि नेयं सज्ञा। सेना च शाला च सुरा च छाया च निशा च तेषां समाहार. सेनाशालासुराच्छायानिशं वा क्लीबे स्यात्। सेना यथा—नृणा सेना नृसेनम्, नृसेना। कपीनां सेना कपिसेनम्, कपिसेना। क्षत्रियाणां सेना क्षत्रियसेनम्, क्षत्रियसेना। ब्राह्मणाना सेना ब्राह्मणसेनम् ब्राह्मणसेनेति। शाला यथा—गवां शाला गोशालम, गोशाला। हस्तिनां शाला हस्तिशालम्, हस्तिशाला। अनाथानां शाला अनाथशालम्, अनाथशालेति। सुरा यथा—यवानां सुरा यवसुरम्, यवसुरा। छाया यथा—कुड्यस्यच्छाया कुड्यच्छायम्, कुड्यच्छाया। निशा यथा—चोराणां निशा चोरनिशम् चोरनिशा। भूतानां निशा भूतनिशम्, भूतनिशा। शुना निशा श्वनिशम्, श्वनिशेति। शशात्परा उर्णा, भात्परो गण, गृहत परा स्थूणा च नपुसकलिङ्गे भवन्ति। शशस्योर्णा शशोर्णम्=शशलोम। भानां गण भगणम्=नक्षत्रसमूह। गृहस्य स्थूणा गृहस्थूणम्=गृहधाधारणम्। शतादिका शतपूर्वा अदन्ता अकारान्ता या सख्या सा क्लीबे स्यात्। यथा—शतम्, सहस्रम्, अयुतमित्यादि। अदन्ता किम्? कोटि, लक्षा। इति।

अमरोऽपि—(अम० ना० लि० पृ० ४५७ श्लोकः २२, २३)।

द्विहीनेऽन्य–च्च खा–ऽरण्य–पर्ण–श्वभ्र–हिमो–दकम्।
शीतो–ष्ण–मांस–रुधिर–मुखा–ऽक्षि–द्रविणं बलम्॥

फल–हेम–शुल्ब–लोह–सुख–दुःख–शुभा–ऽशुभम् ।
जलपुष्पाणि लवणं व्यञ्जनान्य–ऽनुलेपनम् ॥

अनयोर्व्याख्या—

द्विहीन इति । फलेति च । द्विहीने द्वाभ्या पुम्स्त्रीभ्या हीने वर्जिते क्लीबे स्यात् । अधिकारोऽयम् । अन्यदवशिष्टम् । उक्तसग्रहाच्छेष क्लीबे स्यात्, बाधकविषयादन्य । तत्र कांश्चिद्दर्शयति—चकाराद्वस्त्राभरणदिग्रह । खमिन्द्रिय व्योम च । तद्यथा—छिद्रम्, नभः, वियत् इत्यादि । 'खमिन्द्रिये व्योम्नि पुरे शर्मणि त्रिदशालये । क्षेत्रे सवेदने बिन्दौ शून्येऽपि च निगद्यते ।' इति—(श० र० स० पृ० ५३ प० ८, ९) । अरण्यम्, विपिनम्, काननमित्यादि । अटव्यरण्य विपिन'मिति—(अम० ना० लिं० १२७ पृ० १ श्लोक:) । पर्णम्, पत्रम्, दलमित्यादि । 'पर्ण पक्षे पलाशेऽपि, पर्ण. स्यात्किशुकद्रुमे ।' इति—(श० र० स० पृ० १०६ पं० ५) । श्वभ्रम्, रसातलम्, पातालमित्यादि । 'रन्ध्र श्वभ्र वपा शुषि. ।' इति—(अम० ना० लिं० पृ० ८६ श्लोक. २) । हिमम्, तुहिनम्, प्रालेयमित्यादि । 'हिमं स्यान्मलयोद्भूते तुषारेऽपि च शीतले ।' इति—(श० र० स० पृ० २२७ प० ४) । उदकम्, जलम्, अम्बु, नीरमित्यादि । 'कबन्धमुदकं पाथ' इति—(अम० ना० लि० पृ० ९३ श्लोक ४) । शीतम्, शीतलमित्यादि । 'शीतं क्लीबे शैत्यगुणे' इति—(ना० र० मा० पृ० २९ प० १५) । उष्णम्, तिग्ममित्यादि । 'उष्णस्त्वातपोष्मणो । वह्नौ तु पुंसि, चतुरतिग्मयोस्त्वेष वाच्यवत् ।' इति—(ना० र० मा० पृ० २६ प० ८)। मासम्, पिशितम्, तरसमित्यादि । 'अथ मासं क्रव्यं' इति—(ना० र० मा० पृ० ५९ पं० १०) । रुधिरम्, शोणितम्, रक्तमित्यादि । 'रुधिर कुङ्कुमे रक्ते रुधिरोऽङ्गारके पुमान् ।' इति—(श० र० स० पृ० २७९ प० ३) । मुखम्, वदनम्, वक्त्रमित्यादि । 'मुख प्रधाने प्रारम्भे वक्त्रे निःसरणेऽपि च । उपाये द्वारि ताम्रे' इति—(ना० र० मा० पृ० १३ प० ४) । अक्षि, नेत्रम्, लोचनम्, नयनमित्यादि । 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।' इति—(अम० ना० लिं० पृ० २३५ श्लोक ९३) । द्रविणम्, वित्तम्, धनमित्यादि । 'अथ द्रविण गेहे वित्ते स्वर्णे पराक्रमे ।' इति—(ना० र० मा० पृ० ७६ पं० १५) । इह बलशब्देन शक्तिसैन्यग्रहणम् । शक्तौ यथा—बलम्, तर, शुष्ममित्यादि । 'बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः ।' इति—(मे० पृ० १४७ श्लोकः ३७) । सैन्ये यथा—सैन्यम्, चक्रमित्यादि । 'सैन्यं क्लीब बले, सेनासमवेते तु वाच्यवत् ॥' इति—(मे० पृ० ११७ श्लोकः ६४) । फलम्, निरीशम्, कुटकमित्यादि । 'फलं हेतुकृते जातीफले फलकसस्ययो. । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयो. ।' इति—(अने० सं० पृ० ४१ श्लोकः ५१०) । हेम, सुवर्णम्, स्वर्णम्, कनकमित्यादि । 'हिरण्य हेमहाटकम् ।' इति—

(अम० ना० लि० पृ० ३३३ श्लोक ९४) । शुल्बम्, ताम्रमित्यादि । 'शुल्ब ताम्रे यज्ञकर्मण्याधारे जलसनिधौ ।' इति—(मे० पृ० १५९ श्लोक २७) । लोहम्, कालायस-मित्यादि । 'लोहोऽस्त्री शस्त्राके लौहे जोङ्गके सर्वतेजसे ।' इति--(मे० पृ० १७५ श्लोकः ८) । सुखम्, शर्म, शातमित्यादि । 'सुख शर्मणि नाके च' इति—(मे० पृ० २० श्लोक. ८) । दुःखम्, आमनस्यम्, कष्टमित्यादि । 'आबाधा वेदना दुखम्' इति हलायुध इति—(अम० सु० व्या० पृ० ९२ स्त० १ प० १८, १९) । शुभम्, कल्याणम्, मङ्गलमित्यादि । 'शुभो योगे, शुभ भद्रे, वाच्यवत्क्षेमशालिनि ।' इति--(मे० पृ० १०६ श्लोक. ८) । अशुभम्, अशस्तम्, अकल्याणमित्यादि । जलपुष्पाणि, जलभवानि पुष्पाणि कुमुदकमलकह्लारोत्पलानि । लवणम्, सैन्धवम्, अक्षीवमित्यादि । 'लवण सैन्धवादौ, ना सिन्धुरक्षोभिदो रसे ।' इति--(मे० पृ० ५० श्लोक ७५) । व्यञ्जनानि, तेमनानीत्यादीनि । 'व्यञ्जन तेमने चिह्ने श्मश्रुण्यवय-वेऽह्नि ।' इति--(मे० पृ० ९१ श्लोक २२) । अनुलेपनम्, कुङ्कुमादि । अत्र बाधितादन्यत् इति किम् ? आकाशो विहाया द्यौ । अटवी अरण्यानीत्यादिकम् । एवमन्यदप्यूह्यम् । खादि सपर्याय सविशेष च क्लीबे भवति—इति मुकुट ।

क्षीरस्वाम्यपि-खादि सपर्यायविशेषं तृतीये- इत्येव व्याचष्ट' इति—(अम० सु० व्या० पृ० ४५७ स्त० २ प० २८) ।

कोट्याः शतादिसंख्या-ऽन्या वा लक्षा नियुतं च तत् ।
द्व्यचक-मसि-सुस-ऽन्नन्तं यद-ऽनान्त-मकर्त्तरि ॥

अस्य व्याख्या—

कोट्या इति । कोट्या कोटिशब्दं विना यान्या शतादिसख्या सा क्लीबे स्यात् । लक्ष-शब्दो वा क्लीबे । पक्षे योषिति । 'लक्षा नपुसि सख्याया, क्लीबं व्याजशरव्ययो ।' इति—(मे० पृ० १६३ श्लोक २३) । नानार्थरत्नमालाकारस्तु न स्त्रियामित्याह—'लक्षं शरव्ये व्याजे च न स्त्रिया, नियुते तु ना ।' इति—(ना० र० मा० पृ० ६१ प० ४) । तदिति लक्षस्य पर्याया नियुतमित्यर्थं । उदाहरणं च—नियुतं शतं सहस्रमयुतमित्यादि । 'शतं सहस्रमयुतं नियुतं प्रयुतं मतम् । स्त्री कोटिरर्बुदमिति क्रमाद्दशगुणोत्तरम् ।' इति रत्नकोषः' इति—(अम० सु० व्या० पृ० ४५७ स्त० २ प० ३६, ३७) । असन्त-मिसन्त-मुसन्त-मन्नन्त च यद् द्व्यच्कं द्विस्वर तत् क्लीबे भवति । असन्त यथा—मन = मानसम् । तेज = प्रताप । तम. = अन्धकार । इसन्त यथा--सर्पिः = घृतम् । ज्योति = प्रकाश । हवि. = सानाय्य हविर्विशेषः । शोचि: = प्रभा, रोचिश्च । उसन्तं यथा-वपु. = शरीरम् । यजु = वेदविशेष. । धनुः = शरासन-मित्यादि । द्विस्वरमन्नन्तं यथा -चर्म = अजिनम्, कृत्ति । शर्म = कल्याणम् । साम = वेद-

विशेष । वर्म = कवचम् । कर्म = क्रियेत्यादि । अनेनैव क्लीबत्वे सिद्धे परतो यन्मर्मशब्दोपादान तदस्यानित्यत्वज्ञापनार्थम् । तेन—'गुणान्धकारशोकेषु तमो राहौ पुमानय'मित्याद्यपि सिद्धम् । इति—(अम० अम्० वि० व्या० पृ० ३६७ प० ९) । अकर्त्तरीति । कर्त्तृवर्जितेऽर्थे यदनान्तं नाम तन्नपुसके भवति । गम्यते इति गमनम् = गति. । म्रियते इति मरणम् = मृत्यु. । दीयते इति दानम् = वितरणम् । क्रियते इति करणम् = कारणम् । वरणम् = कन्यादिवरणम्, वेष्ठनं च । कदनम् = मर्दम्, पाप च । गगनम् = आकाश । दमनम् = आत्मसयम: । शमनम् = शान्ति । इत्यादि । 'कृत्यल्युटो बहुलम्' इत्यनान्ताना त्रिलिङ्गत्व स्वरन्ति । कथं राज्ञा भुज्यते इति राजभोजनी शाला क्षैरेयी वा । राजभोजन शालि., राजभोजन भक्तम्, अन्नम्, इत्यादि—क्षीरस्वामी, इति—(अम० सु० व्या० टि० पृ० ४५८ स्त० १ प० ३२, ३३) ।

त्रान्तं स–लो–पधं शिष्ट रात्रं प्राक्संख्ययान्वितम् ।
पात्राद्य–ऽदन्तै–रेकार्थो द्विगु–र्लक्ष्यानुसारतः ॥

अस्य व्याख्या—

त्रान्तमिति । त्रान्त त्रशब्दान्त, सलोपधं सकारो लकारो वा उपधा अन्त्यात्पूर्वो यस्य तत् सलोपध च नपुसके भवति । त्रान्त यथा—दात्रम् = लवित्रम् । पात्रम् = भाजनम्, भाण्डम् । वस्त्रम् = वसनम्, अशुकम् । वहित्रम् = वहनम् । गात्रम् = शरीरम् । मित्रम् = सुहृत्, सखा । यत्रम् = नियत्रणम्, देवाद्यधिष्ठानम्, पात्रभेदश्चेत्यादि । सोपध यथा—बिसम् = कमलम्, पद्मम्, मृणाल च । विशम्' इत्यपि । 'मृणाले तु बिस विशम् ।' इति द्विरूपकोष ' इति—(अम० सु० व्या० पृ० १०८ स्त० २ प० ५, ६) । अन्धतमसम् = घनान्धकार: । बुसम् = कडङ्गर:, पलालादिक्षोदम् । 'बुषमपि ।' 'बुषवेषतुषारतोषा ।' इति षभेदान्मूर्धन्यान्तमपि' इति—(अम० सु० व्या० पृ० ३०९ स्त० १ पं० २२) । इत्यादि । लोपध यथा—कुलम् = वश. । मूलम् = नक्षत्रविशेष., बुध्न, अघ्रिश्च । कूलम् = तटम् । शूलम् = रोगविशेष., आयुधविशेषश्च । तूलम् = कार्पासम्, ब्रह्मदारु चेत्यादि । शिष्टमिति । यदवशिष्टं प्रागुक्तादन्यत् तच्च प्रागुक्तम् । यदबाधित तदपि त्रान्तादिक क्लीबे इत्यर्थः । शिष्टमिति किम् ? पुत्र. = आत्मज: । वृत्र· = असुरविशेष: । मत्र. = वेदभेद:, गुह्यवादश्च । हस = पक्षिविशेष: । कस. = शूरसेनपुत्र । पनस. = कण्टकिफल· । ''कटहल'' इति लोके । काल. = समय·, यमश्च । शाल· = मत्स्यप्रभेद,

पाणिनीयेऽपि—(१) (त्रान्त.) एष नपुंसके स्यात् । पत्रम् = पर्णम् । छत्रम् = आतपत्रम् । सि० कौ० पृ० ४०३ सू० १५५ ।

(२) (संख्यापूर्वा रात्रि:)॥ त्रिरात्रम् = त्रयाणा रात्रीणा समाहार: । संख्यापूर्वेति किम् ? सर्वरात्र· । सि० कौ० पृ० ४०२ सू० १३३ ।

वृक्षविशेषश्च। शिला=पाषाण' इत्यादि । सख्यापूर्वो रात्रशब्द: क्लीबे । 'रात्राह्नाहा पुसी' ति पुस्त्वप्राप्तेरपवादोऽयम् । सख्यापूर्व रात्र क्लीबमिति वार्तिक रात्राह्नाहा इत्यस्य बाधकम् । एका चासौ रात्रिश्च एकारात्रम् । द्वयो रात्र्यो समाहार द्विरात्रम् । पञ्चाना रात्रीणां समाहार पञ्चरात्रम्, अहोरात्रम्, गणरात्रमिति । सख्ययेति किम् । अर्द्धरात्र, पूर्वरात्र, मध्यरात्र इति । पात्रादिभिरदन्तैरेकार्थो यो द्विगु स क्लीबे स्यात् शिष्टप्रयोगात् । पञ्चाना पात्राणा समाहार पञ्चपात्रम् । आदिना चतुर्णां युगाना समाहार चतुर्युगम् । त्रयाणा भुवनानां समाहार त्रिभुवनम् । एकार्थ किम् । पञ्चसु कपालेषु सस्कृत: पञ्चकपाल = पुरोडाश. । तद्धितार्थे द्विगुरयम् । लक्ष्यानुसारत इति किम् । त्रयाणा पुराणा समाहार त्रिपुरी । पञ्चाना मूलानां समाहार पञ्चमूली । त्रयाणा लोकाना समाहार त्रिलोकी । तिसृणा वलीना समाहार· त्रिवली'त्यादि ।

द्वन्द्वैकत्वा–ऽव्ययीभावौ पथ: संख्या–ऽव्ययात्पर: ।
षष्ठा–श्छाया बहूनां चेद् विच्छायं संहतौ सभा ॥
शालार्थापि परा–ऽराजा–ऽमनुष्यार्था–दराजकात् ।
दासीसभं नृपसभं रक्षसभमिमा दिश: ॥
उपज्ञो–पक्रमान्तश्च तदादित्वप्रकाशने ।
कोपज्ञ–कोपक्रमादि कन्थो–शीनरनामसु ॥

एषा व्याख्या—

द्वन्द्वेति । शालेति । उपज्ञेति च । द्वन्द्वैकत्वादीना व्याख्या प्रागुक्ता । स्त्रिया तु वक्ष्यते । सहताविति । सहतौ समूहे वर्त्तमानो य सभाशब्दस्तदन्तस्तत्पुरुप· क्लीबे, षष्ठचन्तात्परा चेत् । स्त्रीणां सभा, स्त्रीसभम्=स्त्रीसघात स्त्रीसमुदायो वा । दासीनां सभा दासीसभम्=दासीसघात: 'अशाला च' इति क्लीबत्वम् । सहताविति किम् । दासीना सभा, दासीसभा=दासीगृहमित्यर्थ । धर्मस्य सभा, धर्मसभा=धर्मशाला । इमा दिश इति । दासीसभमित्यादीनि त्रीण्युदाहरणानीत्यर्थ । तत्र दासीसभमित्यादि तु सहताविस्यस्यैव । इतरे तु शालासहतिसाधारणे । तयोरुपज्ञोपक्रमयोरादित्व प्राथम्यं तस्य प्रकाशने द्योतने उपज्ञान्त उपक्रमान्तश्च समास क्लीबे स्यात् । उदाहरण तु प्रागुक्तम् । तदादित्वेति किम् । देवदत्तोपज्ञा । मृन्मय: प्रकार. । मृत्प्रकारस्यानेककारणत्वात् । देवदत्तेति सामान्यशब्देन च तदादित्वप्रतिपादनाभावे क्लीबत्वाभाव. । एव देवदत्तोपक्रम रथ.' इति । शे० प्राग्वत् ।

भावे न–ण–क–चिद्भ्यो–ऽन्ये समूहे भाव–कर्म्मणोः ।
अदन्तप्रत्ययाः पुण्य–सुदिनाभ्यां त्व–ऽहः परः ॥
क्रिया–ऽव्ययानां भेदकान्ये–कत्वेऽपि' इति ।

अस्य व्याख्या—

भाव इति । क्रिया इति च । चकार इत् अनुबन्धो यस्य स चित् । नश्च णश्च कश्च चिच्च नणकचित । तेभ्योऽन्ये ये तव्यादयोऽदन्ता धातुप्रत्यया भावे विहितास्ते क्लीबे । अथ वा । नश्च णश्च कश्च चित (च इत्येश ते) च । एभ्योऽन्येऽदन्तप्रत्यया कृतो ये भावे विहिता, तथा समूहेऽर्थे भावकर्मणोर्विहिता येऽकारान्तप्रत्ययास्तद्धिता, तदन्त नाम क्लीबे स्यात् । तत्र धातु-प्रत्यया यथा—सहितम् = युक्तम् । भुक्तम् = खादितम्, गतं च । भूतम् = अतीतम् । 'नपुसके भावे क्त.' । भवितव्यम्, भवनीय, भवद्भि । भवति—भूयते भवितु योग्यमिति वा भव्यम् 'तयोरेव'—इति भावे तव्यादयः । भव्य योग्य 'कर्त्तरि भावे यत्' । तदुक्तम्—'भवितव्य भवत्येव नारिकेलफलाम्बुवत् । गन्तव्य गतमित्याहुर्गजभुक्तकपित्थवत् ।' इति—(श० चि० पृ० ४१८ स्तं० १ पं० १०, ११, १२) । भाव्यम्, विभावनीयम्, भवति । भू० बाहुलकात् कर्त्तरि ण्यत् । तदुक्तम्—'कृतस्य करण नास्ति दैवाधिष्ठितकर्मण । भावीत्यवश्य यद्भाव्य तत्र ब्रह्माऽप्यबाधकः ।' इति—(श० चि० पृ० ४३४ स्त० २ प० १७, १८, १९) । अवश्यभवितव्यम् । 'ओरावश्यके' इति ण्यत् । भावयतीति भवतेर्ण्यन्तात्कर्मणि यत् । ब्रह्मणो भवन, ब्रह्मभूयम् = ब्रह्मसाक्षात्कार, मोक्षः, ब्रह्मत्वम् । 'भुवो भावे क्यप्' । संरवणम्, सांराविणम् । सङ्कूटनम्, साङ्कूटिनम्, साकोटिन, सांकौटिन, वर्त्तते । 'अभिविधौ भाव इनुण्' इति । 'अणिनुण' इति । 'नणकचिद्भ्योऽन्य' इति किम् । 'यजयाच–यत–विच्छ–प्रच्छ–रक्षो नङ्' । यज्ञ = क्रतु । यत्न = प्रयत्नः । उत्साह, उद्योगश्च । प्रश्न = अनुयोग, पृच्छा । 'स्वपो नन्' इति स्वप्न = निद्रा, शयनम् स्वापः । 'नौ णच' इति णच । न्यदनम्, न्याद. = आहार । 'सुपीतिक.' । आरवूत्थ = मूषक-समूहः । वेपथु : = कम्प. । 'घञर्थे' इति क । विघ्नः = अन्तराय, प्रत्यूह । चित् 'एरच्' इति अच् । चयनम्, चय = समूह । जयनम्, जयः = विजय., उत्कर्षप्राप्ति । ''जीत'' इति लोके । 'ण्यासश्रन्थो युच्' इति युच् । कारणम् = करणम्, साधनम्, कर्म । कारणा = यातना, गाढवेदना । नणकेति घञ उपलक्षणम् । पाक. = पचा, स्थाल्यादौ पचनम्, परिणति, दैत्यविशेषश्च । भावे किम् । कर्त्तव्यो धर्म्मसग्रह, मृतो वैरी । समूहे तद्धिताः । 'भिक्षादिभ्योऽण्' इति अण् । भैक्षम् = भिक्षाणा समूहः । गार्भिणम् = गर्भिणीनां समूह । 'गोत्रोक्षोष्ट्र'—इति वुञ् । औपगवकम् = औपगवानां समूहः । 'तस्य समूह.' इति अण् । चाषम् = चाषाणां

समूह.। काकम्=काकानां समूहः। कौमारम्=कुमाराणा समूह । कैशोरम्=किशोराणा समूह । यौवनम्=यना समूह. । यौवतम्=युवतीना समूह । वानस्पत्यम्=वनस्पतीनां समूहः । भैक्षमित्यादीना स्वभावात् समूहवृत्ति नपुसकत्व च । भावक्रियाविषय यथा––वृक्ष्यम् =वृक्षस्य भाव । जाड्यम्=जडस्य भाव । गार्हपत्यम्=गृहपतीनां भाव. । पाशुपत्यम्= पशुपतेर्भाव । "कपिज्ञातिभ्यो ढक्" इति ढक् । कापेयम्=कपेर्भाव । ज्ञात्रेयम्=ज्ञातेर्भाव. । रामणीयकम्=रमणीयस्य भाव । पौरोहित्यम्=पुरोहितस्य कर्म भावो वा । सैनापत्यम्= सेनापते कर्म भावो वा । नार्प्यम्=नृपस्य कर्म भावो वा । नारपत्यम्=नृपते कर्म भावो वा। "यण् च प्रकीर्तित ।" छात्रम्=छात्रस्य भाव क्रिया वा । आश्वम्=अश्वस्य भावः क्रिया वा। औग्दात्रम्=उग्दातुर्भावः क्रिया वा।"प्राणभृज्जातिवयोवचनाद् गोत्रादे भावे क्रियायां वाऽण् च (?)"। "सख्युर्य" इति य । सख्यम्=सख्युर्भाव क्रिया वा । इत्यादीना अभिधानादेव नपुसकत्व सिद्धम्। "केदाराद्यञ् च" इति यञ्। चकारात् वुञ् इति च । कैदार्य्यम्, कैदारकम्=केदाराणा समूह. । द्वन्द्व मनोज्ञादिभ्यश्च' इति वुञ् । मानोज्ञकम्= मनोज्ञाना समूह । 'तस्य भावस्त्वतलौ' भावे अदन्ता यथा—गोत्वम्=गोर्भाव । 'इगन्ताच्च लघुपूर्वात्' इति अण् । शौचम्=शुचेर्भाव. । मौनम्=मुनेर्भाव । मार्दवम्=मृदोर्भाव. । 'स्तेनाद्यन्नलोपश्च' इति यत् नलोपश्च । स्तेयम्=स्तेनस्य भाव', कर्म वा । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् । शौक्ल्यम्=शुक्लस्य भाव, कर्म वा। कर्मणि यथा—राज्यम्=राज्ञः कर्म । चौर्य्यम्=चोरम् । तल्प्रत्ययस्य तु स्त्रीत्वमुक्तम् । पुण्येत्यादीनां व्याख्या तु प्राग्वद् बोध्या ।

अथाधुना कान्तादिक्रमेग मौक्तिकादीन् पिञ्जपर्य्यन्तान्नपुसकलिङ्गवाचकशब्दान् कण्ठरवेनाह हेम.—(अभि० सं० लि० पृ० ५ श्लोक ६३, ६४, ६५, ६६)

मौक्तिकं माक्षिकं सौप्तिकं क्लीतकं
नाणकं नाटकं खेटकं तोटकम् ।
आह्निकं रूपकं जातकं जालकं
वैणुकं गैरिकं कारकं वास्तुकम् ॥१३॥

पाणिनीयेऽपि—(१) (चिबुकशालूकप्रातिपदिकाशुकोल्मुकानि नपुसके) ॥ एषा व्याख्या तु हैमादिषु प्रोक्ता। सि० कौ० पृ० ३९९ सू० ६१ । वामनीयेऽपि—'कुहक चिबुकं लिङ्ग क्रकच बीज ललाटशृङ्गाटम्। वटपिष्टलोष्टकरोट पीठ पृष्ठ च कुष्ठ च ॥ कुण्डाण्डभाण्डकारणशरणमृणक्षूणमुण्णतीर्थोक्थम्। गुदवृन्दकं दाना श्राद्धान्ने रत्न चिह्ने ॥ इति। पृ० ९ श्लो० ९, १०।

रुचकं धान्याक–निःशलाका–
ऽलीका–ऽलिक–शल्को–पसूर्यकाऽकम् ।
कवक–कविक–तोक–तिन्तिडीकै–
डूक–च्छत्राक–त्रिको–ल्मुकानि ॥१४॥
मार्द्वीक कदम्बके बुक्कं चिबुक–कुतुक–मनूक–चित्रके ।
कुब्जकं मधुपर्क–शीर्षके शालूकं कुलकं प्रकीर्णकम् ॥१५॥
हल्लीस–पुष्पके खलिङ्ग–स्थगु–भङ्ग–पूग–चोच–बीज–पिञ्जम् ।

एषां व्याख्या

मौक्तिकमिति । रुचकमिति । मार्दीकेति । हल्लीसकेति च । एते मौक्तिकादय पिञ्ज-पर्य्यन्ता शब्दा नपुंसकलिङ्गा स्यु । मौक्तिकम् = मुक्ताफलम् । 'रत्नभेदाश्च मौक्तिकम् ।' इति । 'मुक्ता तु मौक्तिकम् ॥ मुक्ताफलम्' इति च––(वै० पृ० १५२ श्लोक ५६, ५७) । माक्षिकम् = मधु । 'माक्षिक मधुनि स्मृतम् ।' इति––(श० र० स० पृ० २४ प० २१) । सौप्तिकम् = युद्धरात्रि । 'सौप्तिकं युद्धरात्रौ स्यात्' इति––(श० र० स० पृ० ३० पं० ९) । क्लीतकम् = मधुयष्टि । 'क्लीतकं मधुयष्टौ स्यात्' इति––(श० र० स० पृ० ११ श्लो० ४) । नाणकम् = मुद्राचिह्नितनिष्कादि । ''सिक्का'' इति लोके । अत्राह याज्ञवल्क्य.––'तुलाशासनमानाना कूटकृन्नाणकस्य च । एभिश्च व्यवहर्त्ता य. स दाप्यो दण्डमुत्तमम् ।' इति––(श० चि० पृ० १३७१ स्त० २ प० २३, २४, २५) । नाटकम् = महारूपकम्, गद्यपद्यप्राकृतभाषामयो ग्रन्थविशेष । 'नाटकं नाटिका भाणो वीथि प्रहसन डिम ।' इति––(वै० पृ० १४४ श्लोक १००) । नाटकक्रीडने तु नियममाह––'देवतादर्शनान्त च कर्त्तव्य नाटक बुधैः । राजर्षिदर्शनान्तं वा तेऽपि देवैः समा मता ।' इति––(श० चि० पृ० १३५९ स्तं० २ प० ८, ९, १०) । खेटकम् = लघुग्राम, युद्धसाधनचर्म च । ''ढाल'' इति लोके । 'खेटकं तु लघुग्रामे युद्धसाधनचर्म च ।' इति––(श० र० स० पृ० १३ प० ५) । तोटकम् = वृत्तभिद् । 'तोटकं वृत्तभिद्यपि ।' इति––(श० र० स० पृ० १८ पं० ५) । आह्निकम् = नित्यक्रिया, भोजनम्, प्रकरणवृन्द च । 'आह्निक दिननिर्वर्त्ये त्रिलिङ्गमथ न द्वयो । नित्यक्रिया भोजनयोर्वृन्दे प्रकरणस्य च ।' इति––(मे० पृ० ५ श्लोक ४९) । रूपकम् = नाटकम्, मूर्त्तम्, काव्यालङ्करण च । 'रूपकं नाटके मूर्त्ते काव्यालङ्करणेऽपि च ।' इति––(मे० पृ० १२ श्लोक. १४९) । जात(क)कम् = जातस्य शुभाशुभनिर्णायको होराग्रन्थः, जातकर्माख्यमङ्गल च । तथा च प्रयोग.–'जातकमवलोक्य निरवशेषम्' इति भट्टोत्पलः' इति–(आर्य्या सप्तत्या पृ० १ श्लोकः १)।

जालकम् = कोरक, कुलाय, जालिनीफल च। 'जालकं कोरके प्रोक्त कुलाये जालिनीफले। आनाये दम्भभेदे च' इति--(श० र० स० पृ० १६ पं० १३)। वैणुकम् = गजालानम्, गजबन्धनस्तम्भ। 'वैणुक तु गजालाने' इति--(श० र० स० पृ० २८ श्लोक ११)। गैरिकम् = धातु, स्वर्णं च। 'गैरिक धातुरुक्मयो.।' इति--(मे० पृ० ७ श्लोक ८४)। कारकम् = क्रियानिमित्तमात्रम्, कर्मादि। अन्यस्तु कारयतीति कारिका स्त्री, कारक पुमान्, कारक कुलम्। 'अथ कारिका नटयोषिति। कृतौ विवरणश्लोके शिल्पयातनयोरपि। नपुसकं तु कर्मादौ कारक, कर्त्तरि त्रिषु।' इति--(मे० पृ० ६ श्लोक ६३, ६४)। वास्तुकम् = शाकविशेष, वास्तुकशाकम्। "बथुवा" इति लोके। 'वास्तुकम्' इति--(अम० ना० लि० पृ० १८१ श्लोक १५८)। तथा च प्रयोग—'रम्या वास्तववास्तुकस्तबकिता' इति—मुकुट' इति—(अम० सु० व्या० टि० पृ० १८१ स्तं० २ प० ३९)। रुचकम् = सर्जिकाक्षार, अश्वाभरणम्, माल्य च। 'न द्वयो सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः। सौवर्चलेऽपि माङ्गल्य-द्रव्ये चाप्युत्कटेऽपि च।' इति--(मे० पृ० १२ श्लोक १४७)। धान्याकम् = धन्याकम्, कुस्तुम्बुरु। "धनियाँ" इति लोके। 'धन्याक धान्यक धान्यं कुस्तुम्बुरु धनीयकम्।' इति रभस' इति--(अम० सु० व्या० पृ० ३१५ स्त० १ प० ३६, ३७)। निःशलाकम् = निर्जनम्, रहः। "एकान्त" इति लोके। 'छन्न गुह्य निःशलाक रह क्लीबोऽथ वाव्ययम्।' इति—(वै० पृ० २११ श्लोक १२०)। अलीकम्, अलिकम् = अप्रियम्, असत्यं च। 'अलीकम-प्रियेऽपि स्याद् दिव्य (गोध्य) सत्ये नपुसकम्।' इति—(मे० पृ० ४ श्लोक: ४२)। 'भाले गोध्यलिकालीकललाटानि' इति हैमनाममाला' इति—(अम० सु० व्या० टि० पृ० २३४, पं० ४१)। 'अलीकमहितेऽपि' इति कात्य। बाहुलकादिकन्नपि। 'अलिक ह्रस्वदीर्घमध्यम्।' इति राजदेव.' इति--(अम० सु० व्या० पृ० २३४ स्त० २ प० ३१)। शल्कम् = शकलम्, वल्कं च। 'शल्क तु शकले वल्के' इति--(मे० पृ० ४ श्लोक: ३५)। उपसूर्यकम् = परिवेषः, चन्द्रसूर्ययोरुत्पातादिजातमण्डलम्। 'परिवेषस्तु परिधिरुपसूर्यकमण्डले ॥' इति—(अम० ना० लिं० पृ० ४२ श्लोक ३२)। 'मण्डल परिवेशश्च परिधिश्चोपसूर्यकम्।' इति भागुरि' इति—(अम० सु० व्या० पृ० ४२ स्त १ पं० २७, २८)। 'मण्डले तूपसूर्यकम्।' इति च—(श० र० स० पृ० ४७ प० ८)। अकम् = दुःखम्, पापं च। अत्राल्कमित्यपि पाठो दृश्यते। कवकम् = छत्राकम्, भूस्फोट। 'कवको ग्रासमात्रे स्याद्, भूस्फोटे कवक विदु.।' इति—(श० र० स० पृ० १० प० ४)। अत्राह मनु.—'भौमानि कवकानि च।' इति--(श० चि० पृ० ~~५४४~~ स्तं० १ पं० २३)। कविकम् = खलीनम्, अश्वस्य मुखबन्धनम्। "लगाम" इति लोके। इह किवुकमित्यपि पाठो दृश्यते। तोकम् = अपत्यम्। 'अपत्य तोक तयो समे।' इति। तयोस्तनयदुहित्रो समे समानलिङ्गे। 'तोकं सन्तानसुतयो.' इति—(अने० सं० पृ० ३ श्लोक:

१०) । तिन्तिडीकम्=औषधम्, वृक्षाम्लम्, चुक्रम् । 'तिन्तिडीकं तथौषधे ।' इति—(श० र० स० पृ० ३७ पं० ७) । एडूकम्=अन्तर्न्यस्तकीकसं कुड्यम्, अस्थ्यादिमयकुड्यम् । 'एडूकं यदन्तर्न्यस्तकीकसम् ।' इति—(अम० ना० लि० पृ० ११७ श्लोक ४) । 'एडूक च तथैडोकम्' इति । 'भवेदेडोकमेडूकमेडुक च' इति च द्विरूपकोष' इति—(अम० सु० व्या० पृ० ११७ स्त० २ प० ३२) । छत्राकम्=भूस्फोट, शिलीन्ध्रम् । "कुकुर मुत्ता" इति लोके । 'छत्राक धरणीस्फोटे' इति—(श० र० स० पृ० १६ श्लोक ४) । त्रिकम्=पृष्ठाधरम्, पृष्ठवंशाधोभाग, कटिभाग । 'त्रिक पृष्ठाधरे त्रये ।' इति—(मे० पृ० ३ श्लोक २६) । उल्मुकम्=अर्द्धदग्धं काष्ठम्, आलातम्, अङ्गारम् । 'स्यादुल्मुक तथाऽऽलाते सोत्कण्ठे तूल्मुको मत ।' इति—(श० र० स० पृ० ८ प० १०) । मार्द्वीकम्=मधु, मधुकपुष्पकृतमद्यम् । मृद्वीका=द्राक्षा तस्य विकार । 'तस्य विकार.' इत्यण् । द्राक्षामद्य च । 'मध्वासवो माधवको मधु मार्द्वीकमद्वयोः ।' इति—(अम० ना० लि० पृ० ३५१ श्लोक ४१) । केचित्तु 'माध्वीकम्' इति पठन्ति । तत्र पृषोदरादित्वम् । अद्वयो क्लीबमित्यर्थं । कदम्बकम्=निकुरम्बम्, समूह । 'कदम्ब निकुरम्बे, स्यान्नीपसर्षपयो पुमान् ।' इति—(मे० पृ० १०५ श्लोक ९) । बुक्कम्=अग्रमांसम्, हृदयान्तर्गतमांसविशेषः । 'शोणितेषु स्त्रियां वृक्का, बुक्क सुरसमद्वयोः ।' इति रभस' इति—(अम० सु० व्या० पृ० २२३ स्त० २ प० २७, २८) । चिबुकम्=वदनैकदेश, चिबु, ओष्ठाधोभाग. । "ठोडि" इति लोके । 'अधस्तादधरोष्ठस्य चिबः स्याच्चिबुकं तथा ।' इति निगमः' इति—(अम० सु० व्या० पृ० २३४ स्तं० १ पं० ५) । कुतुकम्=कुतूहलम्, कौतुकम् । 'कुतुक तु कुतूहले ।' इति—(श० र० स० पृ० ११ प० १२) । अनूकम्=कुलम्, शील च । 'अनूक तु कुले शीलेऽप्यनूको गतजन्मनि ।' इति—(श० र० स० पृ० ६ प० १३) । चित्रकम्=तिलकम् । 'चित्रक स्यादग्नितरौ, चित्रक तिलके मतम् ।' इति—(श० र० स० पृ० १५ प० १०) । कुब्जकम्=कुब्जकपुष्पम् । "महसह" इति ख्यातस्य पुष्पप्रधानवृक्षस्य पुष्पम् । 'अशोकात्पुष्पसाहस्रात्सेवतीपुष्पमुत्तमम् । सेवतीपुष्पसाहस्रात्कुब्जकं पुष्पमुत्तमम् ।' इति नारसिहम्' इति—(त्रि० शे० टी० पृ० २८५ प० १२, १३) । मधुपर्कम्=दध्याज्यमधुसयोग, महोदयम् । 'दध्याज्यमधुसंयोगे मधुपर्कमितीरितम् ।' इति—(श० र० स० पृ० ४० पं० १४) । शीर्षकम्=शिरोऽस्थि, शीर्षण्यम्, शिरस्त्रम्, शिरोरक्षणसन्नाह । "टोप" इति लोके । जयपराजयपत्रं च । 'अथ शीर्षकम् ।। शीर्षण्यं च शिरस्त्रे' इति—(अम० ना० लि० पृ० २८६ श्लोक ६३, ६४) । शालूकम्=उत्पलादिमूलम्, पद्मकन्दक: उत्पलकन्दः, सौगन्धकादीना कन्द । 'शालूकमेषां कन्द स्यात्' इति—(अम० ना० लि० पृ० १०७ श्लोक ३८) । 'शालूकं पद्मकन्दके ।' इति च—(श० र० स० पृ० २८ पं० १९) । कुलकम्= श्लोकसम्बद्धगुच्छकः, पटोलम्, वस्त्रान्तरम् । 'कुलकं तु पटोले स्यात्संबद्धश्लोकसंहतौ ।' इति—(मे० पृ० ६ श्लोकः ९९) ।

१ पटोलं=वस्त्रभेद । प्रकीर्णकम्=चामरम् । 'प्रकीर्णक चामरे स्याद्विस्ता(स्त)रे, ना तुरङ्गमे ।' इति--(मे० पृ० १६ श्लोक १६७) । हल्लीसकम्=योषिता मण्डलीनृत्यम् । 'हल्लीसकं तु स्त्रीनृत्ये' इति--(श० र० स० पृ० ४५ प० ६) । 'हल्लीषमित्यपि ।' 'स्त्रीणा हल्लीषं सहनर्त्तनम् ।' इति--(त्रि० शे० पृ० २७२ श्लोक २) । 'मण्डलेन तु यन्नृत्य स्त्रीणां हल्लीषक तु तत् ।' इति--(अभि० स० अभि० चि० पृ० १६ श्लोक २८१) । पुष्पकम्= रीतिपुष्पम्, कुबेरविमान च । 'पुष्पक रीतिपुष्पे च विमाने धनदस्य च । नेत्ररोगे तथा रत्नकङ्कणे च रसाञ्जने ।। लोहकास्ये मृदङ्गारशकटचा च नपुसकम् ।' इति--(मे० पृ० १० श्लोकः १२३) । खम्=इन्द्रियम्, नभश्च । 'खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि ।' इति--(मे० पृ० १९ श्लोक १) । लिङ्गम्=चिह्नम्, अनुमान च । 'लिङ्ग चिन्हेऽनुमाने च साख्योक्तप्रकृतावपि ।' इति--(मे० पृ० २३ श्लोक २१) । स्थगु=गडु, पृष्ठगुड, घाटा-मस्तकयोर्मध्ये मासवृद्धि । भङ्गम्=खण्डम्, भञ्जनम् । 'भङ्ग सस्य च भञ्जनम् ।' इति—(अने० ध्व० म० पृ० २० श्लोक १७४) । पूगम्=गुवाकफलम्, उद्वेगम् । "सुपारी" इति लोके । 'पूग क्रमुकजे फले ।' इति—(श० र० स० पृ० ६० प० ८) । चोचम्=उपभुक्त-फलावशेष । 'फलावशिष्ट तालफल च चोच कदल्या फल भवेत् ।' इत्यार्षकोषः इति—(अ० सु० व्या० पृ० ४५९ स्तर१ प० २३) ।' 'फलवाचिनस्तु नपुसकत्व सिद्धं लोपधत्वात् । बीजम्=उत्पत्तिहेतु, कारणम्, सस्य च । 'बीज कारणसस्ययो ।' इति--(श० र० स० पृ० ७७ श्लोकः २) । पिञ्जम्=बलम् । 'पिञ्जा तूलहरिद्रयो । पिञ्जा स्त्रिया मता तूलपिञ्जि-काया बुधोत्तमै । क्लीब बले, वधे पुसि, त्रिलिङ्ग व्याकुले मतम् ।' इति--(मे० पृ० ३० श्लोक १२) ।

अथेदानी रिष्टादीन् शुल्बपर्य्यन्तान्नपुसकलिङ्गवाचकशब्दानाह हेम —(अभि० स० लिं० पृ० ५ श्लोक ६६, ६७, ६८, ६९) ।

रिष्ट फाण्टं ललाट–मिष्ट–व्युष्ट–करोट–कूपीट–चीनपिष्टम् ॥१६॥
शृङ्गाट–मोरट–पिटान्य–ऽथ पृष्ठ–गोष्ठे
भाण्डा–ऽण्ड–तुण्ड–शरण–ग्रहणे–रिणानि ।

---

पाणिनीयेऽपि–(१) (किरीटमुकुटललाटवटवीटशृङ्गाटकरोटलोष्टानि नपुसके) ।। किरीटम्=मुकुटम् । अमरस्तु "किरीट पुन्नपुसकम्" इत्याह । वीटम्= । शेषशब्दाना व्याख्या तु हैमादितो बोध्या । सि० कौ० पृ० ३९९ सू० ६४ ।

(२) (ऋणलवणपर्णतोरणरणोष्णानि नपुसके) ।। तोरणम्=वहिर्द्वारम्, द्वारबाह्यभाग । अमरस्तु–

पिङ्गाण–तीक्ष्ण–लवण–द्रविणं पुराण
त्राणं शणं हिरण–कारण–कार्म्मणानि ॥१७॥
पर्य्याण–र्ण–घ्राण–पारायणानि
श्रीपर्णो–ष्णे धोरण–क्षुण्ण–भूतम् ।
प्रादेशान्ता–ऽश्मन्त–शीतं निशान्त
वृन्तं तूस्त वार्त्त–वाहित्थ–मुक्थम् ॥१८॥
अच्छोद–गोर्द–कुसिदानि कुसीद–तुन्द–
वृन्दा–ऽऽस्पदं द–पद–निम्न–सशिल्प–तल्पम् ।
कूर्प–त्रिपिष्टप–प्रतीपवद–ऽन्तरीप–
रूपं च पुष्प–निकुरम्ब–कुटुम्ब–शुल्बम् ॥१९॥

एषा व्याख्या–

रिष्टमिति शृङ्गाटेति । पर्य्याणेति । अच्छोदेति च । एते रिष्टादय शुल्बान्ता शब्दा

---

"तोरणोऽस्त्री" त्याह। शे० व्या० उपर्युक्तवत् । सि० कौ० पृ० ४०० सू० ६७।

(१) काष्ठपृष्ठसिक्थोक्थानि नपुसके) ॥ सिक्थम्=मधूच्छिष्टम् । शे० उ० । सि० कौ० पृ० ४०० सू० ७० ।

(२) (जवनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमियुनस्मशानरत्ननिम्नचिह्नानि नपुसके)॥ कानन विपिन च=अरण्ये । शासनम्=शास्ति, आज्ञा च । चिह्नम्=लाञ्छनम्, पताका च । शे० उ०। सि० कौ० पृ० ४०० सू० ७४ ।

(३) (पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुसके) ॥ समीपम्=निकटम्। अमरस्तु— "समीपे निकटासन्नेत्यनेन त्रिलिङ्गत्वमाह। शे० उ०। सि० कौ० पृ० ४०० सू० ७७।

(४) (त्रिविष्टपत्रिभुवने नपुसके) ।। एते नपुसके स्त । तृतीय वि(पि)ष्टप त्रिविष्टपम्=स्वर्गः। स्वर्गाभिधानतया पुस्त्वे प्राप्तेऽयमारम्भ । त्रिभुवनम्=त्रिलोको, स्वर्गमर्त्यपातालात्मक लोकत्रयम् । सि० कौ० पृ० ३९९ सू० ४४ ।

(५) (द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि) ॥ एतानि नपुसके स्यु । द्वन्द्वम्=युग्मम्, कलहं च। बर्हम्=मयूरपिच्छम्। दुःखम्=कष्टम्। बडिशम्=मत्स्यधारणाय वक्रलौहकण्टकविशेषः, मत्स्यवेधनम् । पिच्छम्=बर्हम् । बिम्बम्=प्रतिबिम्बम्। कुटुम्बम्=पोष्यवर्गः, बान्धवश्च । कवचम्=वर्म । वरम्=कुङ्कुमम् । शरम्=जलम् । वृन्दम्=समूह । अरम्=शीघ्रम्, चक्राङ्ग च । कम्=सुखम्, शिरः, जल च । सि० कौ० पृ० ४०३ सू० १७० ।

क्लीबे स्यु । रिष्टम् = क्षेमम्, कल्याणम् । अशुभम्, अमङ्गलम्, अभाव, नाशश्च। 'रिष्ट क्षेमाशुभाभावेषु' इति—(अम० ना० लि० पृ० ४०३ श्लोक ३६)। 'रिष्ट स्यादशुभैनसो ।' इत्यजय' इति—(अम० सु० व्या० पृ० ४०३ स्त० १ प० १६)। 'रिष्ट खड्गे फेनिले च रिष्टं स्यादशुभेऽपि च ।' इति च-(श० र० स० पृ० ८६ श्लोक: ७)। फाण्टम् = औषधान्तरम्, कषायविशेष । 'फाण्ट स्यादौषधान्तरे।' इति-(श०र०स० पृ०८५ प०१९)। ललाटम् = अलिकम्, गोधि । 'ललाटमलिक गोधि' इति-(अम० ना० लि० पृ० २३४ श्लोक ९२)। इष्टम् = सस्कार:, क्रतुकर्म च। 'क्लीबे सस्कारे क्रतुकर्मणि ।' इति—(मे० पृ० ३३ श्लोक २)। व्युष्टम् = कल्यम्, प्रभातम् । 'व्युष्ट कल्ये, त्रिषूषिते ।' इति—(मे० पृ० ३५ श्लोक २८)। करोटम् = भाजनम्। शिरोऽस्थि च। कूपीटम् = उदरम्, जल च। 'कूपीटमुदरे तोये' इति—(मे० पृ० ३६ श्लोक ४०)। चीनपिष्टम् = सिन्दूरम, सीसक च। शृङ्गाटम् = नलोद्भव प्रसिद्धमेव, वारिकण्टकम्, जलजलताफलम्। "सिघाडा" इति लोके। चतुष्पथ च। 'शृङ्गाटकं भवेद्वारिकण्टके च चतुष्पथे ।' इति—(मे० पृ० १८ श्लोक २१९)। मोरटम् = इक्षुमूलम्, अङ्कोठप्रसूनम्, सप्तरात्रात्परक्षीरं च। 'मोरटं तु भवेदिक्षुमूलाङ्कोठप्रसूनयो । सप्तरात्रात्परक्षीरे' इति—(मे० पृ० ३७ श्लोक. ५३)। पिटम् = छदि, चाल, गृहाच्छादनतृणादि। 'पिट चाल.' इति—(त्रि० शे० पृ० २८० श्लोक: २)। 'छदि पिधाने' इति च—(श० र० स० पृ० १७३ प० १)। पृष्ठम् = चरममात्रम्, शररीरावयवान्तर च। "पीठ" इति लोके। 'पृष्ठ चरममात्रेऽपि देहस्यावयवान्तरे।' इति—(मे० पृ० ३९ श्लोक ७)। गोष्ठम् = गोस्थानकम्। 'गोष्ठ गोस्थानके' इति—(मे० पृ० ३९ श्लोक. ४)। भाण्डम्=पात्रम्, परिस्कार, वणिङ्मूलधनम्, भूषा, अश्वभूषणं च। 'भाण्ड पात्रे वणिङ्मूलधने भूषाऽश्वभूषयोः।' इति—(मे० पृ० ४२ श्लोक. २१)। अण्डम् = पक्ष्यादिप्रसव, पेशी, मुष्क, अण्डकोषश्च। 'अण्ड मुष्के च पेश्या स्यात्' इति—(मे० पृ० ४० श्लोक १)। तुण्डम् = मुखाग्रम्, मुख च। 'अथ मुखे तुण्डमुदीर्य्यते।' इति--(श० र० स० पृ० ९७ श्लोक ११)। शरणम् = गृहम्, रक्षयिता, त्राता च। 'शरण गृहरक्षित्रोर्वधरक्षणयोरपि ।' इति—(मे० पृ० ५० श्लोक ७९)। ग्रहणम् = पर्वप्रतिपत्सन्धौ राहुणा सूर्यचन्द्रमसोर्ग्रसनम्, आदानम्, हस्तयोर्व्यापार, स्वीकारश्च। 'ग्रहण स्वीकारादरकरोपरागोपलब्धिवन्दिषु, (च)।' इति—(मे० पृ० ४८ श्लोक ४५)। ईरिणम् = ऊषर:, क्षारभूमि, शून्य च। 'ईरिण तूषरे शून्ये त्विरिण चापि गद्यते।' इति 'ऊषरं क्षारमृद्भुवि।' इति च—(श० र० स० पृ० १०९ प० ९)। पिङ्गाणम् = वर्णविशेष:। यादवस्तु पुसीत्याह—'सितकाचस्तु पिङ्गाण' इति—(वै० पृ० १९७ श्लोक १३)। तीक्ष्णम् = समुद्रलवणम्, लोहम्, विषम्, युद्ध च। 'तीक्ष्ण क्लीबे विषे युद्धे समुद्रलवणायसो:।' इति—(ना० र० मा० पृ० २५ प० १३)। लवणम् = सैन्धवादि। 'लवणं सैन्धवादौ'

इति––(मे० पृ० ५० श्लोक ७५) । द्रविणम् = वित्तम्, धनम्, स्वर्णं च। 'अथ द्रविण गेहे वित्ते स्वर्णे पराक्रमे ।' इति––(ना० र० मा० पृ० ७६ प० १५) पुराणम् = ग्रन्थभेद । 'पुराण ग्रन्थभेदे च क्लीबे, त्रिषु पुरातने ।' इति––(ना० र० मा० पृ० ७८ प० ८) । त्राणम् = रक्षणम्, त्रायमाणौषधिश्च । 'त्राण तु त्रायमाणाया रक्षणे, रक्षिते त्रिषु ।' इति— (मे० पृ० ४६ श्लोक १४) । शणम् = भङ्गा, मातुलानी, धान्यविशेषश्च। 'शणस्तु माल्य-पुष्प: स्याद्वमन. कटुतिक्तक । निशावनो दीर्घशाख' इति––(रा० नि० पृ० ३३५ श्लोक १०) हिरणम् = रेत:, स्वर्णम्, वराटश्च । कारणम् = हेतु, करणम्, वधश्च। 'कारण करणे हेतुवधयोश्च नपुसकम् ।' इति—(मे० पृ० ४८ श्लोक ४३) । कार्मणम् = मत्रतत्रा-दियोजनम्, कर्मठश्च । 'कार्मण मत्रतत्रादियोजने कर्मठेऽपि च ।' इति—(मे० पृ० ४८ श्लोक ४१) । पर्य्याणम् = पल्ययनम्, वङ्कााग्रभाग । ''घोडे का पलान'' इति लोके । 'पल्ययन पर्याणमस्य तु । वङ्कााग्रभाग स्यात्' इति––(त्रि० शे० पृ० ३०० श्लोक ४७) । ऋणम् = उद्धार, पर्य्युदञ्चनम् । 'ऋण पर्य्युदञ्चनम् । उद्धार' इति—(अम० ना० लि० पृ० ३०३ श्लोक ३,४) । 'ऋण देये निगद्यते ।' इति—(श० र० स० पृ० १०३ प० १०) । 'ऋण देये जले दुर्गे' इति च––(अने० स० पृ० १२ श्लोक. १३५) । घ्राणम् = नासिका । 'घ्राण क्लीबं नासिकाया, घ्राते स्याद्वाच्यलिङ्गकम् ।' इति––(मे० पृ० ४५ श्लोक ११) । पारायणम् = समासङ्ग, कात्स्न्यर्म्, पारगतिश्च । 'पारायण समासङ्गे कात्स्न्येर्य पारगतावपि ।' इति––(मे० पृ० ५२ श्लोक १०३) । श्रीपर्णम् = पद्मम्, अग्निमन्थश्च । 'क्लीब पद्माग्नि-मन्थयो ।' इति––(मे० पृ० ५१ श्लोक ८२) । 'गभार्य्या कट्फलेऽपि श्रीपर्णी, पद्माग्नि-मन्थयो । क्लीबे' इति च––(ना० र० मा० पृ० १८ प० १६) । उष्णम् = अशीतम् । ''गर्माई'' इति लोके । सूर्यातपश्च । ''घाम'' इति लोके । त्रिकाण्डशेषे तु दक्षार्थे क्लीबलिङ्गमाह— 'उष्णं दक्षेऽपि, नाऽऽतपे ।' इति––(त्रि० शे० पृ० ३३१ श्लोक० १२२) । धोरणम् = वाहनम्, यानम् । 'सर्व स्याद्वाहन यान युग्य पत्र च धोरणम् ।' इति—(अम० ना० लि० पृ० २८४ श्लोक. ५८) । क्षुण्णम् = अभ्यस्तम, प्रहतम् । 'व्युत्पन्न प्रहत क्षुण्ण' इति— (वै० पृ० २०५ श्लोक: ४६) । इह क्षूणमित्यपि पाठो दृश्यते । भूतम् = क्ष्मादि, पृथिव्य-प्तेजोवाय्वाकाशा., पिशाचादि, जन्तुश्च। 'भूत क्ष्मादौ पिशाचादौ क्लीब, त्रिषूचिते ।' इति—(मे० पृ० ५७ श्लोक ४१) । प्रादेशान्तम् = तर्जन्यङ्गुष्ठान्तसम्मितम्, तर्जनीसहित-विस्तृताङ्गुष्ठान्तम् । अश्मन्तम् = चुल्ली, अशुभं च । 'अश्मन्तमशुभे चुल्ल्या मरणेऽनवधावपि । क्लीबेऽपि' इति––(मे० पृ० ६० श्लोक: ८३) । शीतम् = हिमगुण । 'शीत हिमगुणे क्लीबम्' इति—(मे० पृ० ५८ श्लोक: ६५) । निशान्तम् = गृहम्, उषश्च। 'निशान्त त्रिषु शान्ते स्यात् क्लीबं तु भवनोषसो: ।' इति––(मे० पृ० ६३ श्लोक १२०) तथा च प्रयोग—'ययौ

निशान्तं न वधूर्निशान्तम्' इति । वृन्तम्=फलपत्रादिर्येन धार्यते तत्, प्रसवबन्धनम् । "भीण्ड" "वेंटा" "वोंटा" इति च लोके। घटीधारा, स्तनमुख च। 'वृन्त प्रसवबन्धेऽस्त्री(च) घटीधाराकुचाग्रयो ।' इति—(मे० पृ० ५८ श्लोक ६०) । तूस्तम्=रेणु:, जटा, पाप च । 'पापं तु पातकम् । शल्य तूस्तं च कल्क' इति—(त्रि० शे० पृ० २७१ श्लोक ११) । वार्तम्= नि सारम्, आरोग्य च। 'वृत्तिमन्तीहजोर्वार्तं क्लीबे त्वारोग्यफल्गुनो ।' इति—(ना० र० मा० पृ० २९ प० १६) । वाहित्थम्=हस्तिकुम्भाधोभाग । कुम्भोऽत्रवातकुम्भ । 'वाहित्थ वातकुम्भाध' इति भागुरि' इति—(अम० सु० व्या० पृ० २७८ स्त० १ प० ५, ६) । स च ललाटाऽधोभाग । 'अध कुम्भस्य, वाहित्थम' इति—(अम० ना० लिं० पृ० २७८ श्लोक: ३९) । 'कुम्भयोरन्तर विदु: । वातकुम्भस्तु तस्याधो वाहित्थं तु ततोऽप्यध ।' इति हैमनाममाला' इति—(अम० सु० व्या० पृ० २७८ स्त० १ प० ६, ७) । उक्थम्=सामविशेष, सामभक्ति:, प्राणश्च। 'साम्न्युक्थ स्वरपत्तनम् ।" इति—(त्रि० शे० पृ० २७१ श्लोक: २) । स्वराणां निषादादीनां गानध्वनिविशेषाणा पत्तनमाश्रय.। उक्थ तु नवविधात्मकसाम्नोऽवयवभेद स्यात् । अच्छोदम्=हिमालयपर्वतस्थसरोविशेष । गोर्दम्=मस्तिष्कम्, मस्तिष्कभवस्नेह । "दिमाग" इति लोके। 'मस्तिष्क गोर्दम्' इति—(अम० ना० लिं० पृ० २२४ श्लोक. ६५) । कुसिदम्, कुसीदं च=वृद्ध्याजीवनम्। "ब्याज का धन्धा" इति लोके, 'अर्थप्रयोगस्तु कुसीद वृद्धिजीविका।' इति—(अम० ना० लिं० पृ० ३०३ श्लोक ४) । 'कुसीद जीवने वृद्ध्या क्लीबं, त्रिषु कुसीदके ।' इति—(मे० पृ० १६ श्लोक २६) । तुन्दम्=उदरम् । 'तुन्द स्यादुदरे' इति—(श० र० स० पृ० ७३ श्लोक: २) । वृन्दम्=समूह । 'स्त्रिया तु सहति,वृंन्द निकुरम्बा कदम्बकम् ॥' इति—(अम० ना० लिं० पृ० २०१ श्लोक ४०) । आस्पदम्=पदम्, स्थानम्, कृत्य च। 'अथास्पदं पदकृत्ययो:।' इति—(मे० पृ० ७६ श्लोक २०) । दम्=कलत्रम्, स्त्री, पानम्, वैराग्यं च।' 'द दान स्नरण कर्म भव्यं न्यूनमकिल्बिषम् ।' इति— (एका० ना० मा० पृ० ८ श्लोक. ६४) । 'द क्लीबे पानवैराग्यकलत्रेष्ववलोकने । भेद्यलिङ्गस्त्वय मूके गृहीते द्रावके शुचौ।' इति च—(ना० र० मा० पृ० ६ प० १६) । पदम्=स्थानम्, लक्षणम् पादश्च । 'पद शब्दे च वाक्ये च व्यवसायापदेशयो:। पादतच्चिह्नयो स्थानत्राणयोरङ्कवस्तुनो । श्लोकपादेऽपि च क्लीबम्' इति—(मे० पृ० ७५ श्लोक ८) । निम्नम्=गभीरम् । "नीचा" इति। "गहरा" इति च लोके। 'निम्न गभीरगम्भीरम्' इति— (अम० ना० लिं० पृ० ९८ श्लोक. १५) । शिल्पेन सहित सशिल्पम् । शिल्पम्=स्रुव, क्रियायोग्य च । शिल्प स्रुवे क्रियायोग्ये' इति—(मे० पृ० १०२ श्लोक १२) । तल्पम्=शयनीयम्, कलत्रम्, अट्टश्च। 'तल्प स्याच्छयनीयेऽपि कलत्रेऽट्टेऽपि न द्वयो: ।' इति—(मे० पृ० १०२ श्लोक: ६) । कूर्पम्=भ्रुवोर्मध्यम् । 'कूर्चं कूर्पं भ्रुवोर्मध्ये' इति—(अभि० स० अ० चिं० पृ० २५ श्लोक ५८०) । त्रिपिष्टपम्=स्वर्ग:।

'त्रिविष्टप'मित्यपि । 'क्लीबे त्रिविष्टपम्' इति--(अम० ना० लिं० पृ० ४ श्लोक ६) । प्रतीपम्=अर्थालङ्कारविशेष, वामं च । अन्तरीपम्=द्वीपम्, जलमध्यस्थस्थलम् । 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ।।' इति—(अम० ना० लिं० पृ० ९६ श्लोक ८) । पुष्पम्=विकासिकुसुमम् ।" "फूल" इति लोके । स्त्रीरजश्च । 'पुष्प विकासिकुसुमस्त्रीरज सु नपुंसकम्' इति--(मे० पृ० १०२ श्लोक ८) । निकुरम्बकम्=कदम्बकम्, समूह । 'निकुरुम्ब'मित्यपि । 'समुदाय समुदयो निकुरुम्बा कदम्बकम् ।।' इति--(वै० पृ० १८६ श्लोक २) । कुटुम्बम्=पोष्यवर्ग, बान्धव, सन्ततिश्च । 'कुटुम्बन्तु सुतादिकम् ।' इति--(वै० पृ० १७७ श्लोक ५१) । शुल्बम्=ताम्रम्, यज्ञकर्म, आचार, जलसन्निधिश्च । शुल्बं ताम्रे यज्ञकर्मण्याचा(धा)रे जलसन्निधौ ।' इति--(मे० पृ० १५९ श्लोक २७) ।

अथेदानीं भान्तादीन् क्षान्तान्तैरिकारान्तैरुकारान्तैर्व्यञ्जनान्तैश्च सहितान्नपुंसकलिङ्गवाचकान् शब्दानाह हेम (अभि० स० लिं० पृ० ५, ६, श्लोक ७०, ७१, ७२, ७३, ७४) ।

प्रसभ-कुसुमं-शुष्मा-ऽध्यात्म-धामे-र्म-सूक्ष्मं
किलिम-तलिम-तोक्मं युग्म-तिग्मं त्रिसन्ध्यम् ।
किसलय-शयनीये साय-खेये-न्द्रियाणि
द्रुवय-भयं-कलत्रं-द्वापर-क्षेत्र-सन्त्रम् ।।२०।।

---

पाणिनीयेऽपि—(१) (तलभ नपुसकम्) ।। एतन्नपुसके स्यात् । तलभम्= । मि० कौ० पृ० ४०० सू० ८० ।

(२) (रुक्मसिध्मयुध्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुपके) ।। एतानि क्लीबे स्यु. । रुक्मम्=सुवर्णम् । युध्मम्=युद्धम् । गुल्मम्=अप्रकाण्डम् । शे० उ० । सि० कौ० पृ० ४०० सू० ८३ ।

(३) (किसलयहृदयेन्द्रियोत्तरीयाणि नपुसके) ।। एतानि क्लीबे स्युः । व्याख्या तु हैमादितो बोध्या । सि० कौ० पृ० ४०० सू० ८६ ।

(४) (भयलिङ्गभगपदानि नपुसके) ।। एतानि नपुमके स्युः । भयम्=दरम् । लिङ्गम्=चिह्नम् । पदम्=स्थानम् । सि० कौ० पृ० ३९८ सू० ३८

(५) (द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दरपञ्जराऽजरजठराऽजिरवैरचामरपुष्करगह्वरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतंत्रयत्रक्षत्रक्षेत्रमित्रकलत्रचित्रच्छत्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रास्त्रशस्त्रशास्त्रवस्त्रपत्रपात्रनक्षत्राणि नपुसके ) ।।एतानि नपुसके स्युः । वक्रम्=सरिद्वङ्कः पुटभेद. । वप्रम्=सीसकम् । नारम्=जलम् । रन्ध्रम्—छिद्रम् । भीरम्=गभीरम्=निम्नम् । विचित्रम्=कर्बुरवर्ण. । केदारम्=क्षेत्रविशेष । अजस्रम्=निरन्तरम्, सन्ततम् । शरीरम्=

शृङ्गवेर–मजिरा–ऽभ्रं–पुष्करं तीर–मुत्तर–मगार–नागरे ।
स्फार–मक्षर–कुकुन्दरा–ऽवर–प्रान्तराणि शिबिरं कलेवरम् ॥२१॥
सिन्दूर–मण्डूर–कटीर–चामर–क्रूराणि दूर्या–ऽरर–वैर–चत्वरम् ।
उशीर–पाताल–मुलूखलाऽऽर्तवे सत्त्वं च सान्त्वं दिवि–किण्व–पौतवम्॥
विश्वं वृशं वलिश–र्मपिश–किल्बिषे च
कर्षा–ऽऽमिषं मिष–मृचीष–मृजीष–शीर्षे ।
पीयूष–साध्वस–महानस–साहसानि
कासीस–मांस–तरसं यवसं बिसं च ॥२३॥
मन्दाक्ष–मक्ष–मथ सक्थि सशालु–यातु

---

देह । कन्दरम् = गुहा । मन्दरम् = वर्णवृत्तान्तरम् । अजरम् = । जठरम् = कुक्षि । मेदिनीकारस्तु "जठर न स्त्रिया कुक्षौ" इति । कुलीरम् = । काश्मीरम् = कुङ्कुमम्, पुष्करमूल च । नीरम् = जलम् । अम्बरम् = आकाश । तन्त्रम् = शास्त्रविशेषः । यन्त्रम् = देवाद्यधिष्ठानम्, पात्रभेद, नियन्त्रणं च । क्षत्रम् = तगरम्, शरीर च । चित्रम् = तिलकम्, आलेख्य च । छत्रम् = आतपत्रम् । मूत्रम् = प्रस्राव । सूत्रम् = तन्तु । वक्त्रम् = मुखम् । नेत्रम् = लोचनम् । गोत्रम् = कुलम् । अङ्गुलित्रम् = अङ्गुलिकवचम् । भलत्रम् = शस्त्रम् = आयुधम् । शास्त्रम् = आगमम्, वेदः, शास्त्रमात्रं च । वस्त्रम् = वसनम् । पत्रम् = पर्णम्, दलम् । पात्रम् = भाजनम् । नक्षत्रम् = तारा । सि० कौ० पृ० ४०० सू० ८९ ।

(शुक्रमदेवतायाम्) ॥ देवतार्थवर्जिते शुक्र क्लीब स्यात् । शुक्रम् = रेतः, वीर्य्यम् । अदेवताया किम् । शुक्रः = भार्गव । सि० कौ० पृ० ४०० सू० ९० ।

पाणिनीयेऽपि—(१) (अभ्र नपुसकम्) ॥ एतन्नपुसके स्यात् । अभ्रम् = मेघः ।

(२) (शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्मषाणि नपुसके) ॥ एतानि नपुसके स्यु । शिरीषम् = शिरीषपुष्पम् । ऋजीषम् = पिष्टभर्जनपात्रम्, पिष्टपचनम् । कल्मषम् = पापम् । शे० उ० । सि० कौ० पृ० ३९९ सू० ५० ।

(३) (पनसबिसबुससाहसानि नपुसके) ॥ एतानि नपुसके स्युः । बुसम् = तुच्छधान्यम्, कडङ्गरम् । शे० उ० । सि० कौ० पृ० ४०१ सू० ९६ ।

(४) (अक्षमिन्द्रिये) ॥ एतदिन्द्रियार्थे नपुसके स्यात् । अक्षम् = इन्द्रियम् । इन्द्रिये किम् । रथाङ्गादौ माभूत् । सि० कौ० पृ० ४०३ सू० १७१ ।

(५) (श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्यक्ष्यास्याऽऽस्पदाऽऽकाशकिण्वबीजानि) ॥ एतानि क्लीबे स्युः । श्राद्धम् = पितृक्रिया । कुलिशम् = वज्रम् । दैवम् = भाग्यम् । पीठम् = आसनम् । कुण्डम् = भाण्डविशेष । अङ्कम् = चिह्नम । अङ्गम् = अवयव । दधि = क्षीरविकारविशेष । सक्थि = ऊरु, जानूर्ध्वभागः । अक्षि = नेत्रम् । आस्यम् =

स्वाद्वा–ऽऽशु तुम्बुरु कशेरु शलालु चाऽऽलु ।
संयत्–कुमुन्–महद–ऽह्वानि पृषत्–पुरीतत्–
पर्वाणि रोम च मरुच्च जगल्ललाम ।।'इति।।२४।।

एषां व्याख्या—

प्रसभेति । शृङ्गवेरेति । सिन्दूरेति । विश्वमिति । मन्दाक्षेति च । एते प्रसभादयो ललामान्ता शब्दा क्लीबे स्यु । प्रसभम्=बलात्कार, हठ । 'प्रसभ तु बलात्कारो हठ' इति—(अम० ना० लिं० पृ० २६६ श्लोक १०८) । 'प्रसभोऽस्त्री बलात्कारो हठश्च' इति—(वै० पृ० १२१ श्लोक २०६) । 'क्लीबे तु प्रसभ हठ ।' इति च बोपालित' इति—(अम० सु० व्या० पृ० २६६ स्त० ५ प० २५) । कुसुमम्=पुष्पम्, फलम्, स्त्रीरज, नेत्रेरोगश्च । 'कुसुम स्त्रीरजोनेत्ररोगयो फलपुष्पयो ।।' इति—(मे० पृ० १११ श्लोक: ४१) । शुष्मम्=तेज । 'शुष्म तेजसि, सूर्ये ना' इति--(मे० पृ० ११० श्लोक ३४) । अध्यातमम्=सूक्ष्मम्, सूक्ष्मशरीरम् । धाम=देहम्, गृहम्, रश्मिश्च । 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयो ।' इति—(मे० पृ० ८८ श्लोक ८०) । ईर्म्मम्=व्रण । 'ईर्म्ममीर्म्भो व्रणे मतौ ।' इति—(श० र० स० पृ० २२२ प० ६) सूक्ष्मम्=अध्यातमम्, सूक्ष्मशरीरम्, कैतवम्, शाठ्यं च । 'सूक्ष्म स्यात्कैतवेऽध्यात्मे' इति—(मे० पृ० ११० श्लोक ३६) । किलिमम्=देवदारु । 'देवदारु स्मृत दारु सुराह्व किलिम च तत् ।' इति धन्वन्तरि:' इति—(रा० नि० पृ० २१ श्लोक. ७६) । 'भद्रदारु द्रुकिलिम पीतदारु च दारु च ।।' इति—(अम० ना० लि० पृ० १४६ श्लोक ५३) । द्रुकिलिमम् किलिमम् भीमसेनो भीम इतिवत् । तलिमम्=कुट्टिमम्, तल्पम्, वितान च । 'तलिम कुट्टिमे तल्पे चन्द्रहासे वितानके ।' इति—(मे० पृ० १११ श्लोक ४४) । तोक्मम्=कर्णमलम् । 'तोक्मम् कर्णमले, पुंसि हरिते च हरिद्यवे ।' इति–(मे० पृ० १०९ श्लोक १४) । युग्मम्=युगलम् । 'युग्म् तु युगल युगम् ।'

---

मुखम् । आस्पदम्=प्रतिष्ठा । आकाशम्=वियत् । किण्वम्=सुराबीजम् । बीजम्=उत्पत्तिकारणम् । सि० कौ० पृ० ४०३ सू० १६७ ।

(१) (दिनाहनी नपुसके) ।। एते नपुसके स्तः । दिनम्, अहश्च=दिवसौ । सि० कौ० पृ० ४०१ सू० १०१ ।

(२) (वियज्जगत्सकृच्छकत्पृषच्छकृद्यकृदुदश्वित) ।। एते क्लीबा स्यु । वियत्=आकाशम् । जगत्=त्रैलोक्यम् । सकृत्=स्तोक,अल्पञ्च । शकत्=पृषत्=बिन्दुः । शकृत्=गूथम् । यकृत्=कालखण्डम् । उदश्वित्=तक्रम् । सि० कौ० पृ० ४०३ सू० १६५ ।

इति—(अम० ना० लि० पृ० २०१ श्लोक ३८)। 'युग्म यमलयामले।' इति 'रभस.' इति–(अम० सु० व्या० पृ० २०१ स्त १ प० ३६, ३७)। तिग्मम्=तीक्ष्णम्, अत्युष्णम्। 'तिग्म तीक्ष्ण खर तद्वत्' इति—(अम० ना० लि० पृ० ४३ श्लोक ३५)। त्रिसन्ध्यम्=दिनाद्यन्तमध्या, त्रिकालः। तिसृणा सन्ध्याना समाहार, आबन्तो वेति 'पाक्षिकी क्लीबता, पक्षे त्रिसध्यी। 'प्राह्णापराह्णमध्याह्नास्त्रिसन्ध्यम्' इति—(अम० ना० लि० पृ० ४४ श्लोक: ३)। किसलयम्=पल्लव, नवपत्रम्। 'पल्लवोऽस्त्री किसलयम्' इति—(अम० ना० लि० पृ० १३२ श्लोक १४)। शयनीयम्=शय्या, शयनम्, तूलिकादि। 'शय्याया शयनीयवत्॥ शयनम्' इति—(अम० ना० लि० पृ० २४९ श्लोक १३७, १३८)। सायम्=सन्ध्या, दिनान्त। 'सायसन्ध्या दिनान्तश्च निशादिर्दिवसात्यय। साय पितृप्रसूश्चाथ प्रदोष स्यान्निशामुखम्।' इति—(रा० नि० पृ० ४१६ श्लोक० ३०)। 'दिनान्ते तु सायं सन्ध्या पितृप्रसू:।' इति। तत्र सायमित्यव्यय नपुसकलिङ्ग वा। 'साय काण्डे दिनान्ते चे'ति मेदिन्यादिषु साय इत्युक्तत्वात्सायमिति मान्ताव्ययस्याव्ययवर्गे वक्ष्यमाणत्वादत्र सायोऽदन्तः पुस्येव' इति—(अम० अम० वि० टी० पृ० २३ श्लोक ३ पं० १७ त)। 'सायं सायो भवेत्' इति पुरुषोत्तमदेव' इति च (शब्दभेदप्रकाश पृ० ४ श्लोक. १६)। खेयम्=परिखा, दुर्गादिपरितम्। 'खेय तु परिखा' इति—(वै० पृ० १६० श्लोक १३)। इन्द्रियम्=हृषीकम्, चेतश्च। 'इन्द्रियं तु हृषीके चेतसि स्मृतम्।' इति—(मे० पृ० ११८ श्लोक ७५)। द्रुवयम्=मानविशेषः, पाय्यम्, यौ (पौ) तवम्, मानार्थे परिमाणम्। 'यौ(पौ)तव द्रुवय पाय्यमिति मानार्थकं त्रयम्।' इति—(अम० ना० लि० पृ० ३३० श्लोकः ८५)। भयम्=दरम्, साध्वसम्, प्रतिभयम्, घोरम्, कुब्जकपुष्पञ्च। 'भय प्रतिभये घोरे प्रसूने कुब्जकस्य च।' इति—(मे० पृ० ११५ श्लोकः ४१)। कलत्रम्=स्त्री, श्रोणिश्च। 'कलत्र क्षोणिभार्य्ययो।' इति—(मे० पृ० १३२ श्लोकः १३०)। द्वापरम्=युगविशेष, त्रेतायुगान्तरयुगम्, संशय, संदेहश्च। 'कृतं त्रेता द्वापरं च कलिश्चेति यथाक्रमम्।' इति। 'द्वापरे यज्ञयाग्नेयौ' इति। 'द्वापरौ युगसंशयौ।' इति च (वै० पृ० २४१ श्लोक. ३०)। 'द्वापरं सशये युगे।' इति च—(मे० पृ० १३४ श्लोक १६८)। क्षेत्रम्=केदार। "खेत" "क्यार" इति च लोके। सिद्धस्थानम्, शरीरम्, कलत्रञ्च। 'क्षेत्र देहे भगे पत्न्यां केदारे भारतादिषु।' इति–(अने० ति० पृ० ३८ श्लोक. ३६१)। शृङ्गवेरम्=आर्दकम्, शुण्ठी, पुरविशेष, तीर्थविशेषश्च। राममित्रस्य निषादाधिपतेर्गुहस्य पुरम्, अत्र रामो गङ्गामुत्तीर्णः। तथा च प्रयोग—'शृङ्गवेरपुराधीशाद्रामो वै लब्धजीवकः।' इति–नागोजीभट्ट' इति–(शे०पृ० १ श्लोक. १)। अजिरम्=प्राकाराद् बहि. क्रीडास्थानम्, प्राङ्गणम्, वातश्च। 'अजिर प्राङ्गणे वाते विषये दर्दुरे तनौ।' इति–(मे० पृ० १३० श्लोक १०९)।

अभ्रम् = मेघ, गगनम्, धातुभेदश्च । 'अभ्र मेघे च गगने धातुभेदे च काञ्चने ।' इति—(मे० पृ० १२३ श्लोक ६) । पुष्करम् = भेषजम्, तीर्थ च । 'पुष्कर भेषजे तीर्थे पद्मदन्तिकराग्रयो.। द्वीपे तूर्यमुखे वारिव्योमखड्गफलादिषु ।' इति—(अने० ति० पृ० ५४ श्लोक १६७) । तीरम् = रोध, कूलम्, तट च । 'तीर तु रोधसि ।' इति— (मे० पृ० १२६ श्लोक ४६) । 'तीरा वङ्गे, तीर पुनस्तटे ।' इति च—(अने० स० पृ० ३६ श्लोक ४४१)। तथा च प्रयोग —'समुद्र-तीरञ्जितसर्वलोका सेनापगा व्याप्तवती बलेन ।' इति द्विसन्धानश्लेष ' इति—(अम० सु० व्या० टि० पृ० ९५ स्तं० २ प० ४०, ४१) । उत्तरम् = प्रतिवाक्यम् । 'नपुसक प्रतिवाक्ये' इति—(मे० पृ० १३१ श्लोक ११८) । आगारम् = गृहम् । 'भवनागारमन्दिरम् ।' इति—(अम० ना० लि० पृ० ११७ श्लोक ५) । 'विद्यादगारमागारम्' इति— (श० भे० प्र० पृ० १ श्लोक २) । नागरम् = मुस्तकम्, शुण्ठी च । 'नागर मुस्तके शुठ्या विदग्धे नगरोद्भवे ।' इति—(मे० पृ० १३५ श्लोक १०२) । स्फारम् = विपुलम्, बहु, बृहत्, बहुलम् । 'स्फार भद्र बृहद् व्यूढमुदूढं बहुल बहु ।' इति—(वै० पृ० २०७ श्लोक ८०) । अक्षरम् = वर्ण, गगनम्, तपश्च । 'अक्षर गगने वर्णे तपस्यध्वरधर्मयो । निर्वाणेऽपि परब्रह्ममूलकारणयोरपि ।' इति—(अने० ति० पृ० ३९ श्लोक ७) । कुकुन्दुरम् = कूपकम्, कटिकूप, नितम्बस्थकूपकद्वयम्, स्त्रिया पृष्ठवशादधो-गर्त्तम् । 'कुकुन्दर'मित्यपि । 'कूपकौ तु निम्बस्थौ, द्वयहीने कुकुन्दरे ।' इति—(अम० ना० लि० पृ० २२८ श्लोक ७५) । अवरम् = गजपश्चार्द्धम्, गजान्त्यजघादिदेश । 'न ना गात्रावरे' इति—(त्रि० शे० पृ० २९९ श्लोकः ३९) । 'अपर' मित्यपि । प्रान्तरम् = दूरशून्यवर्त्म, विपिनम्, कोटर च । 'प्रान्तर विपिने दूरशून्यवर्त्मनि कोटरे ।' इति—(मे० पृ० १३६ श्लोक १८४) । शिबिरम् = सैन्यवसति । 'शिबिर सैन्यवसतौ' इति—(श० र० स० पृ० २८२ प० ६) । कलेवरम् = शरीरम् । 'अथ क्लेवरम् । गात्र वपु सहनम्' इति—(अम० ना० लिं० पृ० २२६ श्लोक ७०) । सिन्दूरम् = रक्तवर्णचूर्णविशेष, नागसम्भवम्, सीमन्तकम् । 'सिन्दूरं रक्तचू-(व)र्णके ।' इति—(मे० पृ० १३९ श्लोक २३६) । मण्डूरम् = लौहमलम्, सिहाणम्, शिघा-णम् । भावमिश्रस्तु पुंसीत्याह–'ध्मायमानस्य लोहस्य मलं मण्डूर उच्यते । यल्लोह यद्गुण प्रोक्त तत्किट्टमपि तद्गुणम् ।' इति–(भा० प्र० पृ० श्लोक )। कटीरम् = कटि, कन्दर च । 'कटीरं कन्दरे कटचाम्' इति–(वै० पृ० २५० श्लोकः ६) । चामरम् = चमरीपुच्छनिर्मित वालव्यजनम्, प्रकीर्णकम् । 'चवर" "चौरी" इति च लोके । दण्डं च । 'चामर चामरापि च । दण्डे च वालव्यजने' इति—(मे० पृ० १३३ श्लोक १५४) । क्रूरम्—नक्षत्रविशेष । 'पूर्वात्रयं याम्यमघे उग्रं क्रूर कुजस्तथा ।' इति रामः' इति—(मु० पृ० श्लोक. ) । अस्थि च । 'अथास्थि कीकसं विड्ड कलल क्रूरमाढिकम् ।' इति—(वै० पृ० १८२ श्लोकः १०८) ।

दूर्यम् = विष्ठा, शठी च । अररम् = कपाटम्, छदश्च । 'अरर छदकपाटयो । (मे० पृ० १३० श्लोक ११०) । वैरम् = विरोध । ''वैर विरोधे' इति—(श० र० स० पृ० २६० पं० १४) । चत्वरम् = अङ्गणम्, स्थण्डिलम्, यागार्थसस्कृतभूमि, नानाजनावस्थानदेशश्च । "चबूतरा" इति लोके । 'चत्वर स्थण्डिलेऽङ्गणे ।' इति—(मे० पृ० १३३ श्लोक १५२) । उशीरम् = वीरणमूलम्, अभयम्, नलदम् । 'मूलेऽस्योशीरमस्त्रियाम् । अभय नलदम्' इति—(अम० ना० लि० पृ० १८४ श्लोक १६४) पातालम् = नागलोक, विवरम्, वडवानलश्च । 'पाताल नागलोके स्याद्विवरे वडवानले ।' इति—(मे० पृ० १५३ श्लोक ११०) । उलूखलम्, = उदूखलम्, कक्षावक्षणयो सन्धिश्च । 'अयोनिर्मुसलोऽस्त्री, स्यादुदूखलमुदूखलम् ।' इति—(वै० पृ० १६४ श्लोक ६५) । 'उलूखल तु सन्धि: स्यात्कक्षाया वक्षणस्य च ।' इति च—(वै० पृ० १७८ श्लोक: ७०) । आर्त्तवम् = स्त्रीरज. । 'आर्त्तव स्त्रीरजस्युक्तम्' इति—(श० र० स० पृ० ३१९ प० ४) । सत्त्वम् = गुण, पिशाचादि, बल च । 'सत्त्व गुणे पिशाचादौ बले द्रव्य-स्वभावयो ।' इति—(मे० पृ० १५९ श्लोक २८) । सान्त्वम् = दाक्षिण्यम्, साम च । 'सान्त्व-दाक्षिण्यसामनो. ।' इति—(मे० पृ० १५९ श्लोक २९) । दिवम् = गगनम्, स्वर्गश्च । 'दिव क्लीबं तयो (स्व खयो) स्मृतम् ।' इति—(मे० पृ० १५८ श्लोक ११) । किण्वम् = मद्यबीजम्, पापं च । 'किण्व बीजे त्र शीधुन । पापे' इति—(मे० पृ० १५७ श्लोक ५) । पौतवम् = मानविशेष., द्रुवयम्, पाय्य च । 'पाय्य हस्तादिभिर्मान द्रुवय कडूबादिभि । पौतव तुलया तस्य सूत्रं स्याद्रागसूत्रकम् ।' इति— (वै० पृ० १६१ श्लोक. ६४) । 'यौतव' मित्यपि । 'यौतवं द्रुवय पाय्यमिति मानार्थक त्रयम् । मान तुलाङ्गुलिप्रस्थै.' इति । क्रमेणेति च शेष । विश्वम् = जगत् । 'जगति स्यान्नपुंसकम् ।' इति—(मे० पृ० १५९ श्लोक: २३) । वृशम् = आर्द्रकम् । "अदरक" इति लोके । मूल च । वलिशम् = मत्स्यधारणाय वक्रलौहकण्टकविशेषः, मत्स्यवेधनम् । ''बंसी" इति लोके । अपिशम् = हृन्मांसम् । 'अपिस' इत्यपि दृश्यते । किल्बिषम् = पापम्, रोगश्च । 'किल्बिष पापरोगयो ।' इति—(मे० पृ० १६८ श्लोक. ३४) । कर्षम् = अक्ष, षोडशमाषा, अशीतिरक्तिकाः, तोलकद्वयम्, सुवर्णम्, विडालपदकम् । आमिषम् = मांसम्, उपादानम्, उत्कोचश्च । 'उपादानेऽप्यामिष स्यात्' इति—(अम० ना० लि० पृ० ४३६ श्लोक २२३) । 'आमिष पुन्नपुसकम् । भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि च ।' इति च—(मे० पृ० १६७ श्लोक: ३१) । मिषम् = व्याज । "बहाना" "बनावटी" दिखावट" इति च लोके । 'मिष व्याजे, स्पर्द्धने ना' इति—(मे० पृ० १६७ श्लोक: २१) । ऋचीषम् = पिष्टपचनपात्रम् । "कडाही" ''तवा" "तसला" इति च लोके । 'ऋचीषं पिष्टपचनम्' इति—(अम० ना० लिं० पृ० ३१३ श्लोक ३२) ऋजीषम् = कटाहिकातम्बिकादिः, पिष्ट-

भर्जनपात्रम्, पिष्टपचनम्, धनम्, नरकविशेषश्च । शीर्षम्=मस्तकम् । "सिर" इति लोके । 'उत्तमाङ्ग शिर शीर्षम्' इति—(अम० ना० लि० पृ० २३६ श्लोक ९५) पीयूषम्=अमृतम्, सप्तदिवसावधिक्षीर च । 'पीयूष सप्तदिवसावधिक्षीरे तथाऽमृते ।' इति—(मे० पृ० १६८ श्लोक: ४१) । साध्वसम्=भयम् । 'आशङ्का साध्वस दर: । भिया च' इति--(अभि० सं० अ० चि० पृ० १६ श्लोक. ३१६) । 'अथ भय भिया । त्रासोत्त्रासौ दरो भीतमातङ्को भीश्च साध्वसम् ।' इति शब्दार्णव' इति—(अम० सु० व्या० पृ० ७९ स्त० १ प० २१, २२) । महानसम्=चुल्ली, पाकागारं च । 'चुल्ल्या महानस प्राहु पाकागारे च तद्विद ।' इति—(श० र० स० पृ० ३३९ प० १०) । साहसम्=बलात्कारकृतकार्यम्, दमश्च । 'साहस तु बलात्कारकृतकार्ये दमेऽपि च ।' इति--(श० र० स० पृ० ३३८ प० १०) । कासीसम्=उपधातुविशेष । "हीराकस" इति लोके । 'कासीस धातुकासीस केसर तप्तलोमशम् ।' इति—(रा० नि० पृ० ११९ श्लोक १७९) । मामम्=आमिषम्, पललम् । "गोश्त" इति लोके । 'मांस स्यादामिषे क्लीब, कक्कोलीजटयो स्त्रियाम् ।' इति—(मे० पृ० १७० श्लोक ८) । तरसम्=मासम् । 'पिशित तरसं मासम्' इति—(अम० ना० लि० पृ० २२३ श्लोक ६३) । यवसम्=घास, गवाद्यदनीयतृणविशेष । 'घासो यवसम्' इति—(अम० ना० लि० पृ० १८५ श्लोक. १६७) । त्रिसम्=पद्ममूलम् अब्जादीना मूलम् । "कमल नाल" "मुहार" "भसींड़ा" इति च लोके । 'अथास्त्रियाम् । मृणाल बिसम्' इति—(अम० ना० लि० पृ० १०८ श्लोक ४२) । 'विश'मित्यपि । 'मृणाले तु बिसं बिशम् ।' इति द्विरूपकोश:' इति—(अम० सु० व्या० पृ० ४२ स्त २ प० ५, ६) । बिस दन्त्यान्तम् । तथा च—'हसपक्तिरिव बिसवादिनी' इति वासवदत्ता—इति मुकुट ॥ 'मुनय इव बिसाधारा जलपक्षिण' इति दमयन्ती' इति—(अम० सु० व्या० टि० पृ० १०८ स्त० २ प० ३५, ३६) । मन्दाक्षम्=लज्जा । "लाज" इति लोके । 'मन्दाक्ष ह्रीस्त्रपा व्रीडा लज्जा' इति—(अम० ना० लि० पृ० ७९ श्लोक: २३) । अक्षम्=सौवर्चलम्, इन्द्रियम्, तुत्थ च । 'अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके ॥ रुद्राक्षे रावणौ सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान्, क्लीब तुत्थे सौवर्चलेन्द्रिये ॥' इति—मे० पृ० १६५ श्लोक २, ३) । अथानन्तरम् । सक्थि=शरीरावयवविशेष. । ऊरु, जानूपरिभाग । 'सक्थि क्लीबे, पुमानूरु' इति—(अम० ना० लि० पृ० २२७ श्लोक ७३) । सशालु शालुना सहितम् । शालु=शालूकम्, सौगन्धिकादीना कन्द, पङ्कशूरण. । 'शालूकमेषा कन्द स्यात्' इति—(अम० ना० लि० पृ० १०७ श्लोक ३८) । एषा सौगन्धिकादीना कन्दो मूल शालूकम् । पुरुषोत्तमस्तु पुस्त्वमाह—'शालूक पङ्कशूरण: ॥' इति—(त्रि० शे० पृ० २७७ श्लोक २७) यातु=राक्षस. । 'नैर्ऋत: कर्वर. क्रव्यात् कर्बुरो यातुरक्षसी ।' इति शब्दार्णव:' इति—(अम० सु० व्या० पृ० २५ स्त २ प० २, ३) । स्वादु=मिष्टम्, मनोज्ञं

च । 'स्वादुर्मिष्टमनोज्ञयो· ।' इति--(मे० पृ० ७५ श्लोक १६) । आशु=शीघ्रम्, द्रुतम् । "जल्दी" इति लोके। आशुः पुस्यपि-'आशु स्याद् व्रीहिशीघ्रयो· ।' इति—(प० र० मा० पृ० ६५ प० ८) तुम्बुरु=धान्याकम्, कुस्तुम्बुरु। 'तुम्बरु' इत्यपि पाठ । तिन्दुकीफल च । 'धन्याक धान्यकं धान्य कुस्तुम्बुरु धनीयकम् ।' इति—(प० र० मा० पृ० ६ प० १५) 'शूलघ्न तुम्बुरु स्मृतम् ।' इति च--(प० र० मा० पृ० ३३ पं० ४) । कशेरु=पृष्ठास्थि, तृणविशेषश्च। 'शुक्लकार तु क्रूसर वृष्यकन्द कशेरु च।' इति-(वै० पृ० १५७ श्लोक ४७)।'पृष्ठ-स्यास्थि कशेर्वना ।' इति-(वै० पृ० १८२ श्लोक. ११५)। 'कशेरु कन्दभिद्यपि ।' इति च-(श०र० स० पृ० २६७ पृ० ३)।शलालु=सुगन्धिद्रव्यविशेष.।आलु='कचालू' इत्यादिप्रसिद्धा मूलविशेषाः। भेलक च। "डौगा" इति लोके। 'आलुर्गन्तिकाया स्त्री, क्लीब मूले च भेलके ।। इति-(मे०पृ० १४५ श्लोक ३) । संयत्=युद्धम्, आयोधनम, समिति । 'लडाई' इति लोके । कुमुत्=कैरवम् । 'कैरवे तु नपुसकम् ।' इति-(मे० पृ० ७६ श्लोक· २५)। महत्=प्राज्यम् । 'महती वल्लभीभेदे, प्राज्ये स्यात्तु नपुसकम् ।' इति--(मे० पृ० ६४ श्लोक १४१) । अह =दिनम् । 'घस्रो, दिनाहनी, वा तु क्लीबे दिवसवासरौ ।' इति—(अम० ना० लि० पृ० ४४ श्लोक २) । पृषत्=बिन्दुः। 'पृषन्मृगे पुमान्, बिन्दौ न द्वयो ।' इति--(मे० पृ० ६४ श्लोक. १३६) । पुरीतत्=अन्त्रम् ।। "आत" इति लोके । हृदयपरिवेष्टननाडी च । 'अन्त्र पुरीतत्' इति— (अम० ना० लि० पृ० २२४ श्लोक ६६) । 'पुरीतदस्त्रियाम्' इति वाचस्पति' इति— (अम० सु० व्या० पृ० २२४ स्तं० २ प० १८, १९) । पर्व=दर्शप्रतिपदो सन्धि, विषुवत्प्रभृतयश्च । पर्व क्लीब महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदो· सन्धौ विषुवत्प्रभृतिष्वपि ।' इति-(मे० पृ० ८९ श्लोक ८८) । रोम=तनुरुहम्, लोम । 'रोम क्लीब तनुरुहे' इति—(श० र० स० पृ० २२५ प० १६) । मरुत् =ग्रन्थिपर्णम्, वर्हिपुष्पम्, कुक्कुरम् । "कुकुरोदा" इति लोके । 'मरुद्द्वे समीरे ना ग्रन्थिपर्णे नपुसकम् ।' इति--(मे० पृ० ६४ श्लोक. १४३) । जगत्=त्रैलोक्यम्, विष्टपम् पिष्टपम्, भुवनम् । 'जगत्स्याद्विष्टपे क्लीबम्' इति—(मे० पृ० ६२ श्लोक १०९) । ललाम=लाञ्छनम्, भूषा च । ललाम नान्त । अदन्तोऽपि । 'प्रधानध्वजशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु । भूषावाजि-प्रभावेषु ललाम स्याल्ललाम च ।' इति रुद्र' इति— (अम० सु० व्या० पृ० ४२१ स्त० २ पं० ३१, ३२) । 'ललाम पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ।।' इति—(अम० ना० लिं० पृ० ४२१ श्लोक· १४३) ।

अमरसिंहस्तु क्रमरहितान् काश्चिन्नपुसकलिङ्गवाचकशब्दानाह--(अम० ना० लि० पृ० ४५९ श्लोकः ३०-१-२) ।

... ... उक्थ–तोटके ।
चोचं पिच्छं गृहस्थूणं तिरीटं मर्म योजनम् ॥
राजसूयं वाजपेयं गद्य–पद्ये कृतौ कवेः ।
माणिक्य–भाष्य–सिन्दूर–चीर–चीवर–पिञ्जरम् ॥
लोकायतं हरितालं विदलं स्थाल–बाह्लिकम् ।'इति ।

एषा व्याख्या—

उक्थेति । राजसूयमिति । लोकायतमिति च । एते उक्थादयो बाह्लिकान्ता शब्दा क्लीबे स्यु । पिच्छम् = बर्हम्, पुच्छ च । 'पिच्छ पुच्छे तु गदितम्' इति—(श० र० स० पृ० ७४ प० १५) । गृहस्थूणम् = गेहस्तम्भ, गृहस्य स्थूणा । तिरीटम् = वेष्टनम्, शिरोभूषणमिति केचित् । मर्म = सन्धिस्थानम् । योजनम् = क्रोशचतुष्टयम् । 'चतुष्क्रोश्यां तु योजनम् । परमात्मनि योगे च' इति—(श० र० स० पृ० १९७ प० १७) । राजसूयम् = यागविशेष । राज्ञा लतात्मक सोम सूयतेऽत्र राजसूयम् । वाजपेयम् = यज्ञभेद । 'वाजमन्न पैष्टी सुरा पेयमत्र वाजपेयम् । कवे कृतौ वर्तमान गद्यम् = पदसमूह, अनिबद्धवचनम् । 'गद्यमनिबद्धे वचस्यपि ।' इति—(श० र० स० पृ० २३४ प० १६) । पद्यम् = श्लोकः । 'पद्य श्लोके, पुमाञ्छूद्रे, पद्या स्याद्वर्त्मनि स्त्रियाम् ।' इति—(श० र० स० पृ० २३७ प० ११)। कवेः कृताविति किम् । गद्या = वाक् । पद्या = पद्धति । मणिक्यम् = रत्नभेद. । 'मणिके मणिपूराख्ये नगरे भवं माणिक्यम् । भाष्यम् = पदार्थविवृति । तल्लक्षण यथा—'सूत्रार्थो वर्ण्यते यत्र वाक्यै सूत्रानुकारिभि । स्वपदानि च वर्ण्यन्ते भाष्य भाष्यविदो विदु ।' इति—(अम० सु० व्या० पृ० ४५६ स्त० २ प० १६, १७) । सिन्दूरम् = रक्तचूर्णभेद. । 'सिन्दूरस्तरुभेदे, स्यात्सिन्दूर रक्तचूर्णके । सिन्दूरी रोचनीरक्तचे(वे)लि(ल्लि)का धातकीषु च ।' इति—(वि० प्र० पृ० १४१ श्लोक २०२) । चीरम् = वस्त्रभेद, गोस्तनम्, चूडा, सीसक च । 'चीर तु गोस्तने वस्त्रे चूडाया सीसकेऽपि च ।' इति—(श० र० स० पृ० २५४ पं० २) । चीवरम् = मुनिवासः, वल्कलम् ।''चीवरं वल्कले मतम् ।' इति—(श० र० स० पृ० २७० प० १८) । 'शाक्यभिक्षुप्रावरण'मिति सुभूतिश्च । पिञ्जरम् = पक्ष्यादिबन्धनागारम्, कायास्थिवृन्दम्, स्वर्णम्, पीतक च । 'पिञ्जरोऽश्वान्तरे प्रोक्त, क्लीब स्वर्ण च पीतके ।' इति—श० र० स० पृ० २७५ प० १६) । 'पिञ्जरोऽश्वान्तरे, क्लीबं स्वर्णे, पीते च वाच्यवत् ।' इति—(मे० पृ० १३६ श्लोक १८५) । क्वचित्तु 'पञ्जरम्' इति पाठः । तथा च प्रयोगः । 'यावन्मध्यं बहुधापाञ्जरन्नावगाहते' इति दमयन्ती श्लेषादकारवान् । इति—(अम० सु० व्या०

टि० पृ० ४५९ स्त० २ पं० ४२) । लोकायतम् = तर्कभेद , चार्वाकशास्त्रम्, चार्वाकदर्शनम् । हरितालम् = धातुभेद । 'हरिताल धातुभेदे, स्त्री दूर्वाऽऽकाशरेखयोः ।' इति—(मे० पृ० १५७ श्लोक १६७) । विदलम् = वशदलकृतपात्रभेद । स्थालम् = भाण्डभेद , भोजनपात्रम् । 'स्थाल भोजनपात्रेऽपि स्थाली स्यात्पाटलोखयो ।' इति—(श० र० स० पृ० ३०१ प० ५) । बाह्लिकम् = कुङ्कुमादि । "बाह्लकमिति च बाह्लवमित्यपि बहलुदेशे भव बाह्लवम्" । शे० प्राग्वत् ।

तथा च पुरुषोत्तमदेव·—(त्रि० शे० पृ० ३८८ श्लोक· ६, ७) ।

क्लीबे कलत्र–विष–बीज–कुटुम्ब–रत्न–
तल्पो–क्थ–कुङ्कुम–तृण–क्षर–काननानि ।
शृङ्गाट–पीठ–गृह[1]–भेषज–पृष्ठ–किण्व–
दैवा–ऽण्ड–भाण्ड–चिबुको–डुप–साहसानि ।।
यक्र–त्कुहक–सिध्पानि तीरं कशिपु जानु च ।
धामा–ऽर्द्ध–सार–मित्राण्य–ङ्ग–दल–न्याय–बन्धुषु ।।इति।।

अनयोर्व्याख्या—

क्लीब इति । यकृदिति च । एते कलत्रादयो मित्रान्ताः शब्दाः क्लीबे स्युः । विषम् = वत्सनाभ·, जलम्, पद्मकेशरम्, मृणालम्, गन्धरसश्च । 'विषं क्ष्वेडे जलेऽपि च । विषा त्वौषधभेदे स्यात्' इति—(श० र० स० पृ० ३३१ पं० ४) । 'विषं जले, ऽतिविषाया स्त्रियां, क्ष्वेडे तु न स्त्रियाम् ।' इति—(मे० पृ० १६७ श्लोक २५) । 'गरले विषमम्भसि च, स्त्रियामतिविषायाम्' इत्यूष्मविवेकान्मूर्धन्यान्तम् । 'पुंसि क्लीबे च' इति विषेणापि सम्बध्यते इति केचित्' इति च—(अम० सु० व्या० पृ० ९० स्तं० १ प० ३४, ३५, ३६) । इह वाग्भटे तु विशेष.—'भजते विषरूपत्व तुल्याशे मधुसर्पिषो ।' इति । रत्नम् = माणिक्यादि-प्रस्तर·, स्वस्वजातिषु श्रेष्ठम्, हीरक च । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम् ।' इति—मे० पृ० ८३ श्लोक. १७) । कुङ्कुमम् = कश्मीरदेशज स्वनामख्यात गन्धद्रव्यम् । तृणम् = अर्जुनम् । "घास" इति लोके । काननम् = वनम् । "जगल" इति लोके । पीठम् = आसनम् । 'पीठमासनम् ।' इति—(अम० ना० लि० पृ० २४९ श्लोक· १३८) । 'विष्टरः, पीठम-स्त्रियाम् ।' इति च—(त्रि० शे० पृ० २९३ श्लो० ४१) । गृहम् = इष्टकाप्रस्तरमृत्तिका-दिरचित गेहम्, भवनम् । "घर" इति लोके । कलत्र च । 'गृह गृहाश्च पुंभूम्नि कलत्रेऽपि

(१) वामनस्तु विशेषमाह—'भवनस्य रजतहान्त चार्थरणापत्यहृदयतालुपुराम् । रान्त च लनोर्द्धारुडुत-मसामव्यक्तलिङ्गोक्तौ ।। इति । पृ० ३ श्लोक ३ ।

च सद्मनि ।' इति—(मे० पृ० १७५ श्लोक ५) । 'न गृह गृहमित्याहुर्गृहिणी गृहमुच्यते। तया हि सहित सर्वान् पुरुषार्थान् समश्नुते ।' इति च—(श० चि० पृ० ८२८ स्तं० १ प० १८, १९, २०) । भेषजम् = औषधम् । 'भेषजौषधभैषज्यान्यगदो जायुरित्यपि ।' इति—(अम० ना० लिं० २१८ श्लोक ५) । दैवम् = भाग्यम्, फलोन्मुख शुभाशुभकर्म, पूर्वजन्मार्जितसदसत्कर्मविपाक· । 'प्राग्जन्मनि कृत कर्म शुभं वा यदि वाऽशुभम् । दैवशब्देन निर्दिष्टमिह जन्मनि तद्बुधै ।' इति—(श० चि० पृ० १२४७ स्त० २ प० १६, १७, १८) । । 'दैव दिष्ट भागधेय' इति—(अम० ना० लिं० पृ० ५३ श्लोक २८) 'दैवं भाग्ये च नियतौ देवसम्बन्धवत्यपि ।' इति—(श० र० स० पृ० ३१६ प० १६) । देवतीर्थं च । 'अङ्गुल्यग्रे तीर्थं दैवम्' इति—(अम० ना० लि० पृ० २६५ श्लोक ५०) । उडुपम् = प्लव , क्षुद्रनौका । 'उडुप तु प्लवेऽस्त्रियाम् । चन्द्रे पुंसि' इति—(मे० पृ० १०३ श्लोक १५) । 'चर्म्मावनद्धमुडुप प्लवकाष्ठ करण्डवत्' इति च सज्जन ' इति—(र० व० म० टी० पृ० ५ प० ७)। तथा च प्रयोग —'उडुपेनास्मि सागरम् ।' इति रघु (१।२) । यकृत् = कुक्षौ दक्षिणभागस्थ मासपिण्डम्, कालखण्डम् । "कलेजा" इति लोके । तद्वृद्धरोगश्च । 'कालखण्डयकृती तु समे इमे ॥' इति—(अम० ना० लिं० पृ० २२४ श्लोक· ६६) । 'करण्डा तु महास्नायु कालेय कालखण्डके ।' इति रभस:' इति—(अम० सु० व्या० पृ० २२५ स्त० १ प० २) । कुहकम् = कृतपापप्रतिच्छादनलक्षणा माया, इन्द्रजालमाया वा । 'कुहक स्यादिन्द्रजाले, कुहक· कपटान्विते ।' इति—(श० र० स० पृ० ११ प० ११) । सिध्मम् = रोगविशेष·, कुष्ठविकार., किलासरोग: । "सेहुवां" इति लोके । 'किलाससिध्मे' इति—(अम० ना० लि० पृ० २१९ श्लोक. ५३) । नान्तोऽपि—'सिध्मा किलासं त्वक्पुष्प सिध्मम्' इति—(अभि० स० अभि० चि० पृ० २२ श्लोक ४६७) । कशिपु = अन्नम्, वस्त्र च । 'कशिपु त्वन्नमाच्छादनं द्वयम् ।' अन्न = भोजनम् । आच्छादन = वस्त्रम् । एतद् द्वय कशिपुसंज्ञम् ।' इति—(अम० ना० लि० पृ० ४१९ श्लोक. १३०) । 'एकोक्त्या कशिपुर्भक्ताच्छादने च द्वयो पृथक् ।' इति च—(वि० प्र० पृ० १०५ श्लोक. १८) । जानु = ऊरुजघयोर्मध्यभाग·, जानूरुसन्धि. । 'जानूरुपर्वाष्ठीवदस्त्रियाम् ॥' इति—(अम० ना० लि० पृ० २२७ श्लोक· ७२) । मित्रम् = बन्धु·, बान्धव: । शेषशब्दानां व्याख्या प्रागुक्ता ।

दुर्गसिंहोऽपि क्रमरहितान्नपुंसकलिङ्गवाचकान्बहूञ्छब्दानाह—(दु० लिं० पृ० २०त २८ यावत् श्लोक. ४० त. ५७ या०) ।

शालुक—कारको—ल्मुक—चेतक—चिबुकांऽशुक—भग—लिङ्गाऽङ्गम् ।
चोचं पिच्छं बीजं भेषज—माज्यं मुकुट—मुडुपम् ॥

अस्य व्याख्या—

शालूकेति । एते शालूकादयः शब्दा क्लीबे स्यु । कारकम्=क्रियानिमित्तमात्रम् । अन्यस्तु—कारयतीति कारिका स्त्री, कारक पुमान्, कारकं कुलम् । 'कारिका यातनाया स्यान्नवयोषिति च स्मृता । कृतौ विवरणश्लोके कारिका नटयोषिति । नपुसक तु कर्मादौ कारक, कर्त्तरि त्रिषु ।' इति—(श० र० स० पृ० १० प्र० ७, ८, ९) । चेतकम्=हरीतकीफलम् । अशुकम्=वस्त्रमात्रम्, सूक्ष्मवस्त्रम्, उत्तरीय च । अशुक स्यात्सूक्ष्मवस्त्रे वस्त्रमात्रोत्तरीययो ।' इति—(श० र० स० पृ० ७ प० १२) । भगम्=ज्ञानम् । 'भग श्रीयोनिवीर्य्येच्छाज्ञानवैराग्यकीर्तिषु ।' इति—(मे० पृ० २२ श्लोक १२) । पिच्छम्=मयूरकलाप. । चूडा च । 'न द्वयोर्बर्हचूडयो· ।' इति—(मे० पृ० २९ श्लोक ४) । आज्यम्=घृतम्, तिलश्च । 'स्यादाज्य तिलसर्पिषो ।' इति—(श० र० स० पृ० २३२ प० ११) । मुकुटम्=मौलि: । 'अथ मुकुट कीरीट पुन्नपुसकम् ।' इति—(अम० ना० लिं० पृ० २३८ श्लोक: १०२) । शे० प्रा० ।

शृङ्गाट–ललाट–तिरीट–पिटानि ख–पीठ–लोष्ट–काष्ठानि ।
पृष्ठं तुण्डं काण्डा–ऽऽलीढे भाण्डा–ऽण्ड–कुण्डानि ॥

अस्य व्याख्या—

शृङ्गाटेति । एते शृङ्गाटादय: शब्दा नपुसकलिङ्गा भवन्ति । लोष्टम्=मृत्सस्थानविशेष. । 'लोष्टानि लेष्टव. पुसि' इति—(अम० ना० लि० पृ० ३०५ श्लोक: १२) । पुलिङ्गोऽप्ययम् । 'लेष्टु शण्ढे (ठे) ऽपि लोष्ट. स्यात्' इति च बोपालित·' इति–(अम० सु० व्या० पृ० ३०५ स्तं० १ प० १२, १३) । काष्ठम्—दारु । 'काष्ठा दारुहरिद्रायां कालमानप्रकर्षयो. ॥ स्थानमात्रे दिशि च स्त्री, दारुणी स्यान्नपुसकम् ।' इति—(मे० पृ० ३८, ३९ श्लोक· २, ३) । काण्डम्=सन्धिविच्छिनैकखण्डास्थि । 'काण्ड स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयो ॥ कुत्सिते, वृक्षभिन्नाडीबन्धे रहसि न स्त्रियाम् ।' इति—(मे० पृ० ४० श्लोक: २ ३) । आलीढम्=स्थानविशेष, धनुर्धराणां स्थितिभेदः । 'स्यात्प्रत्यालीढमालीढमित्यादिस्थानपञ्चकम् ।' इति—(अम० ना० लि० पृ० २९२ श्लोक ८५)। 'आलीढं पादन्यासे, शिते त्रिषु ।' इति—(मे० पृ० ४४ श्लोक: ७) । 'वितस्त्यन्तरेण स्थिते पादद्वये विशाख । रभसस्तु षट् स्थानान्याह 'वैष्णवं समपाद च वैशाख मण्डल तथा । प्रत्यालीढमथालीढं स्थानान्येतानि षड् नृणाम् ।' इति— (अम० सु० व्या० पृ० २९२ स्तं० १ प० २७, २८, २९) । कुण्डम्=भाण्डविशेष: । 'कुण्डमग्न्यालये मानभेदे देवजलाशये ।' इति– (मे०पृ०४० श्लोक: ४)। शे० प्रा० ।

प्रत्यालीढ शरणं शण–मृण च कारण–ममृत–मलातम् ।
पलितं शुक्तं नवनीतं लोकायत–मरकते च ॥

अस्य व्याख्या—

प्रत्यालीढमिति । एते प्रत्यालीढादय शब्दाः क्लीबे स्यु । प्रत्यालीढम् = धन्विना स्थानविशेष. । अमृतम् = सुधा, सुरभोज्यम्, जलम्, विषम्, घृत च । 'अमृत यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च, ना धन्वन्तरिदेवयो ।' इति—(मे० पृ० ५९ श्लोक. ७७) । अलातम् = उल्मुकम्, अर्द्धदग्धकाष्ठम् । 'अथ न स्त्री स्यादङ्गारो,ऽतालमुल्मुकम् ।' इति—(अम० ना० लि० पृ० ३११, ३१२ श्लोक ३०) । पलितम् = पक्वकेश., शैलज च । 'पलितं शैलजे तापे केशपाके च कर्दमे ।' इति—(मे० पृ० ६३ श्लोक १२३) । शुक्तम् = अम्लम्, परुषश्च । 'शुक्तं पूताम्लनिष्ठुरे ।' इति—(मे० पृ० ५८ श्लोक. ६५) । नवनीतम् = घृतकारणम्, अकृताग्निसयोगनवोद्धृतम् । 'नवनीत नवोद्धृतम् ।' इति—(अम० ना० लि० पृ० ३२१ श्लोक ५२) । मरकतम् = रत्नविशेष । "पन्ना" इति लोके । 'गारुत्मत मरकतमश्मगर्भो हरिन्मणि ।' इति—(अम० ना० लि० पृ० ३३२ श्लोकः ९२) । शे० प्रा० ।

जतु वस्तु मस्तु चित्तं पित्तं तोकं निमित्त–शव–बडिशम् ।
अस्थ्यु–क्थ–सक्थि सनिरुक्त–मङ्कदे–ङ्गद–गुद–पद–मृधम् ॥

अस्य व्याख्या—

जत्विति । एते जत्वादय. शब्दा निरुक्तेन च सह नपुसकलिङ्गा. स्युः । जतु = लाक्षानिर्यास, लाक्षा च । 'पुनर्जतु । लाक्षायाम्' इति—(श० र० स० पृ० १२६ प० १६–७) । वस्तु = पदार्थ, द्रव्यं च । 'लक्षणप्रमाणाभ्या हि वस्तुसिद्धिर्भवति' इति व्याख्यातार । इति—(श० चि० पृ० २३९ स्तं० २ प १०, ११) । मस्तु = दधिविकार, वस्त्रनिसृतदधिजलम् । दध्न उपरिभाग इत्यन्ये । 'मण्ड दधिभवं मस्तु' इति—(अम० ना० लिं० पृ० ३२१ श्लोकः ५४) । चित्तम् = मन । 'चित्त तु चेतो हृदयम्' इति—(अम० ना० लिं० पृ० ५५ श्लोक ३१) । पित्तम् = दोषविशेष, मायु । 'पित्त दोषविशेषे स्यात्' इति—(श० र० स० पृ० १२९ प० ८) । निमित्तम् = कारणम्, हेतु, लक्ष्म च । 'निमित्तं हेतुलक्ष्मणोः ।' इति—(अम० ना० लिं० पृ० ४१० श्लोक. ७६) । शवम् = मृतशरीरम्, पानीयं च । 'कुणपः शवमस्त्रियाम् ।' इति—(अम० ना० लि० पृ० ३०१ श्लोक ११८) । 'शवः स्यात्कु-

णंषे पुमान् । नपुसके तु पानीये' इति--(मे० पृ० १५९ श्लोकः २४) । बडिशम् = बलिशम्, मत्स्यबन्धनम् । अस्थि = कुल्यम् । ''हड्डी'' इति लोके । 'कीकस कुल्यमस्थि च ॥' इति—(अम० ना० लि० पृ० २२५ श्लोक. ६८) । निरुक्तम् = ग्रन्थविशेष. । अङ्गदम् = केयूरम्, प्रगण्डभूषणम् । 'अङ्गद कपिभेदे ना, केयूरे तु नपुसकम् ।' इति— (मे० पृ० ७५ श्लोक १७) । इङ्गुदम् = वृक्षविशेष , तापसतरु । ''हिंगोटा'' इति लोके । यादवस्तु द्वयोरेवेत्याह—'इङ्गुदी नषण्' इति—(वै० पृ० ५१ श्लोक ७८) । गुदम् = अपानम्, विष्ठानिर्गममार्ग । 'गुदत्वपान, पायुर्ना' इति--(अम० ना० लि० पृ० २२७ श्लोक ७३) । पदम् = स्थानम्, लक्षणम्, पादश्च । 'पद शब्दे च वाक्ये च व्यवसायापदेशयो । पादतच्चिह्नयो स्थानत्राणयोरङ्कवस्तुनोः ।' इति—(वि० प्र० पृ० ७७ श्लोक: ३) । 'श्लोकपादेऽपि क्लीब च, पुंलिङ्ग किरणे पुन ।' इति—(मे० पृ० ७ श्लोक, ८) । मृधम् = युद्धम् । 'मृधमास्कन्दन सख्यम्' इति--(अम० ना० लि० पृ० २९८ श्लोक. १०४) । शे० प्रा० ।

काकुद–मास्पद–बाल्हव–दधि–किण्व–श्राद्ध–वाजपेयानि ।
जानु–जघन–तुहिना–ऽजिन–वृजिन–पनस–मिथुन–सोपानैः ॥

अस्य व्याख्या—

काकुदमिति । एते काकुदादय शब्दा जान्वादिभि सह क्लीबे स्यु । काकुदम् = तालु । 'निश्चेष्टं ककुदं शिर ।' ककुदे भव. काकुदम् । 'तालु तु काकुदम्' इति— (अम० ना० लि० पृ० २३४ श्लोक ९१) : आस्पदम् = पदम्, प्रतिष्ठा, कृत्य च । 'प्रतिष्ठाकृत्यमास्पदम् ।' इति—(अम० ना० लि० पृ० ४१३ श्लोक: ९४) । बाल्हवम् = परिस्कारजातम् । दधि = क्षीरविकार-विशेष , सरलद्रवश्च । 'अथ सरलद्रव ॥ दधिक्षीरघृताह्व स्यात्' इति—(त्रि० शे० पृ० २९२ श्लोक ३७, ३८) । श्राद्धम् = पितृक्रिया । 'श्राद्ध तत्कर्म शास्त्रत ।' तेषा पितॄणां कर्म शास्त्र-विधानेन । इति—(अम० ना० लि० पृ० २५९ श्लोक. ३१) । यस्तु श्राद्धशब्द. अणन्त. व्युत्पाद्यते श्रद्धा अस्यास्तीति स वाच्यलिङ्ग एव । श्राद्धा स्त्री, श्राद्धो नर., श्राद्ध कुलम् । जघनम् = अवयवविशेष, स्त्रीकटया अग्रभाग । 'क्लीबे तु जघन पुर ॥' इति— (अम० ना० लिं० पृ० २२८ श्लोक ७४) । 'जघन स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि ।' इति—(मे० पृ० ८७ श्लोक ६७) । तुहिनम् = हिमम् । 'तुषारस्तुहिन हिमम् ।' इति-- (अम० ना० लिं० पृ० ३६ श्लोक १८) । अजिनम् = चर्म । ''चमडा'' इति लोके । 'अजिन चर्ममात्रेऽपि च नपुसकम् ।' इति— (श० र० स० पृ० १९० प० १८) । तथा च प्रयोग —'वसानमेणाजिनमञ्जनद्युति ।' इति माघ (१।६) । वृजिनम् = पापम्, कलुषम् । 'वृजिन कल्मषे क्लीब, केशे ना, कुटिले

त्रिषु ।' इति—(मे० पृ० ६२ श्लोक ३४) । पनसम्=फलविशेष, पनसस्य फलम् । "कटहल" इति लोके । मिथुनम्=युग्मम्, राशिभेदश्च । 'मिथुन राशिभेदे स्यात्तथा स्त्रीपसयुग्मयो. ।' इति—(श० र० स० पृ० १६७ प० १०) । सोपानम्=आरोहणविशेष, नि श्रेणि', पाषाणादिरचित सौधाद्यारोहणम् । "पैडी" इति लोके । 'स्यात्सोपान तु नि श्रेण्या, सुकुमारे (?) तु वाच्यवत् ।' इति—(श० र० स० पृ० २०१ प० १५) । 'आरोहणं च सोपान 'पैडी' इति समाह्वये । सोपाने काष्ठघटिते निःश्रेणिस्त्वधिरोहिणी ।' इति च शब्दरत्नावली' इति—(श० चि० पृ० ६०७ स्त० १, २ पं० २८, २९, ३०) । शे० प्रा० ।

द्वन्द्व–श्मशान–वेतन–ससैन्य–चिह्न–प्रधान–धान्यानि ।
हर्म्यं शष्पं पापं त्रिविष्टपं त्रपु–समीपा–ऽभ्रम् ॥

अस्य व्याख्या—

द्वन्द्वेति । सह सैन्येन वर्तत इति ससैन्यम् । ससैन्य च तच्चिह्न चेति । एते द्वन्द्वादयः शब्दाः क्लीबे स्यु' । द्वन्द्वम्=युगलम्, रहस्य, युद्ध च । 'द्वन्द्व रहस्ये कलहे तथा मिथुन-युग्मयो ।' इति—(मे० पृ० १५८ श्लोक १०) । श्मशानम्=शवयानम्, पितृवनम् । 'श्मशान स्यात्पितृवनम्' इति—(वै० पृ० ३९ श्लोक ४८) । वेतनम्=भृतिमूल्यम्, मूल्यम् । "मासिक तनख्वाह" इति च लोके । 'कर्मण्या तु विधा भृत्याभृतयो भर्म वेतनम् ।' इति—(अम० ना० लिं० पृ० ३५० श्लोक' ३८) । सैन्यम्=सेना, बलम् । 'सैन्य क्लीब बले, सेनासमवेते तु वाच्यवत् ।' इति—(मे० पृ० ११७ श्लोकः ६४) । चिह्नम्=लिङ्गम्, पताका च । 'अथ चिह्न लक्ष्मपताकयो' ।' इति—(मे० पृ० ८३ श्लोक' ४) । प्रधानम्=श्रेष्ठम्, प्रकृति, गुणसाम्यावस्था च । 'प्रधानं स्यात्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायामपि च क्लीबम्' इति—(मे० पृ० ८८ श्लोक. ८५) धान्यम्=व्रीहि', धन्याक च । 'धान्यं व्रीहिषु धन्याके' इति—(मे० पृ० १५५ श्लोकः ३३) । हर्म्यम्=प्रासादः, धनिनां वास' । 'सौधो-ऽस्त्री सुधया श्वेत मेटो हर्म्यं च मालिका । तदेव राजदेवाना स्यात्प्रासाद. प्रसादनम् ।' इति—(वै० पृ० १६१ श्लोकः २९) । शष्पम्=बालतृणम् । 'अथ शष्प बालतृणे स्मृतम् ।' इति—(मे० पृ० १०२ श्लोक' ११) । पापम्=अशुभम्, दुष्कृतम् । 'पाप किल्बिषकल्मषम् ।' इति—(अम० ना० लिं० पृ० ५१ श्लोकः २३) । त्रपु=सीसम् । "सीसो" इति लोके । रङ्ग च । "राँग" इति लोके । 'त्रपु पिच्चटम् ॥ रङ्ग वङ्गे' इति—(अम० ना० लिं० पृ० ३३७ श्लोकः १०५–६) । । रुद्रस्तु पुसीत्याह–रङ्गसीसकयोस्त्रपु' ।' इति च—(अम० सु० व्या० पृ० ३३७ स्तं० १ पं० ४२) । समीपम्=निकटम् । 'समीपे निकटा-

सन्नेसन्निकृष्टसनीडवत् ॥' इति—(अम० ना० लि० पृ० १७१ श्लोक ६६)। शे० प्रा०।

शिल्पं तल्पं रूपं तथा—ऽन्तरीपं शफं च कुप्यं च।
कुङ्कुम—कुटुम्ब—कलभे—ध्म—सिध्म—युग्मे—न्द्रियैः सस्यम् ॥

अस्य व्याख्या—

शिल्पमिति। कुङ्कुमादिभि सह सस्य शिल्पादयश्चैते नपुसकलिङ्गा भवन्ति। शिल्पम् = क्रियाकौशलम्, कलाकौशल्यादिकर्म। 'शिल्प कर्म कलादिकम्।' इति—(अम० ना० लिं० पृ० ३४९ श्लोक. ३५)। कला नृत्यगीतादिरूपा चतुषष्टिभेदभिन्ना। 'शिल्प स्रुवे क्रियादिके।' इति च—(वि० प्र० पृ० १०४ श्लोक १०)। तल्पम् = शयनम्, अट्टः दाराश्च। 'तल्प शय्याट्टदारेषु' इति—(अम० ना० लि० पृ० ४१९ श्लोकः १३१) 'अस्त्रि-याम्' इति कशिपुतल्पाभ्यां सम्बध्यते। अट्टोऽट्टालिका। शफम् = खुरः, तरुमूलं च। 'शफ मूले तरूणां स्याद् गवादीना खुरेऽपि च।' इति—(मे० पृ० १०४ श्लोक० ३)। कुप्यम् = असारद्रव्यम्, रूप्यसुवर्णाभ्यामन्यत्। 'ताभ्या (हेमरूप्याभ्याम्) यदन्यत्तत्कुप्यम्' इति—(अम० ना० लि० पृ० ३३२ श्लोक ९१)। कलभम् = करिपोत.। अमरस्तु पुस्त्वमाह— 'कलभः करि-शावकः।' इति—(अम० ना० लिं० पृ० २७६ श्लोक. ३५)। इध्मम् = काष्ठम्। 'इन्धनं त्वेध इध्ममेधः, समित्स्त्रियाम्।' इति—(अम० ना० लि० पृ० १३२ श्लोकः १३)। सस्यम् = धान्यादि, क्षेत्रगतव्रीह्यादि। 'सस्य क्षेत्रगत प्राहु, सतुष धान्यमुच्यते। आमं वितुषमित्युक्त स्विन्नमन्नमुदाहृतम्।' इति वसिष्ठ' इति—(श० चिं० पृ० १०१ स्तं० २ प० ११ त.)। वृक्षादिफलं च। 'वृक्षादीनां फल सस्यम्' इति—(अम० ना० लि० पृ० १३३ श्लोक. १५)। सस्यं दन्त्यादि। 'ग्राम्यकविकथाबन्ध इव नारसस्य मनोहरआर्यावर्त.' इति च दमयन्तीश्लेष.' इति—(अम० सु० व्या० टि० पृ० १३३ स्तं० १ प० ४१, ४२)। 'शस्य' मित्यपि शे० प्रा०।

शिक्यं हृदयं मद्यं भय—सत्या—ऽपत्य—राजसूयानि।
धिष्ण्यं पण्यं मूल्यं कार्यं वीर्य्यं किसलयं दम् ॥

अस्य व्याख्या—

शिक्यमिति। एते शिक्यादयः शब्दा नपुसकलिङ्गा भवन्ति। शिक्यम् = उद्ग्रहणं भारयष्टिर्वा। 'तदालम्बि (भारयष्ट्यालम्बि) शिक्यं काच.' इति— (अम० ना० लिं० पृ०

३४७ श्लोक ३०)। ''छीका'' इति लोके। हृदयम् = उर, हृत्, हृदयकमलम्, मनश्च। 'हृदय मानसे बुक्वोरसोरपि नपुसकम्।' इति—(मे० पृ० १२१ श्लोक ११५)। मद्यम् = मदिरा। 'मद्यं त्वरिष्टं मैरेय कत्तोय कापिशायनम्।' इति—(त्रि० शे० पृ० ३०६ श्लोक १५)। भयम् = भीति, भी, त्रास, कुब्जपुष्प च। 'भय भीकुब्जपुष्पयो।' इति—(त्रि० शे० पृ० ३६० श्लोक ३१८)। सत्यम् = तथ्यम्, शपथ, कृतयुग च। 'सत्य कृते च शपथे तथ्ये, त्रिषु तु तद्वति।' इति— (मे० पृ० ११७ श्लोक ६१)। अपत्यम् = पुत्रपुत्र्यौ। 'अपत्य पुत्रयोर्मतम्।' इति—(मे० पृ० ११८ श्लोक ७०)। धिष्ण्यम् = नक्षत्रम्, स्थानम्, शक्ति, अग्नि, गृह च। 'धिष्ण्य स्थानाग्निसद्मसु। शक्तावृक्षेऽपि' इति-(मे० पृ० ११५ श्लोक ३३)। 'गेहस्थानोडुवह्नय.।' इति—(दु० लि० वि० पृ० २३ प० ५)। पण्यम् = विक्रेयम्, विक्रय-क्रियाकर्म। 'विक्रेय पणितव्य च पण्य, क्रय्यादयस्त्रिषु।' इति—(अम० ना० लि० पृ० ३२९ श्लोक ८२)। मूल्यम् = वसुपरिमाणम्, वस्न, अवक्रय, वेतन च। 'मूल्य स्याद्वेतने वस्ने' इति—(मे० पृ० ११६ श्लोक ४६)। कार्यम् = कृत्यम्, कत्तर्व्यम्, प्रयोजनम्, हेतुश्च। 'कार्यं कृत्ये प्रयोजने।' इति—(मे० पृ० ११३ श्लोक १०)। वीर्य्यम् = शक्ति, प्रधानधातुश्च। 'वीर्य्यं प्रधानधातौ च' इति—(त्रि० शे० पृ० ३६० श्लोक ३१८)। शे० प्रा०।

शिशिराऽम्बरीष–पुष्कर–गह्वर–केयूर–मुदर–दुःखाऽग्रम्।
चामर—मक्षर—मन्तर—मश्रु—द्वार तथा—ऽगारम् ॥

अस्य व्याख्या—

शिशिरेति-एते शिशिरादय शब्दा क्लीबे स्यु। शिशिरम् = ऋतुविशेष। 'शिशिरो ना हिमे, न स्त्री ऋतुभेदे, जडे त्रिषु।' इति—(मे० पृ० १३९ श्लोक २२७)। अम्ब-रीषम् = भ्राष्ट्रम्। ''भाटी'' ''भट्टी'' इति च लोके। रण च। 'अम्बरीष रणे भ्राष्ट्रे क्लीब, पुसि नृपान्तरे।' इति—(मे० पृ० १६९ श्लोक ४८)। गह्वरम्—गहनम्, गुहा च। 'अथ गह्वरम्। गुहागहनदम्भेषु, निकुञ्जे तु पुमानयम्।' केयूरम् = बाहुभूषणविशेष., प्रगण्ड-भूषणम्। 'केयूरमङ्गदं तुल्ये' इति—(अम० ना० लि० पृ० २३९ श्लोक १०७)। उदरम् जठरम्। 'जठरे तूदर मतम्।' इति— (श० र० स० पृ० २६६ प० १)। दुःखम् = पीडा, कष्टम्। 'पीडा बाधा व्यथा दुःखम्' इति—(अम० ना० लि पृ० ६२ श्लोकः ३)। 'आबाधा वेदना दुःखम्' इति हलायुध' इति—(अम० सु० व्या० पृ० ६२ स्तं० १ पं० १८, १९)। अग्रम् = प्रान्तम्। 'प्रान्ते च स्यान्नपसकम्।' इति—(मे० पृ० १२३ श्लोकः ३)। श्रेष्ठवृत्तेस्तु वाच्यलिङ्गता—इयमग्रा, अयमग्र, इदमग्रम्। अन्तरम् = मध्यम्। 'अन्तरम-

ऽवकाशावधिपरिधानान्ततद्धि भेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्यात्मसदृशेषु ।' इति—(मे० पृ० १३० श्लोक १०६) । यस्तु अन्तरशब्दः बहिर्योगादौ तस्य सर्वनामत्वात् वाच्यलिङ्गता—अन्तरा शाटी, अन्तरः पटः, अन्तर वस्त्रम् । अश्रु = बाष्पम्, नेत्रोदकम् । 'अस्तु नेत्राम्बु रोदनं चास्रमश्रु च ॥' इति—(अम० ना० लिं० पृ० २३५ श्लोकः ९३) । द्वारम् = गृहमुखम्, निर्गमनम्, अभ्युपायश्च । 'द्वार निर्गमनेऽपि स्यादभ्युपाये' इति—(मे० पृ० १२६ श्लोकः ४८) । शे० प्रा० ।

कुड्यं स्फारं तक्रं क्षिप्रं क्षुद्र–सकुकुन्दर–कुटीरम् ।
पञ्जर–करीर–चीवर–चीरं पीयूष–तीरे च ॥

अस्य व्याख्या—

कुड्यमिति । सह कुकुन्दरेण वर्त्तत इति सकुकुन्दरम् । सकुकुन्दरं च तत्कुटीरं चेति कर्मधारय । क्षुद्र च सकुकुन्दरकुटीर चेति समाहारो द्वन्द्व. । एते कुड्यादयः शब्दा नपुंसकलिङ्गाः स्यु. । कुड्यम् = भित्ति., विलेपनम्, कौतूहल च । 'कुड्य स्यात्तु नपुसकम् । विलेपने च भित्तौ च तथा कौतूहलेऽपि च ।' इति—(मे० पृ० ११३ श्लोक १३) । तक्रम् = मथितम्, चतुर्थांशजलघोलम् । ''मठ्ठा'' ''छाछ'' इति च लोके । 'तक्रं ह्युदश्विन्मथित पादाम्ब्वर्द्धाम्बु निर्जलम् ।' इति—(अम० ना० लिं० पृ० ३२१ श्लोकः ५३) । क्षिप्रम् = द्रुतम्, शीघ्रम् । 'लघु क्षिप्रमर द्रुतम् ॥' इति—(अम० ना० लिं० पृ० २७ श्लोकः ६४) । क्षुद्रम् = अल्पम् । अधमादौ वाच्यलिङ्गत्वेव । क्षुद्र. अधमः, क्रूरश्च । क्षुद्रा नटी, वेश्या, मधुमक्षिका च । क्रूराधमयोस्त्वाश्रयलिङ्गता । मेदिनिकारस्तु वाच्यलिङ्गतामाह—'क्षुद्र स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् ।' इति—(मे० पृ० १२४ श्लोक० १७) । कुटीरम् = ह्रस्वकुटी, जघनं च । 'कुटिर'मित्यपि । 'कुटीरं कुटिरं तथा ।' इति—(द्विरूपको० पृ० ४१२ श्लोकः ३१) । 'कुटीर केवले रते ।' इति—(अने० सं० पृ० ९३ श्लोकः ५७६) । यादवस्तु पुंस्त्वमाह—'कुटीरस्तु कुटी पल्ली' इति—(वै० पृ० १६१ श्लोक २७) । पञ्जरम् = काष्ठादिरचनाविशेषः । करीरम् = वंशाङ्कुरः । 'वंशाङ्कुरे करीरोऽस्त्री, वृक्षभिद्घटयोः पुमान् ।' इति—(मे० पृ० १३१ श्लोकः १२५) । शे० प्रा० ।

अस्रा–ऽस्रु श्मश्रु कसेरु जत्रु तुम्बरुच शुक्र–मभृगुसुते ।
अघ–मुत्तरीय–मृक्ष–मुडा–वक्षं चे–न्द्रिये यवसम् ॥

अस्य व्याख्या—

अस्रेति । अभृगुसुते शुक्रग्रहवर्जिते शुक्रम्, उडौ ऋक्षम्, इन्द्रिये अक्षम्, अस्रादयः

शब्दाश्चैते नपुंसकलिङ्गा भवन्ति । अस्रम्=अश्रु, शोणित च । 'अस्र. कोणे कचे पुंसि, क्लीबमश्रुणि शोणिते ।' इति—(मे० पृ० १२३ श्लोक: ५) । अस्रु=बाष्पम्, नेत्राम्बु । 'रोदन चास्रुमश्रु च ।' इति--(अम० ना० लि० पृ० २३५ श्लोक ९३) । श्मश्रु=मुखरोमाणि । 'तद्वृद्धौ (रोमवृद्धौ) श्मश्रु पुमुखे ।' इति—(अम० ना० लि० पृ० २३७ श्लोक. ९९) । जत्रु=ग्रीवासन्धि. । "हसुली" इति लोके । असकक्षयो सन्धिः । "सन्धी तस्यैव (स्कन्धस्य) जत्रुणी ॥' इति--(अम० ना० लि० पृ० २२९ श्लोक. ७८) । शुक्रम्=रेत:, अक्षिरुक् च । 'रेतोऽक्षिरुग्भिदो क्लीबम्' इति—(मे० पृ० १२९ श्लोक. ८३) । 'अभृगुसुते' इति किम् ? शुक्र =भार्गव । अघम्=पापम्, दु ख च । अघ तु व्यसने दु खे दुरिते च नपुसकम् ।' इति—(मे० पृ० २६ श्लोक १) । उत्तरीयम्=उपरिवासः । "अँगोछा" "दुपट्टा" "चादर" इति वा लोके । 'सव्यानमुत्तरीय च' इति--(अम० ना० लिं० पृ० २४३ श्लोक: ११८) । ऋक्षम्=नक्षत्रम् । 'नक्षत्रे पुन्नपुसकम् ।' इति--(मे० पृ० १६६ श्लोक: ६) । भल्लूकवचनस्य स्त्रीपुस्त्वं चतुष्पदजातित्वात् । ऋक्षी, ऋक्षः । शे० प्रा०

बिस–साहस–बर्हा–ऽहः–किल्बिष–कल्मष–पुरीष–तूर्याणि ।
शकृता यकृता पृषता जगता चो–दश्चिता शीर्षम् ॥

अस्य व्याख्या—

बिसेति । शकृता, यकृता, पृषता, जगता, उदश्विता, सह शीर्षम्, बिसादयः शब्दाश्चैते नपुसकलिङ्गा भवन्ति । साहसम्=अनालोचितकरणम्, बलात्कारकृतकार्यम् । दमश्च= 'साहस तु बलातकारकृतकार्य्ये दमेऽपि च ।' इति–(श० र० स० पृ० ३३८ प० १०) । बर्हम्= मयूरकलाप, दल च । 'बर्ह पिच्छे, दलेऽस्त्रियाम् ।' इति—(मे० पृ० १७५ श्लोक: ६) । अहः =दिनम्, वासरः । 'घस्रो दिनाऽह्नी, वा तु क्लीबे दिवसवासरौ ।' इति—(अम० ना० लिं० पृ० ४४ श्लोक: २) । कल्मषम्=पापम् । 'पापं किल्बिषकल्मषम् ।' इति—(अम० ना० लिं० पृ० ५१ श्लोक: २३) । 'कल्मषं किल्बिषे क्लीब, पुसि स्यान्नरकान्तरे ।' इति च—(मे० पृ० १६७ श्लोक: ३३) । पुरीषम्=विष्ठा । "टट्टी" "मैला" इति च लोके । 'गूथं पुरीषं वर्चस्कमस्त्री, विष्ठाविषौ स्त्रियौ ।' इति—(अम० ना० लि० पृ० २२५ श्लोक: ६८) । तूर्य्यम्= वाद्यविशेषः । 'तूर्य्योऽस्त्री, वाद्यनिर्घोषे' इति— (वै० पृ० १४७ श्लोक: १३६) । शकृत्= विष्ठा । 'उच्चारावस्करौ शमलं शकृत् ॥' इति—(अम० ना० लिं० पृ० २२५ श्लोक: ६८) । उदश्वित्=अर्द्धजलघोलम् । "मट्ठा" "छाछ" इति च लोके । 'तक्रं ह्युदश्विन्मथितं पादाम्बवर्द्धाम्बुनिर्जलम् ॥' इति—(अम० ना० लिं० पृ० ३२१ श्लोक: ५३) । शे० प्रा० ।

द्विस्वर–मसन्न–मि–सुसन्तं त्रान्तं यच्छतादिका संख्या ।
द्विस्वर–मन्नन्त–मनान्त–मकर्त्तरि कव्य–काव्ये च ॥

अस्य व्याख्या—

द्विस्वरमिति । एते द्विस्वरादय काव्यान्ता शब्दा क्लीबलिङ्गा स्यु । द्वौ स्वरौ यस्य तद् द्विस्वरम् । अस् अन्ते यस्य तद् असन्तम् । इस् च उस् च इसुसौ तौ अन्ते यस्य तद् इसुसन्तम् । त्रोऽन्ते यस्य तत् त्रान्तम् । शतमादिर्यस्या सा शतादिका सख्या । द्वौ स्वरौ यस्य तद् द्विस्वरम् । मन् अन्ते यस्य तद् मन्नन्तम् । द्विस्वर च तद् मन्नन्तं चेति कर्मधारय । "ङणना ह्रस्वोपधाः स्वरे द्विः" इति तस्य द्वित्वम् । अनोऽन्ते यस्य तद् अनान्तम् । अकर्त्तरीति कर्त्तुरन्यस्मिन् कारके कर्मादौ य. अन. विहित इत्यर्थ. । भाववाचिनस्तु "कृद्भावः" इति वक्ष्यति। प्रसज्यप्रतिषेधेऽप्यदोष एव । तल्लक्षणमाह विश्वनाथः—'अप्राधान्य विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ।' इति—(श० चि० पृ० २९० स्त० १ प० १२, १३) । प्रसज्यप्रतिषेध = निषेधान्तरम् । कव्यं च काव्य च कव्यकाव्ये । द्विस्वरमसन्त यथा—पयः=दुग्धम्, जलं च । 'पयः क्षीरं, पयोऽम्बु च ।' इति—(अम० ना० लि० पृ० ४३९ श्लोक २३३) । वयः=अवस्था, बाल्यादि, पक्षी, यौवनं च । 'वय. पक्षिणि बाल्यादौ यौवने च नपुंसकम् ।' इति—(मे० पृ० १७२ श्लोकः ३५) । यश.=कीर्तिः । "प्रसिद्धी" "बड़ाई" इति च लोके । इसन्तं यथा—वर्हिः=कुशम् । 'वर्हिः पुंसि हुताशने । न स्त्री कुशे' इति—(मे० पृ० १७२ श्लोकः ३६) । अर्चिः=ज्वाला, भाश्च । 'ज्वालाभासोर्न पुंस्यर्चिः' इति—(अम० ना० लि० पृ० ४३८ श्लोकः २३०) 'अथार्चिर्मयूखशिखयोर्न ना ।' इति—(मे० पृ० १७१ श्लोकः १५) । उसन्तं यथा—अरुः=मर्म, व्रण., क्षत च । 'व्रणोऽस्त्रियामीर्मारु क्लीबे' इति—(अम० ना० लि० पृ० २२० श्लोकः ५४) । इति । शतादिका संख्या यथा—शतम्, सहस्रम्, अयुतम्, नियुतम्, अर्बुदम्, न्यर्बुदम् । इति । द्विस्वरमन्नन्तं यथा—भस्म=भूतिः, भसितम् । "राख" "खाक" इति च लोके । 'भूतिर्भसितभस्मनी ।' इति—(अम० पु० पृ० १३ प० १) । जन्म=जननम्, उत्पत्तिः । 'जनुर्जननजन्मानि' इति—(अम० ना० लि० पृ० ५४ श्लोक ३०) । 'जन्मशब्दोऽदन्तः पुंलिग. । क्लीबोऽपि' इत्युज्ज्वलदत्तः । अनान्तं यथा—पीयते इति पानम्=मदस्थानम्, पीति, भाजनम्, रक्षणं च । 'शुण्डा पानं मदस्थानम्' इति—(अम० ना० लिं० पृ० ३५१ श्लोक ४०) । 'पानं पीतिभाजनरक्षणे ।' इति—(मे० पृ० ८३ श्लोक १३) । भक्ष्यते इति भक्षणम्=द्रवेतरद्रव्यस्य गलाधः करणम्, न्याद., खदनम्, खादनम् । "भखना" "खाना" इति च लोके । 'जक्षा खादनभक्षणे ।' इति—(वै० पृ० १६७ श्लोक. १०४) । 'अथ भक्षणम् ।

उपदंशोऽपदंशश्च मधुवारा मधुक्रया ।' इति च--(वै० पृ० १४० श्लोक. ५२) । तथा च प्रयोगः--'शणशाक वृथा मास, करेण क्वथित दधि । तर्जन्या दन्तधावश्च सद्यो गोमांस-भक्षणम् ।' इति··· इति--(श० चि० पृ० ४०० स्त० १ प० २७-८-९) । यात्यनेन इति यानम् = वाहनम्, गतिश्च । 'यान स्याद्वाहने गतौ ।' इति--(मे० पृ० ८३ श्लोक १६) । सम्यक् प्रदीयते यस्मै तत् सम्प्रदानम् = दानपात्रम्, चतुर्थीकारकम्, त्यागोद्देश्य च । अपादीयते यस्मात् तत् अपादानम् = विश्लेषोऽवधिभूत, पञ्चमीकारकम्, यस्माद्वस्तुनो वस्त्वन्तरस्य चलन भवति तत् । नीयतेऽस्मिन् इति नयनम् = नेत्रम्, चक्षु, लोचनम्, प्रापणं च । 'लोचन नयनं नेत्रम्' इति--(अम० ना० लि० पृ० २३५ श्लोक ९३) । वृश्च्यते इति व्रश्चन = कुठार । "इध्म वृश्च्यतेऽनया अनेन वा इध्मव्रश्चनी स्त्री, इध्मव्रश्चन· पुमान्, पलाशानि शात्यन्ते अनया अनेन वा पलाशशातनी यष्टि, पलाशशातनो दण्ड, पूर्यतेऽनया अनेन वा पूरणी घटी, पूरणो घट; गात्रो दुह्यन्तेऽस्यां अस्मिन् वा गोदोहनी घटी, गोदोहनो घट. ।" इति । टानुबन्ध-लिङ्गात् सर्वविश्यत्वमस्य प्रयोगानुसारेण । अकर्त्तरीति कर्तृविषयस्य वाच्यलिङ्गतैव—शृणो-तीति शर्मी स्त्री, शर्मा पुमान्, शर्म नपुसकम् । नन्दयतीति नन्दना स्त्री, नन्दन· पुमान्, नन्दनम् = कुलम् । कव्यम् = पितृतर्पणम्, पित्रन्नम् । 'हव्यकव्ये दैवपैत्रे अन्ने' इति—(अम० ना० लिं० पृ० २५७ श्लोक. २४) । काव्यम् = गद्यग्रन्थ, पद्यग्रन्थश्च । 'काव्यं ग्रन्थे, पुमाञ्-शुक्रे, काव्या स्यात्पूतनाधियो. ।' इति--(मे० पृ० ११३ श्लोक० ११) । शेषं प्राग्वत् ।

धन–वदन–धनू–रक्ता–ऽन्न–रण–विवर–नयन–मांस–नामानि ।
जल––हल––जलकुसुम––विप––त्पत्तन–वन–लोह–पर्णाख्यैः ।

अस्य व्याख्या—

धनेति । धनादीनां नामानि जलादीना नामभि. सह क्लीबलिङ्गानि स्युः । वदनम् = मुखम् । 'वक्त्रास्ये वदनं तुण्डमानन लपन मुखम् ।' इति—(अम० ना० लिं० पृ० २३३, श्लोक: ८९) रक्तम् = रुधिरम् । "खून" इति लोके । 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणि-तम् ।' इति—(अम० ना० लिं० पृ० २२३ श्लोक· ६४) । रणम् = युद्धम् । 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥ मृधमास्कन्दन संख्यं समीकं सम्परायकम् । अस्त्रिया समरानी-करणा. कलहविग्रहौ ॥' इति—(अम० ना० लि० पृ० २९८ श्लोक १०३, १०४) । विवरम् = छिद्रम् । 'अथ कुहर शुषिरं विवर बिलम् ॥ छिद्र निर्व्यथन रोक रन्ध्र श्वभ्र वपा शुषिः ।' इति—(अम० ना० लि० पृ० ८६ श्लोक १, २) । जलकुसुमम् = कमलम् । 'सहस्रपत्रं कमल शतपत्रं कुशेशयम् । पङ्केरुह तामरस सारस सरसीरुहम् ॥' इति—(अम०

ना० लि० पृ० १०७ श्लोक ४०) । वियत्=आकाश । 'वियद्विष्णुपद वा तु पुंस्याकाश-विहायसी ।' इति—(अम० ना० लि० पृ० २९ श्लोक २) । पत्तनम्=नगरम्, अधिष्ठानम् । 'पू: स्त्री, पुरीनगर्यौ वा, पत्तन पुटभेदनम् । स्थानीय निगम.' इति—(अम० ना० लि० पृ० १९६ श्लोक १) । 'पट्टन'मित्यपि । 'पट्टन पुटभेदनम् ।' इति वाचस्पति' इति—(अम० सु० व्या० पृ० ११६ स्त० २ प० १४) । वनम्=अरण्यम् । "जगल" इति लोके । 'अटव्यरण्य विपिन गहन कानन वनम् ।' इति—(अम० ना० लि० पृ० १२७ श्लोक १) । लोहशब्देन सर्व कसादिक गृह्यते । लोहम्=कालायसम्, अय । 'लोहोऽस्त्री, शस्त्रक तीक्ष्ण पिण्ड कालायसायसी । अश्मसार' इति—(अम० ना० लि० पृ० ३३४ श्लोक ९८) । कसम्=ताम्ररङ्गमिश्रितधातुविशेष , कास्यम् । "कासा" "कांसी" इति च लोके । रूप्यम्=रजतम् । "चाँदी" इति लोके । स्वर्णम्=सुवर्णम्, कनकम्, चामीकरम्, रुक्मम् । "सोना" इति लोके । कलधौतम्=हेमरूप्य । 'कलधौत रूप्यहेम्नो' इति—(अम० ना० लि० पृ० ४१० श्लोक: ७६) । 'कलधौत सुवर्णे स्याद्रजते च नपुंसकम् ।' इति—(मे० पृ० ६८ श्लोक: १९४) । ताम्रम्=शुल्बम् । "ताँबा" इति लोके । 'अथ ताम्रकम् । शुल्ब म्लेच्छमुखं ह्यष्ट-वरिष्टोन्दुम्बराणि च ॥' इति—(अम० ना० लि० पृ० ३३४ श्लोक: ९७) । सीसम्=नागम्, सीसकम् । "सीसा" इति लोके । 'नागसीसकयोगेष्टवप्राणि' इति—(अम० ना० लि० पृ० ३३७ श्लोक: १०५) । रङ्गम्=वङ्गम् । "राँगा" इति लोके । 'त्रपु पिच्चटम् ॥ रङ्गवङ्गे' इति—(अम० ना० लि० पृ० ३३७ श्लोक. १०५-६) । पर्णम्=पत्रम्, पलाशम् । "पत्ता" इति लोके । 'पत्र पलाशं छदनं दलं पर्णं, छद: पुमान् ।' इति—(अम० ना० लि० पृ० १३२ श्लोक. १४) । संग्राम:=आहव । अलन्तत्वात् पुलिङ्गता पूर्वविधिप्रतिषेधो न । शेषं प्रागवत् ।

फल[1]-लोपध-कृ-द्रावे समूह-भाव-क्रियासु यश्चा-ऽन्यः ।
प्रातिपदिका-ऽजिर-सुख-वट-करोट-भ-वृन्द-कृच्छ्राणि ॥

अस्य व्याख्या—

फलेति । फलमित्यर्थस्य ग्रहणम् । फलशब्दस्य नपुसकत्वात् । ल उपधा यस्य स लोपधः । फलं च लोपधश्च कृच्चेति समाहारो द्वन्द्व । भावे य कृदिति भावशब्द कृतैव सम्बध्यते । फल-लोपधाभ्यां अर्थस्य अघटमात् । स च तव्यादिर्यपर्यन्तः । "आद्भ्यो ण्वदरिद्राते" "शासुयुधि-

(१) पाणिनीयेऽपि—(फलजातिः) ॥ फलजातिवाची शब्दो नपुसक स्यात् । आमलक्या. फलम्=आमलकम् । आम्रस्य फलम्=आम्रम् ॥ सि० कौ० पृ० ४०३ सू० १६३ ।

दृशिधृषिमृषा वा" (कातन्त्र० ४५ १०४,१०५) इति स कृदव्ययो भाववत् प्रकाशते। इति अस्य ग्रहण न। समूहश्च भावश्च क्रिया च तासु यो विहितोऽन्यस्तद्धित इत्यर्थः। एते, प्रातिपदिकादयश्च नपुंसकलिङ्गा भवन्ति। फलवाचिनो यथा–बदर्य्या फलं बदरम्=कर्कन्धूफलम्। "बेर" इति लोके। 'कोलं कुवलफेनिले ॥ सौवीर बदरं घोण्टापि' इति—(अम० ना० लि० पृ० १४१ श्लोकः ३६-७)। नालिकेरम्=नारिकेलफलम्। "नारियल" इति लोके। खर्जूरम्=खर्जूरफलम्। 'खर्जूर रूप्यफलयो·, खर्जूर कीटवृक्षयोः।' इति—(अने० स० पृ० ६४ श्लोकः ५८२)। लोपधं यथा—कुलम्=गोत्रम्, सजातीयगण, तनुश्च। 'कुल जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीब, कण्टकार्य्योषधौ कुली।' इति--(मे० पृ० १४५ श्लोक. ९)। बलम्=सैन्यम्, सामर्थ्यम्, स्थौल्य च। 'बल गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययो। बलो हलायुधे दैत्यभेदे बलिनि वायसे।' इति—(मे० पृ० १४७ श्लोक· ३७)। तालु= काकुदम्। "तालू" इति लोके। 'तालु तु काकुदम्।' इति--(अम० ना० लि० पृ० २३४ श्लोकः ९१)। भावे कृद् यथा—समन्तात् कटो वर्त्तते, समन्तात् रावो वर्त्तते। "अभिविधौ भावे इनुण्।" योऽप्यण् तदन्तात् विहित· सोऽपि स्वार्थिकतया तल्लिङ्ग न जहाति। प्रातिपदिकम् शब्दविशेष संज्ञा। 'अर्थवदधातुरप्रत्यय प्रातिपदिकम्', 'कृत्तद्धित समासा'श्चेति सूत्राभ्यां लक्षितं नाम। "प्रतिपदिभवम्"। ठक्प्रत्ययः। अर्थवदित्यस्य सूत्रस्यान्तरालापिकाज्ञानाय केनचित्प्रश्नः कृत.। 'धीर. कीदृग् वचो ब्रूते, को रोगी, कश्च नास्तिक.। कीदृक् चन्द्रं न पश्यन्ति तत्सूत्रं पाणिनेर्वद।' इति—(श० चि० पृ० ३१० स्त० २ पं० २३, २४, २५)। वटम्=अपूपविशेष·। भम्=नक्षत्रम्। 'भं नक्षत्रे, गभस्तौ स्त्री, पुसि स्याद् भृगुनन्दने। भवने च तथा भः स्याद् भ्रमरो भ. प्रकीर्तित·।' इत्येकाक्षर' इति--(अम० सु० व्या० पृ० ३७ स्तं० २ पं० १७,१८)। कृच्छ्रम्=कष्टम्, पापम्, सान्तपन च। 'कृच्छ्रमहसि। कष्टे सान्तपने' इति—(अने० स० पृ० ३४ श्लोक. ४१७)। अहसि पापे यथा—'कृत्स्नानि कृच्छ्राणि रविर्लुनातु।' इत्यनेकार्थकैरवाकरकौमुदी' इति-- (अम० सु० व्या० टि० पृ० ९२ स्तं० १ प० ४०)। ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु आकारान्तेभ्यो युर्भवति। अदरिद्राते·। ईषत्पान =किञ्चित्पान·, खड्गादे. सस्कार विशेषः। "थोड़ी पाण" इति लोके। ईषच्छासनः, ईषच्छासो वा= अल्पशासनः, अल्पशासयिता। इति। शे० प्रा०।

षष्ठ्यान्ता–त्संज्ञायां कन्था चो–शीनरेषु तत्पुरुषे।
आदा–वुपक्रमो–पज्ञे–स्वाम्यर्था–त्सभा–ऽराज्ञः ॥

अस्य व्याख्या—

षष्ठ्यन्तादिति। षष्ठ्यन्तात्परा कन्था तत्पुरुषे समासे उशीनरदेशे संज्ञायां विषये

नपुसकलिङ्गे भवति । उपक्रमश्च उपज्ञा च उपक्रमोपज्ञे । गमकत्वाद् अल्पस्वरस्य परनिपातः । षष्ठ्यन्तात्पर उपक्रम उपज्ञा च तयोरादित्वे गम्यमाने तत्पुरुषे नपुसकलिङ्गे भवत । स्वाम्यर्थात्षष्ठ्यन्तात् राजवर्जितात् परा सभा तत्पुरुषे नपुंसकलिङ्ग इति । स्वामिसभम् = स्वामिना सभा (तद्गृह तत्सघो वा) । अराज्ञ इति किम्? राजसभा । (कथ 'नृपतिसभामगमत्' इति तु बाहुलकात्), नृपतिसभा = नृपतौ सभा । सप्तम्यन्तात् सभा । इति । शे० प्रा० ।

अमनुष्या–त्सभा–ऽशाला सेना–शाला–निशा वा स्युः ।
छाया च तथा नित्यं बाहुल्ये–ऽप्य–ऽव्यया–त्पन्थाः ॥

अस्य व्याख्या—

अमनुष्यादिति । मनुष्यादन्यस्मात् षष्ठ्यन्तात्परा सभा अशाला रूपा नपुंसकलिङ्गा भवन्ति । षष्ठ्यन्तात्परा. सेनादयश्च तत्पुरुषे विभाषया नपुसकलिङ्गा भवेयुः । छाया च विभाषया भवेत् । बाहुल्येऽपि छाया नित्य नपुंसकलिङ्गा भवति । अव्ययात्परः पन्थाः तत्पुरुषे नपुंसकलिङ्ग इति । मनुष्यसदृशग्रहणात् काष्ठसभा स्त्रीलिङ्गमेव । गोपालसभा = गोपालानां समूह इत्यर्थः । इह न भवति—अनाथसभा = अनाथकुटी इत्यर्थः । पूर्वपदस्यात्र बहुलत्वं गम्यते । अपथम्, उत्पथम् । तत्पुरुषे इति किम् ? सुपथा नगरी, उत्पथो देश । शे० प्रा० ।

सुदिना–त्पुण्या–देका–च्चा–ऽह्नः संख्यापरो–ऽपि रात्रिश्च ।
गृह–शश–पूर्वे स्थूणो–र्णे च नपुंसकमिति समाप्तम् ॥'इति॥

अस्य व्याख्या—

सुदिनादिति । सुदिनशब्दात्पुण्यशब्दादेकशब्दाच्च परोऽह्नशब्दः अत्प्रत्ययान्तः, संख्यापरोऽपि रात्रिशब्दः अत्प्रत्ययान्त, नपुंसकलिङ्गो भवति । गृहं च शशश्च, तौ पूर्वौ ययो. स्थूणोर्णयो. इति गृहपूर्वा स्थूणा शशपूर्वा ऊर्णा च नपुसकलिङ्गे भवतः । उदाहरणानि तु प्रागेवोक्तानि ।

अथेह यादवोऽपि संक्षेपतः कांश्चिन्नपुंसकलिङ्गवाचकशब्दानाह (वै० पृ० २९०-१ श्लोकः १५ तः २३ या०) ।

त्रान्त–द्व्यच्का–सि–सु–स्नान्तं लोपधं युक्तयोपधम् ।
अम्बुपुष्पाणि च क्लीबे रेचकं त्व–ऽभयाफले ॥

अस्य व्याख्या—

त्रान्तेति । त्रोऽन्ते यस्य तत् त्रान्तम्, द्वौ अच्कौ स्वरौ यस्य तद् द्वयच्कम्, अस् च इस् च नश्च असिसुस्ना । ते अन्ते यस्य तद् असिसुस्नान्तम्, त्रान्त च द्वयच्क च असिसु-चेति समाहारो द्वन्द्व । लकार उपधा अन्त्यात्पूर्वो यस्य तद् लोपधम्, यकार उपधा त्पूर्वो यस्य तद् योपधम् तेन युक्त युक्तयोपधम् । अम्बुपुष्पाणि जलपुष्पाणि, अभयाफले कीफले तु रेचक च क्लीबे स्यु । एषामुदाहरणानि तु प्रागेवोक्तानि ।

ब्रह्मोद्याद्या भावकृत्या–श्छन्दो–ऽणि त्रैष्टुभादय. ।
स्मिताद्या भावनिष्ठान्ता कर्णजाहादि जाहचि ।।

अस्य व्याख्या—

ब्रह्मेति । भावे कृत्या कृत्यप्रत्यया ब्रह्मोद्याद्या, छन्दः छन्दोजातौ अणि अण्प्रत्येत्य ष्टुभादयः, भावे निष्ठान्ता स्मिताद्या, जाहचि जाहच्प्रत्यये कर्णजहादि चैते नपुंसकलिङ्गा न्ति । कर्णजाहम् = कर्णमूलम् । 'तस्य पाकमूल०' इत्यादिना जाहच्प्रत्ययः स्यात् ।

समूह–भाव–कर्मार्थ–तद्धिते वार्द्धकादयः ।
सांराविणोपमानादि नोपान्तं भाव–संज्ञयोः ।।

अस्य व्याख्या—

समूहेति । समूहार्थे भावार्थे कर्मार्थे च तद्धिते तद्धितप्रत्यये वार्द्धकादयो नपुसकलिङ्गा । वृद्धाना समूहो भावः कर्म वा 'वार्द्धकम्' इत्यादयः । भावे सज्ञायां च साराविणोपमा-नादि नोपान्तं च नपुसकलिङ्गा भवन्ति । एषामुदाहरणानि प्रागुक्तानि ।

एक–द्वन्द्वा–ऽव्ययीभावाः स्यु–रितो–ऽकर्मधारये ।
अनञ्–तत्पुरुषे शब्दाः कन्थो–शीनरनामसु ।।
यथा सौशमिकन्थं स्याद् बाहुल्ये तु समासभाक् ।
छाया यथा खगच्छायं नृपा–ऽमत्त्यार्थिका–त्परा ।।
अराजः सभा भूभृत्सभं रक्ष सभं यथा ।
न काष्ठादे–रशालार्था सैव दासी–सभं यथा ।।

एषा व्याख्या—

एकेति । यथेति । अराज इति च । एषामेकादिश्लोकानां व्याख्योदाहरणानि प्राग्वद्-

उपज्ञो-पक्रमान्तं च तदादित्वे विवक्षिते ।
पाणिन्यु-पज्ञ-मित्यादि पथः संख्या-ऽव्यया-त्परः ॥
शशा-दूर्णा-गृहा-त्स्थूणा क्रिया-ऽव्यय-गुणानुगम् ।
एकत्व चाऽस्य पुण्या-त्तु सुदिना-दप्य-हः पूरः ॥

अनयोर्व्याख्या—

उपज्ञेति । शाशदिति च । उभयो श्लोकयोर्व्याख्योदाहरणानि प्राग्वज्ज्ञेयानि । चन्द्रगोमिनो लिङ्गानुशासने तु 'शशोर्णं कारणं करण'मित्युक्तम् ।

कुटिलं गच्छती-त्यादि क्रियाणां तु विशेषणम् ।
नपुंसकं तु भद्रं स्व-रित्यव्ययविशेषम् ॥' इति ।

अस्य व्याख्या—

कुटिलमिति । क्रियाणा भ्वादिधातूना अव्ययाना स्वरादिनिपातानां च यद् विशेषणं विशेष्यधर्मं तन्नपुसक नपुसकलिङ्ग स्यात् । क्रियाविशेषण यथा—कुटिलं गच्छतीत्यादि । अव्ययविशेषणं यथा—भद्र स्वरित्यादि ।

इति नपुसकलिङ्गानुशासनम् ॥

## अथ पुंस्त्रीलिङ्गानुशासनम् ।

तत्रादौ शंखादीन् वस्त्रदशापर्य्यन्तान् पुंस्त्रीलिङ्गवाचकशब्दानाह हैम— (अभि० स० लिं० पृ० ६ श्लोक· ७५ त ७९. या०) ।

पु-स्त्री-लिङ्ग',-श्चतुर्दशे-ऽङ्के शङ्कु,-र्निरये च दुर्गतिः, ।
दोर्मूले कक्ष, आकरे गञ्जो, भूरुहि बाण-पिप्पलौ, ॥१॥
नाभिः प्राण्यङ्गके, प्रधि-र्नेमौ, क्वचन बलि,-र्गृहे कुटः, ।
श्रोण्यौ-षध्योः कटो, भ्रमो मोहे, पिण्डो वृन्द-गोलयोः, ॥२॥
भ-कनीनिकयो-स्तारो, भे-ऽश्लेष-हस्त-श्रवणाः, ।
कणः स्फुलिङ्गे लेशे च, वराटो रज्जु-शस्त्रयोः, ॥३॥
कुम्भः कलशौ, तरणिः समुद्रा-र्का-ऽशु-यष्टिषु, ।
भागधेयो राजदेये, मेरुजम्ब्वां सुदर्शनः, ॥४॥
करेणु--र्गज--हस्तिन्यो,--रल्याख्या-- ऽपत्यतद्धितः, ।
लाज-वस्त्रदशौ भूम्नी, त्याद्याः प्रत्ययभेदतः ॥५॥

अस्य व्याख्या—

पुमिति । नाभिरिति । भेति । कुम्भ इति । करेणुरिति च । एते शङ्क्वादयो वस्त्रदशान्ता· शब्दा पुंस्त्रीलिङ्गा भवन्ति । एकदशशत—इत्यादिगणनाया चतुर्दशेऽङ्के शङ्कुः= संख्याविशेष· । शतादिकत्वाद् अस्य नपुसकत्वं प्राप्तम् । कीलार्थस्य उदन्तत्वात् पुस्त्व सिद्धम् । 'शङ्कु. पत्रशिराजाले सख्याकीलकशम्भुषु । यादोऽस्त्रभेदयोर्मेढ्रे' इति—(अने० स० पृ० ३ श्लोक: १८) । अय शंकु , इय शंकु इति । निरये नरके दुर्गति । अय दुर्गति·, इय दुर्गति । 'निरयो दुर्गति. स्त्रियाम् ।' इति—(अम० ना० लिं० पृ० ९१ श्लोक १) । अयं कक्ष·, कक्षा=दोर्मूलम्, बाहुमूलम् । 'कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे ॥ स्पर्धा (र्द्धा) स्पदे, ना दोर्मूले कच्छवीरुत्तृणेषु, च ।' इति—(मे० पृ० १६६ श्लोकः ७, ८) । अय गञ्ज., इयं

पाणिनीयेऽपि—(१) (स्त्रीपुसयोः) ॥ अधिकारोऽयम् । सि० कौ० पृ० ४०३ सू० १७२ ।
पाणिनीयेऽपि–(२) (अपत्यतद्धिते) ॥ अयं–औपगव., इय–औपगवी । सि० कौ० पृ० ४०४ सू० १७६ ।

गञ्जा = आकारः, खनि । 'गञ्जा खनौ सुरागृहे । गञ्जः स्यात्पुंसि रीढया, भाण्डागारे तु न स्त्रियाम् ॥' इति—(मे० पृ० ३० श्लोक ८) । अय बाण , इयं बाणा = भूरुट्, वृक्ष-विशेषः, नीलझिण्टी । 'बाण स्याद् गोस्तने दैत्यभेदे केवलकाण्डयोः। बाणा तु बाणमूले स्त्री, नीलझिण्ट्या पुनर्द्वयो ॥' इति—(मे० पृ० ४६ श्लोक २७) । अयं पिप्पल , इय पिप्पली = भूरुट्, वृक्षविशेष । "पीपल" इति लोके । कणा च । 'पिप्पल सलिले वस्त्रच्छेदभेदे च, ना तरौ ॥ निरर्गले पक्षिभेदे, कणाया पिप्पली मता ।' इति—(मे० पृ० १५२ श्लोक १११-२) । अय नाभि , इयं नाभिः, नाभी = प्राण्यङ्गविशेष , उदरावर्त , तुन्दकूपी । "सूडी" इति लोके । 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययो पुमान् ॥ द्वयो प्राणिप्रतीके स्यात्, स्त्रिया कस्तूरिकामदे ।' इति—(मे० पृ० १०६ श्लोक ५, ६) । अय प्रधि , इय प्रधिः = नेमिः, रथस्य चक्रान्तो भूमिस्पर्शिभाग । 'तस्यान्ते (चक्रान्ते) नेमि स्त्री, स्यात्प्रधिः पुमान ।' इति—(अम० ना० लिं० पृ० २८४ श्लोक ५६) । क्वचन अय बलि , इय बलि = कर, उपहार , प्राण्यङ्गजं च । 'करोपहारयो पुंसि बलि , प्राण्यङ्गजे स्त्रियाम् ।' इति—(अम० ना० लिं० पृ० ४३१ श्लोक १९५) । अय कुट , इय कुटि = गृहम् । "घर" इति लोके । 'कुट कोटे पुमानस्त्री घटे, स्त्रीपुंसयोर्गृहे ॥' इति—(मे० पृ० ३४ श्लोक. ६) । अयं कट , इयं कटि., कटी = श्रोणिः, औषधिश्च । 'कट. श्रोणौ द्वयो पुंसि क(क) लिञ्जेऽतिशये श(शि) वे । समये गज-गण्डे च, पिप्पली (ल्या) तु कटी मता ।' इति—(मे० पृ० ३३ श्लोकः ३, ४) । अय भ्रम , इय भ्रमि. = मोह, भ्रान्ति । 'भ्रान्तिर्मिथ्यामतिर्भ्रम ॥' इति—(अम० ना० लिं० पृ० ५६ श्लोक ४) । 'भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि ।' इति च—(मे० पृ० १०९ श्लोकः २०) । अयं पिण्डः, इय पिण्डि = वृन्दम्, गोलश्च । 'पिण्डो वृन्दे जपापुष्पे गोले बोलेऽङ्गक्लियो । कवले, पिण्ड तु वेश्मैकदेशे जीवनायसो । बले सान्द्रे, पिण्डचलाबूखजूर्य्यो-स्तगरेऽपि च ।' इति—(अने० स० पृ० १२ श्लोकः १२४) । अय तार., इयं तारा = भम्, नक्षत्रम्, कनीनिका च । 'तारो वानरभिन्मुक्ताविशुद्धयो शुद्धमौक्तिके । ना, नक्षत्रेऽक्षिमध्ये च न ना, रूप्य नपुंसकम् । स्त्री बुद्धदेवताभेदे बालिगीष्पतिभार्य्ययोः । त्रिलिङ्गोऽप्युच्चशब्दे च' इति—(मे० पृ० १२५-६ श्लोक. ४३-४) । अय भः, इय भा = अश्लेष , अश्लेषा । हस्त., हस्ता । श्रवण , श्रवणा । 'हस्ता स्वाती श्रवणा अक्लीबे, मृगशिरा न पुंसि स्यात् । पुंसि पुनर्वसुपुष्यौ, मूल त्वस्त्री, स्त्रियां शेषाः ।' इति—(श० चिं० पृ० १३२६ स्त १ पं० ११-२ ३-४) । अय कण , इय कणा = स्फुलिङ्ग , लेशश्च । 'त्रिषु स्फुलिङ्गोऽग्निकण ' इति—(अम० ना० लिं० पृ० २४ श्लोक. ५७) । 'कणो धान्यांशलेशयो । कणा जीरकपिप्पल्यो.' इति—(अने० स० पृ० १२ श्लोक. १३५) । अय वराट , इयं वराटिका = रज्जु , शस्त्र च । 'वराटक पद्मबीजकोशे रज्जौ कपर्दके ।' इति—(मे० पृ० १६ श्लोक २०२) । अयं कुम्भः,

इय कुम्भी = कलशि , घटी, गर्गरी । 'कुम्भ स्यात्कुम्भकर्णस्य सुते वेश्यापतौ घटे । राशिभेदे द्विपाङ्गे, च कुम्भ त्रिवृतिगुग्गुले ।' इति—(वि० प्र० पृ० १०८ श्लोक १६)। अय तरणि, इय तरणि = सूर्य', समुद्र, किरण , यष्टिश्च । 'तरणिस्तरणेऽर्केऽशौ कुमार्य्योषधिनौकयो. । यष्ट्यावब्धौ' इति—(अने० स० पृ० ६६ श्लोक २१५) । अय भागधेय, इय भागधेया = राजदेय , कर , राजग्राह्यभाग', राजस्वम् । 'भागधेय पुन करे ।। दायादे, भागधेयं तु भाग्ये' इति—(अने० स० पृ० १३० श्लोक २३४-५) । अय सुदर्शन इय, सुदर्शनी, सुदर्शना = विष्णोश्चक्रम्, अमरावती, ओषधिप्रभेदश्च । 'अथ सुदर्शन ।। विष्णोश्चक्रे, सुदर्शन्यमरावत्या, सुदर्शना । आज्ञायामौषधीभेदे मरुजम्ब्वा पुरीभिदि ।।' इति—(अने० स० पृ० १२८ श्लोक २१०-१) । अय करेणु , इय करेणु = गज , हस्तिनी च । 'करेणुर्गजहस्तिन्यो कर्णिकारतरावपि ।' इति—(अने० स० पृ० ६५ श्लोक २०५) । अल्पादेव्या भ्रमरस्य नामानि अपत्यतद्धित पुस्त्रियो' स्यु । भ्रमर , भ्रमरी । भृङ्ग , भृङ्गी । प्रत्ययभेदतो लाजवस्त्रदशौ भूम्नि बहुवचने पुस्त्रीलिङ्गौ भवत । इमे लाजा, इमा लाजा = अक्षता' । 'लाज स्यादार्द्रतण्डुले । लाजास्तु भृष्टधान्ये स्युर्लाज पुनरुशीरके ।।' इति—(अने० स० पृ० ८ श्लोक. ७६) । 'लाज स्यादार्द्रतण्डुले । नपुसकमुशीरेऽथ स्त्रिया पुम्भूम्नि चाक्षते ।' इति—(मे० पृ० ३० श्लोक: १४) 'लाजा' पुम्भूम्नि चाक्षता ।' इति च—(अम० ना० लिं० पृ० ३१८ श्लोक ४७) । केचित्तु—अखडतण्डुला अक्षता—इत्याहु । लाजा भृष्टधान्यम् । उक्तं च—'एते च व्रीहयो भृष्टास्ते लाजा इति संज्ञिता । यवादयश्च ये भृष्टा स्ते धाना परिकीर्तिता ।' इति—(श० चि० पृ० १५१ स्त० १ प० ११-२-३) । तथा च प्रयोग — 'अवाकिरन्बाललता प्रसूनैराचारलाजैरिव पौरकन्या ।' इति रघु (२।१०) । इमे वस्त्रदशा, इमा वस्त्रदशा = वस्त्रान्त । 'दशाऽवस्थादीपवर्त्त्यो र्वस्त्रान्ते भूम्नि योषिति ।' इति—(मे० पृ० १६३ श्लोक ८) ।

अथेदानी क्रमेण कान्तादीन् सान्तपर्य्यन्तान् पुस्त्रीलिङ्गवाचकशब्दानाह हेम —(अभि० सं० लि० पृ० ६ श्लोक. ७५ त ८६ या०) ।

शौण्डिक—चर्मप्रसेवकौ सल्लक—मल्लक—वृश्चिका अपि ।
शल्यक—घुटिकौ पिपीलिक—श्चुलुक—हुडुक्क—तुरुष्क—तिन्दुकाः ।।६।।
शुङ्गोऽथ लञ्ज—भुज—शाट—सटाः सृपाटः
कीटः कुट—स्फट—घटा वरटः किलाटः ।
चोट—श्चपेट—फट शुण्ड—गुडाः सशोणाः
स्युर्वारिपर्ण—फण—गर्त्त—रथा—ऽजमोदाः ।।७।।

विधकूप–कलम्ब–जित्य–वर्द्धाः सहचर–मुद्गर–नालिकेर–हाराः।
बहुकर–क्रसरौ कुठार–शारौ वल्लर–शफर–मसूर–कील–रालाः ॥८॥
पटोलः कम्बलो भल्लौ दशौ गण्डूष–वेतसौ ।
लालसो रभसः'··· ··· ···इति ।

एषा व्याख्या—

शौण्डिकेति । शुङ्ग इति । विधेति । पटोल इति च । शोणेन सहिता शौण्डिकादयो रभसान्ताः शब्दाश्चैते पुंस्त्रीलिङ्गा भवन्ति । शौण्डिकश्च चर्मप्रसेवकश्चेतीतरेतरयोगो द्वन्द्वः । अयं शौण्डिकः, इयं शौण्डिकी = 'कलवार'' ''कलवारिन'' इति च लोके । अयं चर्मप्रसेवकः, इयं चर्मप्रसेविका = भस्त्रा, अग्निसन्दीपनार्थं चर्मनिर्मितं यन्त्रम् । ''भाती'' ''धोंकनी'' इति च लोके । 'भस्त्रा चर्मप्रसेविका ।' इति— (श० र० स० पृ० ५२ प० ११) । अयं सल्लकः, इयं सल्लकी = वृक्षविशेषः, पशुश्च । 'गजभक्ष्या तु सुवहा सुरभी रसा ॥ महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।' इति— (अम० ना० लिं० पृ० १७० श्लोकः १२३-४) । 'सल्लकी सिल्लकी ह्लादा' इति रुद्रः' इति—(अम० सु० व्या० पृ० १७० स्त० १ प० २२) । 'शल्लकी'त्यपि । 'श्वाविद्द्रुमभेदौ शल्लक्यौ' इति रभसः' इति— (अम० ना० लिं० पृ० १७० स्त० १ प० २२) । अयं मल्लकः, इयं मल्लिका = दीपाधारः, तैलाद्याधारविशेषः, कौशिका, नारिकेलफलनिर्मितचषकश्च । ''नरेली'' इति लोके । अयं वृश्चिकः, इयं वृश्चिकी = क्षुद्रजन्तुविशेषः । 'वृश्चिकः शूककीटे स्याद्राश्यौषध द्रुणेस्वपि ।' इति—(श० र० स० पृ० २८ प० ८) । अयं शल्यकः, इयं शल्यकी = श्वावित्सदृशः स्थूल-लोमवान् प्राणिविशेषः । अयं घुटिकः, इयं घुटिका = पादग्रन्थः, गुल्फः । ''टकुना'' इति लोके । तद्ग्रन्थी घुटिके गुल्फौ' इति—(अम० ना० लिं० पृ० २२७ श्लोक ७२) । अयं पिपीलिकः, इयं पिपीलिका = कीटभेदः । ''चींटी'' ''चीटा'' इति च लोके । 'पिपीलिका तु हारी स्यात्' इति—(त्रि० शे० पृ० २२८ श्लोक २७) । 'शनैर्याति पिपीलिकः' इति पुंस्त्वमपि इति स्वामी । अयं चुलुकः = घनजम्बालः । 'चुलुको घनजम्बालः' इति—(त्रि० शे० पृ० २७५ श्लोक ५) । इयं चुलुकी = शिशुमाराकृतिमत्स्यविशेषः । अयं हुडुक्कः, इयं हुडुक्का = वाद्यभेदः, मदमत्तदात्यूहपक्षी च । 'हुडुक्को वाद्यभेदे स्यान्मत्तदात्यूहपक्षिणि ।' इति—(श० र० स० पृ० ३० प० १७) । अयं तुरुष्कः, इयं तुरुष्की = म्लेच्छजातिविशेषः । 'तुरुष्को देशभेदे स्यादपि जात्यन्तरे मतः । तुरुष्कः सिह्लके ताम्रे तथा स्यात्पिण्डके क्वचित् ।' इति— (श० र० स० पृ० १८ प० ३, ४) । अयं तिन्दुकः, इयं तिन्दुकि तिन्दुकी = वृक्षभेदः कालस्कन्धः ।

'तिन्दुक: स्फूर्जक कालस्कन्धश्च शितिसारके ।' इति–(अम०ना० लि० पृ० १५१ श्लोक ३८)। शुङ्ग =वट.,आम्रातक., पर्कटी च । 'शुङ्गो वटाम्रातकयो ,पर्कट्यामपि चास्त्रियाम् ।' इति–(मे० पृ०२३ श्लोक २५)। शुङ्गा = नवपल्लवकोशिका । 'शुङ्गाऽस्य (पत्रस्य) कोशिका' इति–(वै०पृ० ४६ श्लोक १७) । शुङ्गी = आम्रात , वट , प्लक्षश्च । 'शुग्याम्राते वटे प्लक्षे' इति–(अने० स० पृ० ६ श्लोक ५०) । 'शुङ्गीवटाम्रातकयो पर्कट्यामपि विश्रुता ।' इति—(वि० प्र० पृ० २६ श्लोक २७) । लञ्ज =पङ्गु , कच्छश्च । 'लञ्ज. स्यात्पङ्गुकच्छयो. ।' इति—(हा० व० पृ० ४०८ श्लोक २५५) । लञ्जा, लञ्जिका = वेश्या भुजष्या वा । 'लञ्जा-स्याद्वारयोषिति ।' इति । 'भुजिष्यायां तु लञ्जिका ।' इति च—(श० र० स० पृ० ७७ श्लोकः ९) । 'लञ्जिनी तु स्याल्लञ्जिका कलकूजिका ' इति च—(त्रि० शे० पृ० २८९ श्लोक ५) । भुज , भुजा = बाहु , करश्च । 'अथो भुजा द्वयोर्बाहौ करे' इति–(मे० पृ० ३० श्लोक. १२) । शाट , शाटिका, शाटी = पटभेद , चोली । 'चोली तु शाटिका शाट ' इति—(वै० पृ० १६९ श्लोक १२७) । सटः, सटा = जटा, सिहकेसरश्च । 'सटा जटाकेसरयो.' इति—(मे० पृ० ३५ श्लोक २९) । 'जटा जटिर्जटी जूटो जुटक तु सट सटा । कोटीर जुटकं हस्त शिखाया व्रतिनामपि ।' इति शब्दरत्नावली' इति—(श० चि० पृ० ६९४ स्त० २ पं० १५ त ) । सृपाट, सृपाटी = मान, परिमाणभेद:, रक्तधारा च । कीट , कीटी = कृमिभ्य: किञ्चित्स्थूल क्षुद्रजन्तुमात्रम् । कुट. कुटि = वेश्म, गृहम् । ''घर'' इति लोके । 'कुट. कोटे पुमान–स्त्री घटे, स्त्रीपुसयोर्गृहे ।' इति—(मे० पृ० ३४ श्लोक. ६) । शाला, स्वल्पगृह चेत्यन्ये । स्फट., स्फटा = फणा । 'स्फटायां तु फणा द्वयो. ।' इति—(अम० ना० लि० पृ० ९० श्लोक ९) । घट., घटी = कुम्भ , कलस., परिमाणभेदश्च । 'कलसस्तु त्रिषु, द्वयो. । घट, कुटनिपावस्त्री' इति—(अम० ना० लि० पृ० ३१२ श्लोक. ३१-२) । 'घटा घटने गजसंहतौ । गोष्ठ्यां, घटस्त्विभशिर कूटे समाधिकुम्भयो ।।' इति च—(अने० स० पृ० ९ श्लोक. ८९) । स्त्रियां घटी । वरट =हसीपति , गन्धोली च । वरटा = गन्धोली । वरटा, वरटी = हंसी । 'गन्धोली वरटा द्वयो ।' इति—(अम० ना० लि० पृ० १९७ श्लोक. २७) । ''वरडे'' इति लोके । 'वरटा वरटी हंस्योस्तत्पतौ वरटः स्मृत. ।' इति तारपाल' इति—(अम० सु० व्या० पृ० १९७ स्तं० २ प० ११-२) । 'हंसस्य योषिद्वरटा' इति च—(अम० ना० लि० पृ० १९६ श्लोक २५) । किलाट , किलाटी = क्षीरविकृति, कूर्चिका, दधिकूर्चिकातक्रकूर्चि-कयो पिण्डश्च । 'किलाटः शोषितक्षीरपिण्डः सूरिभिरिष्यते ।' इति—(हा० व० पृ० ३६६ श्लोकः ५९) । 'नष्ट दुग्धस्य पक्वस्य पिण्डः प्रोक्त. किलाटक ।' इति कोशान्तरं च' इति—(श० चि० पृ० ६०६ स्त० १ पं० ९, १०) चोट = श्मश्रु । 'श्मश्रु तु व्यञ्जन चोट' इति—(वै० पृ० १८१ श्लोक १०३) । चोटी = शाटी । 'शाटी चोटी' इति—(अभि० स० अभि० चि० पृ० २८ श्लोकः ६७५) । शोणेन सह वर्त्तन्ते इति सशोणा । चपेटश्च फटश्च

शुण्डश्च गुण्डश्चेतीतरेतरयोगो द्वन्द्व । चपेटः, चपेटा, चपेटिका = विस्तृताङ्गुलिपाणि:, प्रतलः। "थप्पड" "झापड" "चपेटा" इति च लोके। 'पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ।' इति--(अम० ना० लि० पृ० २३२ श्लोक. ८४)। 'खण्डिकोपाध्याय: शिष्याय चपेटां ददातीति भाष्य च' इति—(श० चिं० पृ० ९०५ स्तं० १ पं० २७-८-९)। फटः, फटा = फणा। 'फणा फटे' इति। 'फटा फणायां दम्भे च' इति च—(श० र० स० पृ० ८५ प० १९)। 'स्फटायां तु फणा द्वयो:।' इति। 'द्वे अपि स्त्रीपुंसयो' इति टीका इति च--(अम० ना० लिं० पृ० ९० श्लोक: ९)। शुण्ड. = मदनिर्झरः। शुण्डा = जलहस्तिनी, मदिरा, करिहस्तश्च। 'शुण्डापि जलहस्तिन्यां मदिराकरिहस्तयो.। नलिन्यां वारयोषाया, शुण्डस्तु मदनिर्झरे।' इति--(वि० प्र० पृ० ४५ श्लोक २४)। गुडः = इक्षु-विकार, हस्तिसन्नाह, गोलकश्च। गुडा = गुडिका, स्नुही च। 'गुड. स्याद्गोलके हस्तिसन्नाहेक्षुविकारयो:। गुडा स्नुह्या च कथिता गुडिकाया च योषिति।' इति—(मे० पृ० ४१ श्लोक. १०)। शोण. = नदविशेष., अरुणश्च। शोणा शोणी = शोणवर्णयुक्ता, रक्ता, रक्तोत्पलवर्णयुक्ता स्त्री। 'शोणो नदेऽरुणे' इति--(त्रि० शे० पृ० ३३४ श्लोकः १४०)। वारिपर्णश्च। फणश्च गर्तश्च रथश्च अजमोदश्चेतीतरेतरयोगो द्वन्द्व। वारिपर्ण = कुम्भीकः। वारिपर्णिका, वारिपर्णी = कुम्भिका, जलकुम्भिका, खमूली। "पुरइन" इति लोके। 'वारिपर्णी तु कुम्भिका।' इति। 'कुम्भीको वारिपर्ण स्यात्' इत्येके पठन्ति' इति—(अम० ना० लिं० पृ० १०७ श्लोक: ३८)। फणः, फणा = स्फटा "फण" इति लोके। 'स्फटायां तु फणा द्वयोः।' इति—(अम० ना० लिं० पृ० ९० श्लोक: ९)। गर्तः, गर्ता = अवट:, भूरन्ध्रम्। "गढा" इति लोके। 'अथ गर्त: स्यादवटे च कुकुन्दरे। गर्तस्त्रिगर्तभेदे स्यात्' इति—(श० र० स० पृ० ८७ पं० १२)। रथ = स्यन्दन., वेतसश्च। रथिका = क्षुद्ररथः। रथी = शकटी। "मज्झोली" इति लोके। 'रथस्तु स्यन्दने पादे शरीरे वेतसद्रुमे।' इति—(अने० स० पृ० १९ श्लोक: २२४)। 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च।' इति च-(मे० पृ० ७२ श्लोक. १२)। अजमोदः, अजमोदा = उग्रगन्धा। 'अजमोदा तूग्रगन्धा' इति—(अम० ना० लिं० पृ० १७७ श्लोक: १४५)। विधः, विधा = प्रकार., गजान्नम्, ऋद्धिश्च। 'विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ।' इति—(मे० पृ० ८० श्लोक: १७)। कूपः = जलाधार., उदपान.। कूपिका = अम्भोगतोपल, जल-मध्यस्थितपर्वतादि। कूपी = पात्रविशेषः। 'कूप कूपकमृन्माने गर्त्तान्धु (म्बु) गुणवृक्षके।' इति—(मे० पृ० १०२ श्लोक: ३)। कलम्ब. = कदम्बः, बाणश्च। कलम्बी = शाकभेदः। 'कलम्बी शाकभेदेऽपि (स्यात्) कदम्बशरयो. पुमान्।' इति—(मे० पृ० १०५ श्लोक: ६)। जित्य, जित्या = हलि., बृहद्धलम्, कृष्टसमीकरणार्थं स्थूलकाष्ठम्। वद्ध्र, वद्ध्री = नद्ध्री, वरत्रा, चर्मरज्जुः। "तस्मा" "जेर बन्द" इति च लोके। "चर्म्मबन्धनी वा"। 'नद्ध्री वद्ध्री वरत्रा

स्यात्' इति— (अम० ना० लि० पृ० ३४८ श्लोक. ३१) । सहचर., सहचरी=पीतझिण्टी.। 'भवेत्सहचरो झिण्ट्यां द्वयो,–रनुचरे त्रिषु ।' इति—(मे० पृ० १४४ श्लोक २९९) । 'पीता कुरण्टको झिण्टी तस्मिन् सहचरी द्वयो ।' इति च--(अम० ना० लि० पृ० १५४ श्लोकः ७५) । मुद्गर, मुद्गरा, मुद्गरी=लोष्टादिभेदनम् । 'मुद्गर कालिकाभेदे, पुसि लोष्टादिभेदने ।' इति–(मे० पृ० १३७ श्लोक २०४) । नालिकेर, नालिकेरी=नारिकेल:, लाङ्गली । ''नारियल'' इति लोके । ''नालिकेरस्तु लाङ्गली ।' इति— (अम० ना० लि० पृ० १८५ श्लोक १६८) । हार, हारा=मुक्तावलि, मुक्तादाम, सग्रामश्च । 'हारो मुक्तावलौ युधि ।' इति— (मे० पृ० १३० श्लोक १००) । 'क्रोडा हारा तथा दारा त्रय एते यथाक्रमम् । क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभि ।' इति च व्याडिशुभाङ्कौ' इति—(अम० सु० व्या० पृ० २०५ स्त० १ प० २४-५) । हारी=मौक्तिकम् । 'मुक्ता मुक्ताफल शुक्तिबीज हारी च मौक्तिकम् ।' इति शब्दरत्नावली' इति--(श० चि० पृ० १०१० स्त० १ प० १७-८) । बहुकरश्च कृसरश्चेतीतरेतरयोगो द्वन्द्व । बहुकर =वक्रग्रीव, उष्ट्र । बहुकरी= उष्ट्रभार्या । कृसर., कृसरा=तुल्यतिलान्नम, द्विदलमिश्रितौदनम् । "खिचडी" इति लोके । 'तिलतण्डुलसम्पक्व कृसर सोऽभिधीयते ।' इति कोशान्तरम्' इति—(श० चि० पृ० ६७१ स्त० २ प० ११-२) । 'कृशरा' इत्यपि । 'कृशराऽपि तिलौदने ।।' इति—(हा० व० पृ० ४०४ श्लोकः २६९) 'कृश(स)रा किशराऽपि च ।' इति--(श० भे० प्र० पृ० ५ श्लोक २१) । कुठारश्च शारश्चेतीतरेतरयोगो द्वन्द्वः । कुठार, कुठारी=परशु,स्वधिति । ''कुल्हाडा'' ''कुल्हाडी'' "फर्सा" "फर्सी" इति च लोके । "द्वयोः कुठार. स्वधिति परशुश्च परश्वध ।' इति—(अम० ना० लि० पृ० २९४ श्लोकः ९२) । 'कुठार परशौ मत ।' इति—(श० र० स० पृ० २६८ श्लोकः १) । 'कुठार स्त्री च स्वधिति परशुश्च परश्वध । कुटाटङ्क पर्शुः' इति रभसः' इति—(अम० सु० व्या० पृ० २९४ स्त० २ प० ४१-२) । शार, शारी=अक्षोपकरणम्, द्यूतसाधनम्, खेलनी । "गुटिका" ''गोट'' ''सारि'' इति च लोके । वातश्च । 'शारिर्नाऽक्षोपकरणे, स्त्रिया शकुनिकान्तरे' । शारस्तु शबले वाच्यलिङ्गो, ना समीरणे । अक्षोपकरणे चापि, क्लीबं ज्ञानेऽपि वारिणि ।' इति—(श० र० स० पृ० २६१ श्लोक ३) । वल्लरश्च शफरश्च मसूरश्च कीलश्च रालश्चेतीतरेतरयोगो द्वन्द्व । वल्लर.= शाद्वलम्, निर्झरस्थानम्, कुञ्जश्च । वल्लरि. । ङीषि दीर्घान्तेऽपि । वल्लरी=मञ्जरि, तुलस्यादेरभिनवोद्भिद् । 'वल्लरः शाद्वले प्रोक्तो निर्झरस्थानकुञ्जयोः । बिल्वक्षेत्रे च, मञ्जर्यां वल्लरीति प्रचक्षते ।' इति—(श० र० स० पृ० २७९ प० ५) । तथा च प्रयोग—'व्यवृणुत वेल्लितबाहुवल्लरीका ।' इति माघः' इति—(अम० सु० व्या० टि० पृ० १३२ स्त० १ पं० ३९) । शफर, शफरी=मत्स्यभेद । 'शफरी तु द्वयोर्मीने' इति—(श० र० स० पृ० २८१ प० ५) । मसूरः, मसूरा=धान्यविशेषः वेश्याप्रभेदश्च । 'मसूरा

मसुरा च स्याद् व्रीहिवेश्याप्रभेदयो । मसूरो मसुरश्च द्वावेतौ चापि तयोर्मतौ ।' इति--(श० र० स० पृ० २७८ प० ३, ४) । कील = शङ्कु, अग्निशिखा च । 'शङ्कावपि द्वयोः कील.' इति—(अम० ना० लिं० पृ० ४३१ श्लोक. १६७) 'कीलो लेशे, द्वयो: स्तम्भज्वालाकफोणिशङ्कुषु।' इति—(मे० पृ० १४५ श्लोक. ८) । 'कील. कफोणिकाघाते स्थाणौ च ज्वलनार्चिषि ।' इति च धरणि:' इति—(अम० सु० व्या० पृ० ४३१ स्तं० २ पं० १८) । कीला = कील , रतौ प्रतिहतिविशेषः । यदाह वात्स्यायन.—'कीला उरसी कर्त्तरी शिरसि विद्धा कपोलयो ।' इति । 'कीलोऽग्नितेजसि । कफोणिस्तम्भयो· शङ्कौ कीला रतहतावपि ।' इति च—(अने० सं० पृ० ३९ श्लोक: ४६१) । राल., राला = यक्षधूप. । 'अराल: सर्जवक्रयो: ।' इति । 'राल· सर्वरसोऽरालो धूपको वह्निवल्लभ ।' इति च रभस.' इति—(अम० सु० व्या० पृ० २४६ स्त० २ पं० ७, ८) । 'रालस्तु शालनिर्यासस्तथा सर्जरस· स्मृत· । देवधूपो यक्षधूपस्तथा सर्वरसश्च स ।' इति च—(भा० प्र० पृ० १७४ श्लोक· ४६)। पटोल·—औषधिविशेष , कर्कच्छद·, तिक्तक· । ' परवल'' ''पलवल'' इति च लोके । पटोला, पटोलिका, पटोली = ज्यौत्स्नी । ''चचेडा'' इति लोके । 'पटोलं वस्त्रभेदे, नौषधौ, ज्यौत्स्न्यां तु योषिति ।' इति—(मे० पृ० १५२ श्लोक: १०६) । 'ज्योत्स्नायां तु पटोला स्यात्पटोल वस्त्रभिद्यपि ।' इति च—(श० र० स० पृ० ३०६ प० १७) । कम्बल: = नागराज । कम्बली = नागराजभार्या । 'कम्बल कृमिसास्नयो: । नागप्रभेदे प्रावारवैकक्ष्ये, कम्बलं जले ।' इति—(अने० सं० पृ० १०० श्लोक· ६६९) । भल्ल: = ऋक्ष: । भल्लिका, भल्ली = भल्लातखी । ''भिलावा'' इति लोके । 'भल्ल: स्यात्पुंसि भल्लूके, शास्त्रभेदे तु न द्वयो· । भल्लातक्यां स्त्रियां भल्ली ।' इति—(मे० पृ० १४८ श्लोक ४२) । दंश: = वनमक्षिका । ''डांस'' इति लोके । दंशी = क्षुद्रदश., दंशभार्या । ''मशडू'' इति लोके । 'दशो वर्मणि मर्मणि । दोषे वनमक्षिकाया खण्डने भुजगक्षते ।।' इति--(अने० सं० पृ० ४५ श्लोक ५६१) । गण्डूषश्च वेतसश्चेतीतरेतरयोगो द्वन्द्व: । गण्डूष . = मुखपूर्ति:, मुखपूरणतोयम्, इभशुण्डाग्रम् । गण्डूषा = उन्नतनाभि:, मुखपूर्तिश्च। 'गण्डूषो मुखपूर्तौ स्याद् गजहस्ताङ्गुलावपि । प्रसृत्या प्रमितेऽपि स्यात् इति—(अने० सं० पृ० १०८ श्लोक: ७७५-६) । वेतस·, वेतसी = लताविशेष·, अभ्रपुष्प·, वानीर: । ''वेत'' इति लोके । 'अथ वेतसे ।। रथाभ्रपुष्पविदुलशीतवानीरवञ्जुला: ।' इति--(अम० ना० लिं० पृ० १३८ श्लोक: २९, ३०) । लालस·, लालसा = औत्सुक्यम्, तृष्णा च । 'लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयो: ।' इति--(मे० पृ० १७२ श्लोक: ३४) । रभस·, रभसा = वेग:, हर्ष:, विषं च । 'हर्षे वेगे च रभस ।' इति—(श० र० स० पृ० ३३७ पं० १६) । 'रभसो विषवेगयो: ।' इति च-(वै० पृ० २४४ श्लोक. ६३) । स्त्रीत्वे तु टाबन्त· । 'उत्कण्ठशष्टवराटकरभसा: स्त्रीत्वे तु टाबन्ता: ॥' इति—(त्रि० शे० पृ० ३६३ श्लोक: १७) ।

अथेदानी ह्रस्वेकारान्तान्, यथालाभं ङ्यन्तानपि उकारान्तान्, ऐकारान्तं, ओकारान्तं,

अकारान्तं च पुस्त्रीलिङ्गवाचकशब्दानाह हेमः—(अभि० स० लिं० पृ० ६ श्लोकः ८३ तः ८६ या०)।

... ... ...वर्ति–वितस्ति–कुटय–स्त्रुटिः ॥९॥
ऊर्मि[1]–शम्यौ रत्न्य–ऽरत्नी अवीचि–
कव्य–ऽण्या–ऽऽणि–श्रेणयः श्रोण्य[2]–ऽरण्यौ[3]।
पार्ष्णि–शल्यौ शाल्मलि[4]–र्यष्टि[5]–मुष्टि[6]
योनी[7]–मुन्यौ–स्वाति–गव्यूति–वस्त्यः[8] ॥१०॥
मेथि–र्मेधि–मशी[9] मषी–षुधी[10] ऋष्टिः पाटलि[11]–जाटली।
पृश्नि–स्तिथ्यऽशनी[12] मणिः[13] सृणि–र्मौलिः केलि–हली–मरीचयः[14]॥११॥
हन्वाऽऽखू कर्कन्धु[15]–सिन्धु–मृत्यु[16]–मन्वऽवट्वे–र्वारू–रु।
कन्दुः काकुः किष्कु[17]–र्बाहु[18]–गवेधू रा–गौ–र्मः ॥१२॥

---

पाणिनीयेऽपि—(१, २, ७) (श्रोणियोन्यूर्मयः पुंसि च) अयं श्रोणिः, इयं श्रोणिः=कटि। अयं योनिः, इयं योनि=भगम्, आकरः, कारण च। अय ऊर्मिः, इयं ऊर्मि=स्वल्पतरङ्गः। सि० कौ० पृ० ३९७ सू० ८।

(३, १२) (अशनिभरण्यरणयः पुंसि च)॥ अयमिय वा अशनिः=विद्युत्, पविश्च। अयमियं वा भरणिः=नक्षत्रविशेष.। अयमियं वा अरणि.=निर्मन्थ्यदारु। सि० कौ० पृ० सू० ।

(४, ५, ६, ८, ९, ११, १४) (गोमणियष्टिमुष्टिपाटलिबस्तिशाल्मलित्रुटिमसिमरीचय)॥ अय गौ. बलीवर्द., इयं गौ=सौरभेयी। अयमिय वा मणिः=अश्मजाति, रत्नम्। अयमियं वा यष्टि.=हारलता, भार्गी च। अयमिय वा मुष्टिः=बद्धपाणिः, पलपरिमाणं च। अयमियं वा पाटलि=पाटला, पुष्पवृक्षः। अयमियं वा बस्ति.=नाभेरधोभाग, नाभिलिङ्गयोरन्तरम्। अयमिय वा शाल्मलि=स्थिरायु, मोचा। अयमिय वा त्रुटिः=कालमानम्, लवद्वयम्। अयमिय वा मसि (शि)=लिपिप्रयोजना। अयमियं वा मरीचि=किरणः। सि० कौ० पृ० ४०३ सू० १७३।

(१०) (इषुधिः स्त्री च)॥ इषुधिशब्द. स्त्रियां पुंसि च। अयमियं वा इषुधिः=इषूणां स्थानम्, तूणीर.। सि० कौ० पृ० ३९९ सू० ४२।

(१५, १६, १७) (मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणव)॥ अयमिय वा मृत्यु=मरणम्, पञ्चता। अयमियं वा सीधु=आसवः। अयमिय वा कर्कन्धु=बदरीवृक्ष। अयमिय वा किष्कुः=वितस्तिः। अयमिय वा कण्डुः=कण्डूया, खर्जूः। अयमिय वा रेणु=धूलिः। सि० कौ० पृ० ४०३ सू० १७४।

(१८) (इषुबाहू स्त्रियां च)॥ चात्पुंसि। अयमियं वा इषु=बाण.। अयमिय वा बाहुः=भुजः। सि० कौ० पृ० ३९९ सू० ४६।

तत्र विशेष—(समासे रज्जु. पुंसि च)॥ चात्स्त्रियाम्। अयमिय वा रज्जुः=बन्धनसाधनवस्तु। उदाहरणम्—कर्कटरज्जुना, कर्कटरज्ज्वा। सि० कौ० पृ० ३९९ सू० ५३।

अस्य व्याख्या—

वर्त्तीति । ऊर्म्मीति । मेथीति । हन्विति च । एते वर्त्यादयो मपर्य्यन्ता शब्दाः पुस्त्रीलिङ्गाः स्युः । वर्तिश्च वितस्तिश्च कुटिश्चेतीतरेतरयोगो द्वन्द्वः । अयं वर्तिः, इयं वर्त्तिः =लेखः, वटिकाश्च । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः ।' इति—(मे० पृ० ५८ श्लोकः ५५) । अयं वितस्तिः, इयं वितस्तिः =प्रमाणविशेषः, द्वादशाङ्गुलप्रमाणम् ।। "एक बित्ता" "एक बालिस्त" इति च लोके । 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।' इति—(अम० ना० लि० पृ० २३१ श्लोकः १४) । साहचर्य्याद्वितस्तिः पुंसि । स्त्रियामिति सुभूतिः । तेन पुंस्त्रियोर्वितस्तिः । 'ततोऽङ्गुष्ठकनिष्ठाभ्यां वितस्तिर्द्वादशाङ्गुलः ।' इति—(प० र० मा० पृ० ७२ प० २) । कुटिः, कुटी=गृहम् । 'वासः, कुटी द्वयोः, शाला' इति—(अम० ना० लि० पृ० ११८ श्लोकः ६) । 'स्त्रीपुंसयोर्गृहे । कुटी स्यात्कुम्भदास्यां च मु(सु)रायां चित्रगुच्छके ।' इति च—(मे० पृ० ३४ श्लोकः ७) । अयं त्रुटिः, इयं त्रुटिः=कालपरिमाणम् । 'स (कालः) सूक्ष्मः स्त्री तुटिस्त्रुटिः ।' इति—(वै० पृ० २१ श्लोकः ५२) । 'त्रुटिः संशयलेशयोः । सूक्ष्मैलायां कालमाने' इति—(अने० स० पृ० ६ श्लोकः ६२) । 'द्वयोर्निमेषयोः' इति च—(श० चिं० पृ० ११३६ स्तं० १ पं० २७) । अयं ऊर्मिः, इयं ऊर्मिः ऊर्मी=तरङ्गः, वीचिः । 'ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसङ्कोचरेखायामुत्कण्ठापीडयोरपि ।' इति—(मे० पृ० १०८ श्लोकः ३) । अयं शमिः, इयं शमी=वृक्षविशेषः, शिम्बा च । "छिमि" इति लोके । 'शमी सक्तुफलायां च शिम्बिकायां च वल्गुलौ ।' इति—(मे० पृ० ११० श्लोकः ३१) । ('शिम्बा', 'शिमिः', 'शिम्बि' इत्यपि–)—इति च स्वामी । अयं रत्निः, इयं रत्निः=बद्धमुष्टिकरः । 'मुष्ट्या तु बद्धया । स रत्निः स्यात्' इति—(अम० ना० लि० पृ० २३२ श्लोकः ८६) । 'रत्न्यरत्नी स्त्रियौ बद्धमुष्टिततताङ्गुली' इत्यमरमाला' इति—(अम० सु० व्या० पृ० २३२ स्तं० २ पं० ११) । 'स रत्निर्विस्तृताङ्गुलिः ।' इति च—(प० र० मा० पृ० ७२ पं० १) । अयं अरत्निः, इयं अरत्निः=अरत्निहस्तः, निर्गता कनिष्ठा यस्मात्तेन मुष्टिनोपलक्षितः, सप्रकोष्ठतताङ्गुलिकरः, विस्तृतकनिष्ठबद्धमुष्टिहस्तपरिमाणम्, कफोणिश्च । 'बद्धमुष्टिकरो रत्निः सोऽरत्निः प्रसृताङ्गुलिः ।' इति कोशान्तरम्' इति—(श० चिं० पृ० १६३ स्तं० २ पं० २७-८) । 'अरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥' इति–(अम० ना० लि० पृ० २३२ श्लोकः ८६) । 'अरत्निर्ना सप्रकोष्ठतताङ्गुलिकरेऽपि च ।' कफोणावपि इति—(मे० पृ० ८५ श्लोकः ३४) । 'नाऽरत्निः कफोणौ हस्ते सप्रकोष्ठे चाङ्गुलौ' इति रुद्र' इति च–(अम० सु० व्या० पृ० २३२ स्तं० २ पं० १४-५) । अयं अवीचिः, इयं अवीचिः=अतरङ्गः, तरङ्गशून्यम्, नरकान्तरं च । 'तद्भेदास्तपना वीचिमहारौरवरौरवाः ।।' इति–(अम० ना० लि०

पृ० ९१ श्लोक १) । 'अवीचिस्त्वतरङ्गे नरकान्तरे।' इति–(अने० स० पृ० ६० श्लोक १३६) । अतरङ्गे कल्लोलरहिते यथा––'अवीचिर्निर्वाते सरससरसीवेयमबला' इत्यादौ वाच्यलिङ्ग । इत्यनेकार्थकैरवाकरकौमुदी। नरके तु तपनसाहचर्य्यात्पुलिङ्ग. । 'अवीचि गाहन्ते हुतवहशिखा–पूरितमपि' इति शिल्पलेख ' तथा 'सर्वधर स्वामी पञ्जिका च' इति मुकुट ' इति––(अम० सु० व्या० टि० पृ० ९१ स्त० १ प० ३४ त. ३८ या०)। 'नास्ति वीचि सुखमत्र। 'अवीचिर्नरकान्तरे।' इति––(श० र० स० पृ० ७२ प० १०) । अयं कवि =शुक्र , पण्डितश्च । इयं कवि·, कविका, कवी =खलीनम् । "लगाम" इति लोके । 'कविर्वाल्मीकिकाव्ययो: । सूरौ काव्यकरे पुंसि, स्यात्खलीने तु योषिति ।' इति—(मे० पृ० १५७ श्लोक. ४)। अयं अणि , इय अणि· = अक्षाग्रकीलिका। अय आणि , इयं आणि =अक्षाग्रकीलिका, अश्रि सीमा च । 'अणिराणिवदक्षाग्रकीलाश्रिसीमसु द्वयो ।' इति–(मे० पृ० ४५ श्लोक २) । अय श्रेणि , इय श्रेणि:= पङ्क्ति , तुल्यशिल्पिसमुदायश्च। 'श्रेणि: स्त्रीपुंसयो· पङ्क्तौ समानशिल्पिसंहतौ ।' इति–(मे० पृ० ४७ श्लोक. ३१) । अयं श्रोणि., इय श्रोणी=कटी । 'अथ कट· कटि: । श्रोणि: कलत्र कटीर काञ्चीपद ककुद्मती ।।' इति—(अभि० स० अभि० चिं० पृ० २६ श्लोक ६०७) । 'श्रोणी कथिताऽवयवान्तरे ।' इति—(श० र० स० पृ० १०८ पं० ४) । अयं अरणि., इय अरणि: = काष्ठविशेष·, अग्न्युत्पत्तिकारणम् । 'अरणिर्वह्निमन्थे ना, द्वयोनिर्मन्थ्यदारुणि ।' इति—(मे० पृ० ४७ श्लोक· ३४) । अयं पार्ष्णि:, इयं पार्ष्णि =गुल्फयोरध:प्रदेश., पादमूलम्, पादग्रन्थ्यधरम् सैन्यपृष्ठ च । 'पार्ष्णि: स्यादुन्मदस्त्रियाम् । स्त्रियां, द्वयो: सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च ।' इति—(मे० पृ० ४६ श्लोक· २०) । 'पार्ष्णि. स्त्रीपुंसयो· पादमूले स्याद् ध्वजिनीकटौ ।' इति च रन्तिदेव:' इति—(अम० सु० व्या० पृ० २२७ श्लोक. ७२) । शलि:, शली = श्वाविद् । "साही" "सेही" इति च लोके । 'शल्योऽन्य श्वाविदित्युक्त: शली च शलली च स. ।' इति—(रा० नि० पृ० ४०३ श्लोक. ३) । शलू(ल्य)क: शलली शली ।' इति च (प० र० मा० पृ० ३७ प० २०)। अय शाल्मलि:, इय शाल्मलि:=वृक्षविशेष· । "सेंबर" इति लोके । द्वीपविशेषश्च। 'शाल्मलिस्तरुभेदे स्याद् द्वीपभेदेऽपि च द्वयो ।' इति—(मे० पृ० १५५ श्लोक: १३८) । 'पिच्छिला पूरणी मोचा स्थिरायु: शाल्मलिर्द्वयो: ।।' इति—(अम० ना० लिं० पृ० १४४ श्लोक ४६) 'स्थिरायु '—'षष्टिवर्षसहस्राणि वने तिष्ठ(जीव) ति शाल्मलि ।' इति—(श० चिं० पृ० ५५० स्त० २ प० ५) । अयं यष्टि:, इयं यष्टि:––हारलता, भार्गी, मधुका, शस्त्रभेदश्च। 'यष्टि. पुंसि स्याद् भुजदण्डके। द्वयोर्हारलताभार्ग्योर्मधुकाशस्त्रभेदयो: ।। 'इति—(मे० पृ० ३५ श्लोक: २५) । अय मुष्टि· , इयं मुष्टि = बद्धकर·, अङ्गुलीना सङ्कोच: । "मुट्ठी" इति लोके । अयं योनि:, इय योनि योनी =उत्पत्तिस्थानम्, जन्मवर्त्म, आकर:, कारणम्, तोयं च । 'योनि: स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे ।' इति—(मे० पृ० ८३ श्लोक १६) ।

अयं मुनिः = मौनव्रती, तपस्वी । इय मुनि = तपस्विनी । 'मुनि पुसि वसिष्ठादौ वङ्गसेनतरौ जिन्ते ।' इति—(मे० नृ० ८३ श्लोक १५) । 'वाच यमो मुनि. ।' इति—(अम० ना० लि० पृ० २६२ श्लोक. ४२) । अय स्वाति., इय स्वाति. स्वाती = नक्षत्रविशेष, पञ्चदशनक्षत्रम् । अय गव्यूति·, इय गव्यूति = क्रोशयुगम्, क्रोशद्वयम्, द्विसहस्त्रधनु, गोरुतम् । 'धन्वन्तरसहस्त्र तु क्रोश:, क्रोशद्वयं पुन. । गव्यूत, स्त्री तु गव्यूतिर्गोरुत गोमत च तत् ।' इति वाचस्पति· । 'धनुर्हस्तचतुष्टयम् ।' 'द्वाभ्यां धनु सहस्त्राभ्या गव्यूति· पुसि भाषित: ।' इति च शब्दार्णव ' इति—(अम० सु० व्या० पृ० ११५-६ स्त० १ प० १, २, ३) । अय बस्ति·, इय बस्ति = नाभ्यधोभाग, नाभिलिङ्गयोरन्तरम्, गुद च । 'बस्तिर्नाभेरधो द्वयो ।।' इति—(अम० ना० लि० पृ० २२७ श्लोक. ७३) । 'बस्तिर्द्वयोर्निरूहे नाभ्यधो, भूम्नि दशासु च ।' इति—(मे० पृ० ५८ श्लोक: ५५) । 'बस्तयो द्वयोरिति च गुदमिति दुर्गाहणो' इति—(दु० लि० पृ० ५६ प० ९) । 'मूत्राशयपुटे बस्ति ' इति—(प० र० मा० पृ० ४४ प० १७) । आशयश्च पुट च । मूत्राशयपुटे मूत्राशय· मूत्रपुटम्, इत्यर्थ । 'नाभेरधो मूत्रपुट बस्तिर्मूत्राशयोऽपि च' इति च हैमीयनाममाला' इति—(अम० सु० व्या० टि० पृ० २२७ स्त० २ पं० ४०-१-२) । अय मेथि., इय मेथि = मेधिकाष्ठम्, खलेवाली, खले पशुबन्धनार्थकाष्ठम् । इयं मेथी = गन्धबीजा । "मेथी"ति प्रसिद्धशाकम् । अय मेधि:, इय मेधि: = खलेवाली, खले पशुबन्धनायारोपितकाष्ठम्, धान्यखले पशुबन्धनस्तम्भ: । 'पुसि मेधि: खले दारु न्यस्त यत्पशुबन्धने ।' इति—(अम० ना० लिं० पृ० ३०६ श्लोक: १५) । मेध्यन्ते पशवोऽत्र । स्वामी तु—'मेथि इति पठति । अय मशि. मषि: मसि, इयं मशी मषी मसी = कज्जलम्, मेला, पत्राञ्जनम्, लिपिसाधनविशेष., लिपिप्रयोजना । "स्याही" इति लोके । 'मेला मसीजल पत्राञ्जन च स्यान्मसिर्द्वयो: ।' इति—(त्रि० शे० पृ० २९८ श्लोक. २७) 'वर्णिका मसी ।। मसिर्ना' इति—(त्रि० शे० पृ० २७२ श्लोक ३, ४) । 'मेला पत्राञ्जनं मसि ।।' इति—(हा० व० पृ० ४०६ श्लोक: १२) । मूर्धन्योपधोऽपि—'मलिनाम्बु मषी मसी ।' इति च—(अभि० स० अभि० चि० पृ० २२ श्लोक: ४८४)। अयं इषुधि., इय इषुधि. = शराधार:, शराणा स्थानम् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयो: ।।' इति—(अम० ना० लि० पृ० २६३ श्लोक: ८८) । अयं इषु, इय इषु = बाण·, शर: । 'पत्री रोप, इषुर्द्वयो· ।' इति—(अम० ना० लिं० पृ० २६२ श्लोक: ८७) । अय ऋष्टि:, इय ऋष्टि. = खड्ग ., तरवारी । "तलवार" इति लोके । 'ऋष्टि· खड्गस्तरवारि·, इति—(त्रि० शे० पृ० ३०० श्लोक ५४) । अयं पाटलि, इयं पाटलि· = वृक्षविशेष. पाटला "पाडली" इति लोके । 'अथ द्वयो: । पाटलि , पाटलामोघा काचस्थाली फलेरुहा ।।' इति—(अम० ना० लिं० पृ० १४६ श्लोक ५४) । 'अलिप्रिया विशालाग्राम्यमोघा पाटलिर्द्वयो: ।' इति च वाचस्पति:' इति—(अम० सु० व्या० पृ० १४६

स्त० २ प० २५)। अय जाटलि: झाटलि, इयं जाटलि झाटलि:=वृक्षविशेष । किशुक-वृक्षसदृश.। "मोखा" इति प्रसिद्ध । अयं पृश्नि:, इय पृश्नि:=अल्पतनु, रश्मिश्च। 'पृश्नि: किरातोऽल्पतनु' इति-(वै० पृ० २०१ श्लोक ५)। अय तिथि, इय तिथि तिथी=प्रतिपदादि-पञ्चदश, सामान्यतिथि ।'तदाद्यास्तिथयो द्वयो ।।' इति—(अम० ना० लिं० पृ० ४३ श्लोक: १)। दिन च' इति दुर्ग । अय अशनि, इय अशनि.=वज्रम्, विद्युच्च । 'अशनि: स्त्री-पुसयो स्याच्चञ्चलाया पवावपि ।' इति—(मे० पृ० ८५ श्लोक: ३३)। अय मणि, इयं मणि =रत्नम्, अश्मजाति, मुक्तादिकं च। 'मणि स्त्रीपुसयोरश्मजातौ मुक्तादिकेऽपि च ।' इति—(मे० पृ० ४६ श्लोक २३)। अय शृणि सृणि, इयं शृणि: सृणि.=अङ्कुशाऽस्त्रम्, शत्रुश्च । 'अङ्कुशोऽस्त्री, सृणिर्न षण् ।' इति—(वै० पृ० १११ श्लोक: ८४)। अमरस्तु सृणि स्त्रियामित्याह—'अङ्कुशोऽस्त्री सृणि स्त्रियाम् ।।' इति—(अम० ना० लिं० पृ० २७९ श्लोक ४१)। 'स्त्रियाम्' इत्येकदेशेन स्त्रीपुंसशब्दसमुदायो लक्ष्यते। तेन सृणे: पुंस्व-मपि' इति सुभूत्यादय। स्त्रियामिति प्रायिकत्वादुक्तम्, इति तु वयम्--इति मुकुट:' इति--(अम० सु० व्या० टि० पृ० २७६ स्तं० १ प० ३९ तः)। 'शृणि'रित्यपि । 'शृणिरङ्कुश-वाची च काशश्च तृणवाचक: ।' इति शकारभेद' इति-(अम० सु० व्या० पृ० २७९ स्तं० १ प० १३)। अय मौलि:, इय मौलि.=चूडा, मुकुटं च। 'मौलि: किरीटे धम्मिल्ले चूडा-यामनपुसकम् ।' इति--(मे० पृ० १४८ श्लोक. ४६)। अय केलि:, इय केलि: केली= क्रीडा, परीहास, पृथ्वी च । 'द्रवकेलिपरीहासा. क्रीडा खेला च नर्म च ।।' इति—(अम० ना० लिं० पृ० ८४ श्लोक: ३२)। केलि: पुसि । भिन्नलिङ्गाना द्वन्द्वाभावात्। 'केली' इति स्त्रियामपि । 'केलीषु तद्गाढ्दानगुणान्निपीय ।' इति नैषधात्—इति मुकुट: । अयं हलि:= महद्धलम् । इय हली=कलिकारी । 'हलिर्बृंहद्धले' इति--(त्रि शे० पृ० ३०१ श्लोक: २)। 'दीप्ता विशल्याऽग्निमुखी हली नक्तेन्दुपुष्पिका ।।' इति--(रा० नि० पृ० १३६ श्लोक: १७)। अयं-मरीचि, इयं मरीचि =किरण:, रश्मि:।'मरीचिर्मुनिभेदे ना, गभस्तावनपुंसकम् ।' इति—(मे० पृ० २८ श्लोक १६)। 'स्त्रीपुंसाधिकारे-त्रुटिमसिमरीचय ।' इति लिङ्गानु-शासनम् । 'द्वयोर्मरीचि, किरणो भानुरुस्र: कर., पदम् ।' इति शब्दार्णव: ।' इति--(अम० सु० व्या० पृ० ४२ स्तं० २ पं० ३६-७-८)। अयं हनु, इय हनु:=कपोलावयव: । 'हनु-र्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयो: कपोलावयवे' इति--(मे० पृ० ८४ श्लोक: २५)। अयं आखु:, इयं आखु:=मूषिक:, सूकरश्च। 'आखु: स्यान्मूषके' इति—(श० र० स० पृ० ५३ प० १०)। 'आखू सूकरमूषिकौ ।' इति च-(वै० पृ० २१४ श्लोक: ७)। अयं कर्कन्धु, इयं-कर्कन्धू=बदरी। "बेर" इति लोके । 'अथ द्वयो: । कर्कन्धूर्बदरी कोली' इति(—अम० ना० लिं० पृ० १४० श्लोक: ३६)। अयं सिन्धु:=समुद्र: । इयं सिन्धु:

=नदी । 'सिन्धुर्वमथुदेशाब्धिनदे ना, सरिति स्त्रियाम् ।' इति—(मे० पृ० ८० श्लोकः २५) । अयं मृत्युः, इयं मृत्युः=प्राणवियोगः, मरणम्, यमश्च । 'अन्तो नाशो द्वयोर्मृत्युः' इति—(अम० ना० लिं० पृ० ३०१ श्लोकः ११६) । 'मृत्युर्ना मरणे यमे ।' इति—(मे० पृ० ११६ श्लोकः ४६) । अयं मनुः=प्रजापतिः, स्वायंभुवादिः मन्त्रो वा । इयं मनुः=प्रजापतिपत्नी, ओषधिविशेषः, स्पृक्का च । 'स्पृक्का च देवी पिशुना वधूश्च कोटिर्मनुर्ब्राह्मणिका सुगन्धा ।' इति—(रा० नि० पृ० १०८ श्लोकः ११३) । अयं अवटुः, इयं अवटुः=घाटा, ग्रीवापश्चाद्भागः । 'पिण्डारे त्ववटो' इति ।' घाटाऽप्यवटुरक्लीबे' इति च—(वै० पृ० १८० श्लोक ८५) । अयं एर्वारुः, इयं एर्वारुः=कर्कटी । "काकड़ी" इति लोके । आङि एर्वारुः । 'स्यादेर्वारुस्तु कर्कटी ।' इति—(रा० नि० पृ० ४२२ श्लोक २१) । 'स्वार्थे कः' । एर्वारुकम् =कर्कटी । 'एर्वारुकं कर्कटिका' इति—(प० र० मा० पृ० ३४ प० ९) । इर्वारुः=कर्कटी । 'उन्मत्तो धुस्तुरिर्वारुः कर्कटिः स्यात्' इति पुस्काण्डे रत्नकोषः । दीर्घादिरपि—ईर्वारुः=कर्कटी । 'तुर्यस्वरादिरीर्वारुः कर्कट्या कथ्यते बुधै'रिति । 'स्मृता वालुकिरीर्वारु'रिति हारावली' इति—(सि० कौ० टी० पृ० ९२ पं० ११-२-३) । अमरोऽपि—'ईर्वारुः कर्कटी स्त्रियौ ॥' इति—(अम० ना० लिं० पृ० १८० श्लोक १५५) । उर्वारुः=कर्कटी । 'उर्वारुः कर्कटी प्रोक्ता व्यालपत्रा च लोमशा ।' इति धन्वन्तरिः । उर्वारुकम्=कर्कटी । 'उर्वारुकं पित्तहरं सुशीतलम्' इति धन्वन्तरिः' इति—(रा० नि० पृ० ४१ श्लोकः १७६-७) । 'उर्वारुकमिव बन्धनात्' इति च श्रुतिः' इति—(अम० सु० व्या० पृ० १८० स्त० २ पं० २४) । अयं ऊरुः, इयं ऊरुः=जंघा, जानूपरिभागः । 'ऊरुस्त्ववयवान्तरे ।' इति—(श० र० स० पृ० २५१ पं० १४) । 'सक्थि क्लीबे, पुमानूरुः' इति—(अम० ना० लि० पृ० २२७ श्लोकः ७३) । यादवस्तु विकल्पेन पुस्त्वमाह-'सक्थि क्लीबं, पुमान्वोरुः' इति च—(वै० पृ० १७७ श्लोकः ५९) । पक्षे स्त्री । ऊरोरुपरिभागः सक्थीति क्वचिद्भेदो दृश्यते । अयं कन्दुः, इयं कन्दुः=भर्जनपात्रम्, स्वेदनी । "कडाही" इति लोके । 'ना कन्दुर्वा, स्वेदनी स्त्रियाम् ।' इति—(अम० ना० लि० पृ० ३१२ श्लोक ३०) । कन्दुर्वा ना विकल्पेन पुमान्, पक्षे स्त्री । अयं काकुः, इयं काकुः=वक्रोक्तिः, जिह्वा च । 'उल्लापः काकुवाक्' इति । काकुर्ध्वनिविकारः स्यात्' इति च- (अभि० स० अभि० चि० पृ० १५ श्लोकः २७५) । 'काकुस्तु जिह्वा' इति—(त्रि० शे० पृ० २९२ श्लोकः ३१) । 'काकुः स्त्री भिन्नकण्ठोत्थ शोककोपादिवैकृतात् ।' इति—(वै० पृ० ३१ श्लोकः ७) । राघवस्तु वाच्यलिङ्गत्वमाह—'त्रिलिङ्गे काकुशब्दस्तु ध्वनिवैरूप्यसम्भवे । गायकानां कण्ठदोषे, कच्चिदर्थेऽव्ययं पुनः ॥' इति—(ना० मं० पृ० ३ प० १७) । अयं किष्कुः, इयं किष्कुः=वितस्तिः, सप्रकोष्ठहस्तश्च । 'किष्कुर्द्वयोर्वितस्तौ च सप्रकोष्ठकरेऽपि च ।' इति—(मे० पृ० ३ श्लोकः२३)। अयं बाहुः, इयं बाहुः

=कक्षादङ्गुल्यग्रपर्यन्तावयवविशेष, भुज। "बांह" इति लोके। 'द्वौ परौ द्वयो। भुजबाहू प्रवेष्टो दो' इति–(अम० ना० लि० पृ० २३० श्लोक ७९, ८०)। परौ द्वौ भुजबाहुशब्दौ स्त्रीपुंसयो। 'अय गवेधु, इयं गवेधु=तृणधान्यविशेष, आरण्यगोधूमाख्यमुत्पन्नम्। 'स्त्री गवेधुर्गवेधुका।' इति। 'गवेडु'रित्यपि।' इति–(अम० ना० लि० पृ० ३१० श्लोक. २५)। अयं रा, इय रा = धनम्, स्वर्णम्, जलद, शब्दश्च। 'रास्तु द्वयोर्धने स्वर्णे' इति––(ना० रा० मा० पृ० ८ प० १३)। अय गौ =बलीवर्द। इय गौ =सौरभेयी, सुरभि.। 'गौ. स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च।' इति––(मे० पृ० २१ श्लोकः १)। अय म.=शिव। इय मा=लक्ष्मी। 'मो यमे समयेऽपि स्याद्विषे च मधुसूदने। मा स्त्री पद्मालयाया, स्यात् पुलिङ्गश्चन्द्रशेखरे॥' इति––(मे० पृ० १०८ श्लोक १)।

पुरुषोत्तमोऽपि सक्षेपतः पुस्त्रीलिङ्गवाचकशब्दानाह––(त्रि० शे० पृ० ३९२-३ श्लोक १५, १६, १७, १८)।

अथ स्त्रीपुंसयोः केलि–र्मणि–र्योनि–र्मसि–र्मुनिः।
मरीचिः शाल्मलिः स्वातिः श्रेणि–र्मुष्टि–स्तिथिः सृणिः॥
ऊर्मि–र्गभस्ति–रशनी रै–पार्ष्णी–षुधि–राशयः।
बस्तिश्च किष्कुः कन्दुश्च रेणु–तन्वि–षु–बाहवः॥
गण्डूष–गर्ज–जागर–भुज–कील–ज्वाल–वर्त्तक–व्रीडाः।
उत्कण्ठ–सट–वराटक–रभसाः स्त्रीत्वे तु आबन्ताः॥
शल्लको वृश्चिकः कीटः शार–स्तूणो घटः कटः।
शफरो वेतस–श्चामी स्त्रियां ङ्यन्ताः प्रकीर्तिताः॥इति॥

एषा व्याख्या––

अथेति। अथानन्तरम्। 'स्त्रीपुंसयोः' इत्यधिकारः। एते केल्यादयः शृणिपर्य्यन्ताः शब्दाः स्त्रीपुंसयो स्युः। ऊर्मिरिति। एते ऊर्म्यादयो बाहुपर्य्यन्ता शब्दाः स्त्रीपुंसयो स्युः। अयं गभस्तिः= किरण, सूर्यश्च। इय गभस्ति =स्वाहा। 'गभस्तिः किरणे सूर्ये, स्वाहायां तु योषिति।' इति–– (मे० पृ० ६२ श्लोकः १०७)। 'गभस्तिः किरणे रवौ।' इति च––(ना० र० मा० पृ० ७९ प० १०)। अयं राशिः, इयं राशिः=मेषादयः, पुञ्जश्च। 'द्वौ राशी पुञ्जमेषाद्यौ, इति––(अम० ना० लि० पृ० ४३४ श्लोकः २१४)। 'राशिर्मेषादिपुञ्जयोः।' इति च––(मे० पृ० १६३ श्लोकः १२)। अयं रेणुः, इयं रेणुः=रजः, धूलि। 'रेणुर्द्वयोः, स्त्रियां धूलिः' इति––(अम० ना०

लि० पृ० २९६ श्लोक ९८) । 'रेणु स्त्रीपुंसयोर्धूलौ, पुलिङ्ग' पर्पटे पुन ।' इति च—(मे० पृ० ४६ श्लोक २५) । अय तनु, इय तनु = शरीरम्, त्वक् । 'तनुर्वपुस्त्वचो: । विरलेऽल्पे कृशे' इति—(अने० स० पृ० २३ श्लोक: २७०) । 'तनु. काये त्वचि स्त्री, स्यात्त्रिष्वल्पे विरले कृशे ।' इति—(मे० पृ० ८३ श्लोक ९) । अर्तीत्यादिना उसि 'तनु' सान्तापि । प्रयोगश्च—'तनुषे तनुषे कम्' इति वासवदत्तायमकात्–इति मुकुट । 'प्राणिजाते' इत्यूङ् । ऊङि 'तनू.' तथा च प्रयोग — 'वरतनु ! सम्प्रवदन्ति कुक्कुटा' इति भारवि, इति—मुकुट:' ।। क्षेमेन्द्रेण तु औचित्यवचारचर्चायां यथा कुमारदासस्य 'अयि विजहीहि दृढोपगूहन, त्यज नवसङ्गमभीरु वल्लभम् । अरुणकरोद्गम एष वर्त्तते, वरतनु ! सम्प्रवदन्ति कुक्कुटा ।।' इत्युक्तम् ।' इति—(अम० सु० व्या० टि० पृ० २२६ स्तं० २ प० ३८ त ४२ या०) । गण्डूषेति । एते गण्डूषादयो रभसान्ता. शब्दा. पुंस्त्रियो. स्यु । अय गर्ज, इय गर्जा = ध्वनिविशेष', मेघनाद, मत्तकरी च । 'कूजन कूजित गर्जा न क्लीबे, गर्जना न ना ।' इति—(वै० पृ० ३१ श्लोक. ३) । 'स्तम्बेरमो गजो गर्ज.' इति च–(वै० १०९ श्लोक. ६०)। अय जागरा:, इय जागरा = जागरणम्, निद्राभाव., कवचश्च । 'जागर्या जागरा द्वयो: ।' इति–(अम० ना० लि० पृ० ३९२ श्लोक. १६) । अयं ज्वाल:, इय ज्वाला = अग्निशिखा, दग्धान्नम्, दाहश्च । 'वह्नेर्द्वयोर्ज्वालकीलौ' इति—(अम० ना० लि० पृ० २४ श्लोक: ५७) । अय वर्त्तक. = पक्षिविशेष:, अश्वखुरश्च । 'खुरेऽप्यश्वस्य वर्त्तक: ।' इति—(अम० ना० लि० पृ० ३९८ श्लोक: ११) । इय वर्त्तिका = पक्षिविशेष., वर्त्तकस्य स्त्री । 'वर्त्तकस्तु खुरेऽश्वस्य, विहगे वर्त्तिका द्वयो: ।' इति—(मे० पृ० १३ श्लोक: १५४) । अयं व्रीड:, इय व्रीडा = लज्जा । 'मन्दाक्ष ह्रीस्त्रपा व्रीडा लज्जा' इति—(अम० ना० लि० पृ० ७९ श्लोक: २३) 'व्रीडोऽक्लीबे त्रपा लज्जा, इति च रभस.' इति—(अम० सु० व्या० पृ० स्त० २ प० ३०) । रभसस्त्विह विशेषमाह—'गण्डूषगर्जभुजजागरहारकीलज्वालाज्झटारभस-वर्त्तकमर्द्धश्रृङ्गा: । व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठबाणकरकाश्वसमासनाश्च ।' इति—(अम० ना० सु० व्या० पृ० ७९ स्त० २ प० २८, २९, ३०) । अय हार = मुक्तासर:, मुक्तावली, मुक्तामाला, संग्रामश्च । इय हारा = मुक्तावली, कपिलद्राक्षा । 'हारो मुक्तावली युधि ।।' इति० (मे० पृ० १३० श्लोक १००) । 'हारा मुक्तावली हार:' इति च रभस:' इति—(अम० सु० व्या० पृ० २३९ स्तं० १ प० २५) 'अयं अज्झट, इयं अज्झटा = ओषधिविशेष:, भूम्यामलकी, वितुन्नक. । 'अथ वितुन्नक: ।। झटाऽमलाऽज्झटा ताली' इति—(अम० ना० लिं० पृ० १७१ श्लोक: १२६-७) । अय गर्द्ध', इय गर्द्धा = स्पृहा, अभिलाषातिशय:, इच्छा च । "कामना" इति लोके । अयं श्रृङ्ग: = कूर्चशीर्षकवृक्ष', जीवकौषधि:, मुनिविशेषश्च । इयं श्रृङ्गि:, श्रृङ्गी = मत्स्यविशेष:, मद्गुरस्य प्रिया । "सींगी मच्छी" इति लोके । विषा, अतिविषा, कुण्डलादिभूषणानां स्वर्णम्, ऋषभौषधिश्च । 'श्रृङ्ग स्यात्कूर्चशीर्षके । स्त्री विषायां स्वर्ण-

मीनभेदयोर्ऋषभौषधौ ।' इति—(मे० पृ० २३ श्लोक· २५-६) । अयं वरटः=हस । वरटा, वरटी=हंसी, हंसस्य स्त्री, गन्धोली च । "वरडे" इति लोके । 'वरटा द्वयोर्वरटयां स्त्री हंस्यां तु तत्पतौ पुमान् ।' इति—(मे० पृ० ३७ श्लोक. ५०) । 'वरटी' अपि । 'वरटा वरटीहस्योस्तत्पतौ वरट स्मृत ।' इति तारपाल.' इति—(अम० सु० व्या० पृ० १९७ स्त० २ प० ११-२) । 'गन्धोली वरटा द्वयो· ॥' इति च—(अम० ना० लिं० पृ० १६७ श्लोकः २७) । अय उत्कण्ठ·=गण्डकुसुमम्, सञ्जातमदो हस्ती । 'उत्कण्ठो गण्डकुसुमम्' इति—(हा० व० पृ० ४०४ श्लोकः ६१) । शृङ्गारस्य षोडशबन्धान्तर्गतबन्धविशेषश्च । आसन इति तस्य प्रसिद्धिः । तल्लक्षणम्—'नारीपादौ च हस्तेन धारयेद् गलके पुनः । स्तनार्पितकरः कामी बन्धश्चोत्कण्ठसंज्ञकः ।' इति—(श० चिं० पृ० ३३९ स्त० १ प० ५ तः १० या०) । इयं उत्कण्टा=उत्कलिका, इष्टलाभे कालक्षेपासहिष्णुता, आकांक्षाया च । 'उत्कण्ठा रुहरुहिका' इति । 'आकल्पक उत्कण्ठा' इति च—(त्रि० शे० पृ० २७३, श्लोकः ६ पृ० ३१२ श्लोकः २८) । कामादिजस्मृतिश्च । 'चिन्ता तु स्मृतिराध्यान स्मरणं सस्पृहे पुन· । उत्कण्ठोत्कलिके तस्मिन्, अभिध्या तूभयोरपि ।' इति च शब्दार्णव.' इति—(अम० सु० व्या० पृ० ८२ स्तं० १ पं० ३, ४, ५) । अयं करकः, इय करका=वर्षोपलः, मेघोपलः । "ओला" इति लोके । 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले, न स्त्री करङ्के च कमण्डलौ ।' इति—(मे० पृ० ५ श्लोकः ५४) । अश्व·=घोटक· । "घोड़ा" इति लोके । अश्वा=वडवा । "घोडी" इति लोके । 'अश्वः पुंजातिभेदे च तुरगे च पुमानयम् ।' इति—(मे० पृ० १५७ श्लोक· ३) । 'अश्वस्तुरङ्गस्तुरग' इति—(वै० पृ० १११ श्लोकः ६०) । 'वाम्यश्वावडवार्वनी ।' इति—(वै० पृ० ११२ श्लोकः १०७) । सम =विष्णुः, राशीनां संज्ञाविशेष·, मानस्य प्रकारविशेषश्च । समा=सँव्वत्सर., अलङ्कारविशेषश्च । 'समा सॅव्वत्सरे स्त्रियाम् ।' इति—(मे० पृ० ११० श्लोकः ३४) । आसनः=वृक्षविशेषः, जीवकद्रुमः । 'आसनो जीवकद्रुमे ।' इति—(मे० पृ० ८५ श्लोकः ३७) । आसना=स्थितिः । 'स्यादास्या त्वासना स्थितिः ॥' इति—(अम० ना० लिं० पृ० ३६२ श्लोकः २१) । 'आसनी' अपि । 'आसनी विपणौ स्थित्याम्' इति—(मे० पृ० ८५ श्लोकः ३७) । शेषशब्दानां व्याख्योदाहरणानि तु पूर्ववद् बोध्यानि । इमे गण्डूषादयः शब्दा· स्त्रीत्वे स्त्रीलिङ्गभावे तु टाबन्ताः टाप्प्रत्ययान्ता एवेति ज्ञेयाः । न तु ङ्यन्ता इत्यर्थ· । शल्लक इति । एते शल्लकादयो वेतसान्ता. शब्दाः पुंस्त्रीलिङ्गा भवन्ति । शल्लक. 'सल्लक' इत्यपि । तूणः=बाणाधारः, स्वनामख्यात इषुधिः । तूणा=शराधारः । 'स्त्रियां तूणेषुधी उपासङ्गः' इति रत्नकोषः' इति—(अम० सु० व्या० पृ० २६३ स्तं० १ पं० ३८) । गौरादित्वात् ङीष्यपि । तूणी=नीली, निषङ्ग·, शराधारश्च । 'तूणी नील्यां, निषङ्गे वा ना' इति—(मे० पृ० ४६ श्लोकः १६) । 'तूणी तु नील्यां, तूणो

निषङ्गके ।' इति च—(वि० प्र० पृ० ४६ श्लोक २५) । शेषशब्दानां व्याख्यादयस्तु पूर्ववज्ज्ञेयाः । अमी शल्लकादय शब्दाः स्त्रिया स्त्रीलिङ्गे ङ्यन्ता ङीप्प्रत्ययान्ताः प्रकीर्तिताः कथिताः। न टाप्प्रत्ययान्ता इत्यर्थ.। तथा चामर.—(अम० ना० लिं० पृ० ४६१ श्लोक. ३७, ३८) ।

> स्त्रीपुंसयो–रपत्यान्ता द्वि–चतुः—षट्पदो–रगाः ।
> जातिभेदाः पुमाख्या–श्च स्त्रीयोगैः सह मल्लकः ।।
> ऊर्मि–र्वराटकः स्वाति–र्वर्णको झाटलि–र्मनुः ।
> मूषा सूपाटी कर्कन्धू–र्यष्टिः शाटी कटी कुटी ।।' इति ।।

अनयोर्व्याख्या—

स्त्रीति । ऊर्मिरिति च । 'स्त्रीपुसयो' इत्यधिकारः। अपत्यार्थे विहिता येऽणादयस्तदन्ताः सर्वे स्त्रीपुसयो स्युः । यथा—उपगो. अपत्य पुमान् औपगव । उपगो. अपत्य स्त्री औपगवी । विदेहस्य अपत्य पुमान् वैदेह =जनकात्मज । विदेहस्य अपत्यं स्त्री वैदेही=जनकात्मजा, जानकी। गर्गस्य अपत्यं पुमान् गार्ग्यः =गर्गात्मजः। गर्गस्यापत्यं स्त्री गार्गी =गर्गात्मजा। द्विचतुःषट्पदोरगाः। द्विपद-चतुष्पद-षट्पदवाचिन., उरगवाचिनश्च जाति (भेदा.)विशेषा. स्त्रीपुंसयोः स्यु । तत्र द्विपदजातिभेदो यथा—मानुष. पुमान्, मानुषी स्त्री । ब्राह्मण. पुमान्, ब्राह्मणी स्त्री । विप्रः पुमान्, विप्रा स्त्री । क्षत्रियः पुमान्, क्षत्रिया स्त्री । वैश्यः पुमान्, वैश्या स्त्री । शूद्रः पुमान्, शूद्रा स्त्री । अजादित्वात् टाप् । 'शूद्रा चामहत्पूर्वा जातिः' (वा० ४।१।४) इत्यनेन टाप् बोध्यः । बकः, बकी=पक्षिविशेषः। "बगुला" "बगुली" इति च लोके। हस, हंसी=पक्षिविशेषः। मयूर, मयूरी=पक्षिविशेषः। "मोर" इति लोके। सारसः, सारसी=पक्षिविशेष.। चतुष्पदभेदो यथा—मृगः, मृगी=वन्यपशुविशेष.। "मृग" इति लोके। हस्ती, हस्तिनी=वन्यपशुविशेषः। "हाथी" "हथिनी" इति च लोके। सिह, सिंही=वन्यपशुविशेषः। "शेर" सिहिनी" इति च लोके। हय., हयी=ग्राम्यपशुविशेषः। "घोड़ा" "घोड़ी" इति च लोके। गर्दभः, गर्दभी=ग्राम्यपशुविशेषः। "गधा" "गधी" इति च लोके। कूर्मः, कूर्मी=जलजन्तुविशेषः। "कछुवा" "कछुवी" इति च लोके। षट्पदभेदो यथा—मधुकरः, मधुकरी। भृङ्ग, भृङ्गी। भ्रमरः, भ्रमरी=सपक्षकीटविशेषः। "भौंरा" "भँवरी" इति च लोके। उरग., उरगी=सर्प.। "साँप" "साँपिन" इति च लोके। नाग., नागी=सर्पः, सर्पजातिविशेषश्च । 'जातेरस्त्रीविषयात्'—(४।१।६३) इति ङीष्। अबाधिता इत्येव। बाधिता इति किम् ? मक्षिका । 'वर्वणा मक्षिका नीला' इति । शिवा, 'स्त्रियां शिवा' इति । लूता, 'लूता स्त्री' इति। जातिवाचिनः स्त्रीपुंसयोः

स्युः । द्रुणः, द्रुणी = कीटविशेष. । "बिच्छू" इति लोके। मत्स्य, मत्स्यी = जलजन्तुविशेष । "मछली" इति लोके। केचित्तु षट्पदादिभिरस्यैकवाक्यता वदन्ति । पुमाख्या· (पुरुषाख्या) पुन्नामानि स्त्रीयोगै सह वर्तमाना स्त्रीपुसयो· स्यु । इन्द्र·, इन्द्राणी = देवराज, देवराज्ञी । ब्राह्मण: ब्राह्मणी = विप्र·, विप्रपत्नी। मातुर्भ्राता मातुल = "मामा" इति लोके । तस्य स्त्री मातुली = "मामी" इति लोके। पुंसि वर्त्तमानो मातुल· । स्त्रीयोगात् स्त्रीत्वेऽपि वर्त्तते। शूद्रस्य स्त्री शूद्री = शूद्राणी । वर्णक·, वर्णका = लेपनम् । ''उबटन" इति लोके। 'वर्णकश्चारणे, स्त्री तु चन्दने, च विलेपने । द्वयो,-र्नील्यादिषु स्त्री स्यादुत्कर्षे काञ्चनस्य च ।' इति—(मे० पृ० १३ श्लोक १५३) । रभसस्तु पुन्नपुसकत्वमाह—'विलेपने चन्दने च वर्णक पुन्नपुसकम् ।' इति—(अम० सु० व्या० पृ० ४६१ स्त० २ पं० १९, २०) । मूष, मूषा = तेजसावर्त्तनी, स्वर्णाद्यावर्त्तनपात्रम्, स्वर्णादिविलेपनभाण्डम्। ''घरिया" इति लोके। 'तेजसावर्त्तनी मूषा' इति--(अम० ना० लिं० पृ० ३४८ श्लोक ३३) । 'मूषा त्वावर्त्तनी मूषी' इति च शब्दार्णव' इति--(अम० सु० व्या० पृ० ३४८ स्त० २ प० २५-६) । शे० प्रा० ।

तथा च यादव --(वै० पृ० २९१ श्लोक २४-५-६-७) ।

स्त्रीप्राण्यर्थाः स्त्रियां, पुंसि पुंप्राण्यर्था, विना त्वि–ह ।
स्त्रीत्वेनो–क्तै–स्तथा–ऽपत्येऽणादि, ष्वुन्नादि शिल्पिनि ॥

अस्य व्याख्या—

स्त्रीति । इह तु स्त्रीत्वेन स्त्रीलिङ्गतया उक्तैः कथितैः विना स्त्रीप्राण्यर्था· स्त्रीप्राणि–वाचकाः शब्दाः स्त्रियां स्त्रीलिङ्गे स्यु. । एवं पुप्राण्यर्थाः पुरुषप्राणिवाचका शब्दा. पुसि पुलिङ्गे स्युः । तथा अपत्ये तोके तनयदुहित्रोरित्यर्थः । यत् अणादि अण्प्रत्ययप्रभृति, शिल्पिनि कारौ ष्वुन्नादि च तत्सर्वं स्त्रीपुसयो· स्यु. ।

"क्वचि-द्रश्मि–मयूखां–ऽशु–घृणि–घृष्णि–गभस्तयः ।
सृपाटी त्रिसरा सूर्मिः सुषुम्णा यष्टि–रिङ्गुदी ॥
कलम्बी शल्लकी मल्ली बरटा जाटलिः कुटी ।
शाटी रेणु–र्हरेणू–रु–जलूका–कोलि – धूलयः ॥
उत्कठा कङ्कती कन्दू–र्वितस्ति रयि–रञ्जलिः ।
कूपस्य च त्रिका व्रीडा प्रेंखोलिः फलकी कटी ॥"इति ।

एषा व्याख्या—

क्वचिदिति । कलम्बीति । उत्कण्ठेति च । रश्मिश्च मयूखश्च अंशुश्च घृणिश्च धृष्णिश्च गभस्तिश्चेतीतरेतरयोगो द्वन्द्व । एते रश्म्यादयो गभस्त्यन्ता रश्मिवाचकशब्दा. क्वचित् कदाचित् स्त्रीपुंसयो स्युः। अयं रश्मिः, इयं रश्मि =किरण. । इत्यादि। त्रिसरः, त्रिसरा = कृसरा। "खिचडी" इति लोके । 'तुल्यौ तिलान्ते कृसरत्रिसरौ ।' इति—(अभि० स० अभि० चि० पृ० १६ श्लोकः ३६८) । अय सूर्मि, इयं सूर्मि. सूर्मी. = लोहप्रतिमा । 'सूर्मी स्थूणाय प्रतिमा' इति—(अम० ना० लिं० पृ० ३४६ श्लोक ३५)। 'सूर्मिस्थूणान्यलोहजा ।' इति च—(वै० पृ० १३७ श्लोक २२)। सुषुम्ण =सूर्यकिरण । सूषुम्णा = नाडीविशेषः, इडापिङ्गलयोर्मध्ये वर्त्तमाना पृष्ठवंशान्तर्गता नाडी सुषुम्णेत्युच्यते। इङ्गुद, इङ्गुदी=तापसतरु । "इँगुआ" "हिंगोटा" इति च विख्यातस्तापसद्रुमः । 'अथ द्वयो ।। इङ्गुदी, तापसतरु' इति—(अम० ना० लिं० पृ० १४४ श्लोक. ४५-६)। इङ्गुदाज्जातेरिति ङीष् । कलम्ब, कलम्बा, कलम्बी = शाकविशेषः, उपोदकी, नालिकाशाकम्। "नाली" "करेवु" इति च लोके। 'उपोदकी कलम्बी च पिच्छिला पिच्छिलच्छदा ।' इति—(रा० नि० पृ० ३५३ श्लोक ७४)। 'अस्य (शाकस्य) तु नालिका ।। कडम्बश्च कलम्बश्च' इति— (अम० ना० लिं० पृ० ३१४ श्लोक ३४-५)। 'कलम्बी शाकभेदेस्यात्कदम्बशरयो. पुमान् ।' इति–(मे० पृ० १०५ श्लोक ६)। 'कलम्ब सायके नीपे, नालीशाके कलम्ब्यपि ।' इति च–(वि०प्र०पृ० १०७ श्लोक ६)। मल्ल = बाहुयोधी । मल्ली = बाहुयोधिनः पत्नी । 'मल्ल पात्रे कपोले च मत्स्यभेदे बलीयसि ।' इति–(मे० पृ० १४८ श्लोकः ४४)। अयं हरेणुः = सतीन, कलाय । "मटर" इति लोके। इय हरेणु = रेणुका, भस्मगन्धिनी, कुलयोषिच्च। 'हरेणुर्ना सतीने, स्त्री रेणुकाकुलयोषितो ।' इति–(मे० पृ० ५१ श्लोकः ८६)। जलूकः, जलूका = जलजन्तुविशेष, जलौका, रक्तपा, जलोरगी। 'रक्तपा तु जलौकाया स्त्रियां भूम्नि जलौकसः।' इति–(अम० ना० लि० पृ० १०१ श्लोक. २२)। 'जलौकापि जलोका स्याज्जलूका जलजन्तुका।' इति तारपाल' इति—(अम० सु० व्या० पृ १०१ स्त० २ प० ९, १०) । सान्तोऽपि। 'जलोरगी जलौका तु जलौका च जलौकसि।' इति च संसारावर्त ' इत्यनेन बहुवचनं प्रायिकम्' इति—(अम० सु० व्या० पृ० १०१ स्तं० २ प० ८, ६)। अयं कोलि, इयं कोलिः = बदरी। "बेर" इति लोके । दीर्घान्तोऽपिः कोली । 'अथ द्वयोः । ककन्धू, बदरी कोली' इति—(अम० ना० लि० पृ० १४० श्लोक ३६)। 'कोली कोलिश्च कर्कन्ध्वाम्' इति च— (सि० कौ० पृ० ४० श्लोक ४३६) । कङ्कत, कङ्कतिका, कङ्कती = प्रसाधनी, केशमार्जनी ।। "कङ्घी" इति। "कंघी" इति च लोके। 'प्रसाधनी कङ्कतिका' इति— (अम० ना० लिं० पृ० २४९ श्लोकः १३६) । 'कङ्कती तु प्रसाधनी' इति स्त्रीकाण्डेऽमरमाला। 'कङ्कतं तु प्रसाधनम्' इति क्लीब-

काण्डे च' इति— (अम० सु० व्या० पृ० २५० स्त० १ पं० ७, ८)। 'केसप्रसाधनद्रव्ये तथा कंकतिका मता।' इति। 'केशप्रसाधनद्रव्ये कङ्कती समुदाहृता।' इति च— (श० र० स० पृ० १४० पं० १०)। अय रयि:, इय रयि:=अन्नन्, जलं च। अयं अञ्जलि:, इय अञ्जलि:= हस्तसम्पुटं मिलितप्रसृति, कुडवपरिमाणं च। 'अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च।' इति— (मे० पृ० १४९ श्लोक: ६०)। त्रिक:, त्रिका:=कूपनेमि:, कूपान्ते रज्ज्वादि धारणयंत्रम्।' 'त्रिका कूपस्य नेमौ स्या,त्त्रिकं पृष्ठाधरे त्रये।' इति—(मे० पृ० ३ श्लोक: २६)। अय प्रेखोलि:, इयं प्रेखोलि =दोला, दोलनम्। 'प्रेंखोलनं तु प्रेखोलं प्रेखो रेखोलनाद्यपि।' इति—(वै० पृ० ११५ श्लोक: १३६)। फलक:, फलकी=मत्स्यभेद:। 'फलकी मत्स्यभेदे ना, वाच्यवत्फलकान्विते।' इति—(मे० पृ० ९७ श्लोक ९७)। शेषशब्दानां व्याख्योदहरणानि प्रागुक्तानि।

दुर्गसिंहोऽपि क्रमरहितान् कान्तादीन् पुस्त्रीि .कशब्दानाह— (दु० लि० पृ० ३८-९ श्लोक: ८०-१-२)।

सल्लक–वृश्चिक–पिटक–कुटि–वराटक–मल्लक–कट–यष्टि–घटा:।
शाट–किट–सृपाट–मरीचि–मुष्टि–किष्कु–मणि–तरणि–तिथि ॥
अण्य–रणि–श्रेणि–स्वाति–बस्ति–रेणु–मुनि–योनि––कर्कन्धु ।
सिन्ध्व–षुधि–मन्व–शनि–मृत्यु–कन्दर–कलम्ब––शाल्मलय: ॥
द्वि–चतु–ष्पद–भ्रमर–वरट–नाम मूषे–षु–वाह्व–ऽहि सदंशम्।
पाटलि–जाटल्यू–र्मि स्त्री–नर–लिङ्गा इति समाप्ता:॥' इति।

एषां व्याख्या—

सल्लकेति। सल्लकश्च वृश्चिकश्च पिटकश्च कुटिश्च वराटकश्च मल्लकश्च कटश्च यष्टिश्च घटश्चेतीतरेतरयोगे द्वन्द्व:. एते सल्लकादय: शब्दा: स्त्रीनरलिङ्गा भवन्ति। वक्ष्यति स्त्रीनरलिङ्गा समाप्ता:। इति, तेनायं सम्बन्ध: सिद्धो भवति। पिटक:, पिटका=नलादिरचितभाण्डविशेष:, कण्डोल:। "पेटी" "पिटार" इति च लोके। 'पिटक: स्यात्तु विस्फोटे मञ्जूषायामपीष्यते।' इति—(अने० सं० पृ० ५४ श्लोक: ६५)। 'पिटकस्त्रिषु विस्फोटे, मञ्जूषायां पुन: पुमान्।' इति—(मे० पृ० १० श्लोक: १२०)। स्त्रियां पिटका। 'पेटक:'। इत्यपि। 'पिटक: पेटकस्तथा।' इति—(द्वि० को० पृ० ४१३ श्लोक: ४६) 'पेटक: पुस्तकादीनां मञ्जूषायां कदम्बके।' इति च—(वि० प्र० पृ० १० श्लोक: १०३)। शाटश्च किटश्च

सूपाटश्च मरीचिश्च मुष्टिश्च किष्कुश्च मणिश्च तरणिश्च तिथिश्चेति समाहारो द्वन्द्वः । एते शाटादयः शब्दाः स्त्रीनरलिङ्गा भवन्ति । अणीति च । अणिश्च अरणिश्च श्रेणिश्च स्वातिश्च बस्तिश्च रेणुिश्च मुनिश्च योनिश्च कर्कन्धूश्चेति समाहारो द्वन्द्व । सिन्धुश्च इषुधिश्च मनुश्च अशनिश्च मृत्युश्च कन्दरश्च कलम्बश्च शाल्मलिश्चेतीतरेतरयोगो द्वन्द्वः । एते अण्यादयः शाल्मल्यन्ताः शब्दा स्त्रीनरलिङ्गा स्युः । कन्दर. कन्दरा—कृत्रिमगृहाकारविवरम्, दरी । 'दरी तु कन्दरो वा स्त्री' इति—(अम० ना० लिं० पृ० १२६ श्लोकः ६) । पक्षे कन्दरा । 'कन्दरोऽङ्कुशे । विवरे च गुहायां च' इति—(अने० सं० पृ० ९२ श्लोकः ५६२-३) । स्त्रियां टाप् । तथा च प्रयोग.— 'कन्दरासु तरुणीरिह नयति रविः' इति माघ— इति मुकुटः' इति—(अम० सु० व्या० टि० पृ० १२६ स्त० १ पं० ४१-२) । शेषशब्दानां व्याख्यादय. प्राग्वद् बोध्याः । द्वीति । द्वे चत्वारि च पदानि येषां ते द्विचतुष्पदाः । द्विचतुष्पदाश्च भ्रमरश्च वरटश्च तेषां नाम सज्ञा । मूषश्च इषुश्च बाहुश्च अहिश्चेति समाहारो द्वन्द्व । सह दशेन वर्त्तते इति सदशम् पाटलिश्च जाटलिश्च ऊर्मिश्चेति समाहारो द्वन्द्वः। एते स्त्रीनरलिङ्गा. स्युः । द्विपदानां मनुष्याणां पक्षिणां च नाम । चतुष्पदानां हस्त्यादीनां कूर्म्मादीनां च नाम । जातिवचनात् नित्य स्त्रीत्वं प्राप्तम् । षट्पदानां भ्रमदीनां वरटादीनां च नाम । शिल्पिनां नाम । ते तु यथा—'तक्षा च तन्तुवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ॥' इति—(अम० सु० व्या० पृ० ३४० स्तं० १ पं० ३२-३) । अपि च—'मालाकार· कर्मकारः शंखकार. कुविन्दक· । कुम्भकारः षडेते शिल्पिनां वराः ॥ सूत्रधारश्चित्रकर. स्वर्णकारस्तथैव च । पतितास्ते ब्रह्मशापादजात्या वर्णसङ्कराः ॥' इति च—(श० चिं० पृ० ५६७ स्त० १ प० ५ त १३ या०) । सुवर्णकारः सुवर्णकारी, कलादः कलादी । "सुनार" "सुनारिन" इति च लोके । 'नाडिन्धम· स्वर्णकारः कलादो रुक्मकारके ।' इति—(अम० ना० लि० पृ०३४१ श्लोकः ८) अन्तावसायी अन्तावसायिनी, नापितः नापिती । "नाई" "नाइन" । "नाऊ" "हजाम" इति च लोके । 'क्षुरिमुण्डिदिवाकीर्तिनापितान्तावसायिनः ।' इति—(अम० ना० लिं० पृ० ३४१ श्लोकः १०) । तक्षणी तक्षा=रथकार. । "सुतार" "बढ़ई" इति च लोके। 'तक्षा तु वर्द्धकिस्त्वष्टा रथकारश्च काष्ठतट् ।' इति—(अम० ना० लिं० पृ० ३४१ श्लोक. ९) । 'तन्तुवायी तन्तुवाय.=तंत्रवायः, कुविन्दः । "कोली" "ताती" इति च लोके। 'तन्तुवाय. कुविन्दः स्यात्' इति—(अम० ना० लिं० पृ० ३४० श्लोक. ६) । रजकी रजकः= निर्णेजकः। "धोबिन" "धोबी" इति च लोके। 'निर्णेजकः स्याद्रजकः' इति—(अम० ना० लि० पृ० ३४२ श्लोकः १०) । चर्मकारी चर्मकारः=पादूकृत् । "चमारिन" "चमार" इति च लोके । 'पादूकृच्चर्मकर. स्यात्' इति—(अम० ना० लिं० पृ० ३४१ श्लोकः ७) इति द्विपदजातित्वात् । मूषी मूषः=प्राणिविशेषः। "चूही" "चूहा" इति च लोके। 'मूषकश्चाखुरुन्दुरुः।' इति—(प० र०

मा० पृ० ३५ प० २०) । इयमहि अयमहिः=सर्पः। "सापिन" "साप" इति च लोके।' 'अहिर्वृत्रासुरे सर्पे' इति--(मे० पृ० १७५ श्लोक: २)। दशी दश.=क्षुद्रजन्तुविशेष । "छोटी वनमक्खी" इति लोके। 'दशस्तु वनमक्षिका।' दंशी तज्जातिरल्पा स्यात् इति--(अम० ना० लि० पृ० १९७ श्लोक २७)। 'दश कीटविशेषे च वर्मदशनयो. पुमान्।' इति--(मे० पृ० १६३ श्लोक: ७)। शेष प्राग्वत्।

॥ इति पुंस्त्रीलिङ्गानुशासनम् ॥

## अथ पुन्नपुंसकलिङ्गानुशासनम् ।

तत्राऽऽदौ अब्जादीन् कुकूलपर्य्यन्तान् पुन्नपुसकलिङ्गवाचकशब्दानाह हेम —(अभि० स० लि० पृ० ६ श्लोक ८७-८) ।

पुन्नपुसकलिङ्गो–ऽब्जः शङ्खे, पद्मो–ऽब्ज–संख्ययोः ।
कंसो–ऽयसि, कुशे बर्हि, बालो ह्रीबेर–केशयोः ॥१॥
द्वापरः संशये, छेदे पिप्पलो, विष्टर–स्तरौ ।
अब्दो वर्षे, दर–स्त्रासे, कुकूल–स्तुषपावके ॥२॥

अनयोर्व्याख्या—

पुमिति । 'पुन्नपुसकलिङ्ग' इत्यधिकारः । शंखे शखार्थे अब्जः अब्जशब्दः पुन्नपुंसकलिङ्गः स्यात् । एव अब्जसख्ययो अब्जार्थे सख्याविशेषार्थे च पद्मः । अयसि लोहविशेषे कसः । कुशे बर्हिः । ह्रीबेरकेशयोः ह्रीबरार्थे केशार्थे च बाल । सशये द्वापर. । छेदे पिप्पल. । तरौ विष्टर । वर्षे अब्द. । त्रासे दर । तुषपावके कुकूलश्चैते शब्दा उक्तार्थेषु पुन्नपुसकलिङ्गा भवन्ति । अब्जः, अब्जम् = शख । 'अब्जोऽस्त्री शखे, ना निचुले धन्वन्तरौ च हिमकिरणे । क्लीब पद्मे' इति–(मे० पृ० ३० श्लोकः ३) । पद्म, पद्मम् = अब्जम्, नलिनम्, अरविन्दम्, कमलम्, तामरसम्, राजीवम् । 'वसन्ते शीतभीताश्च कोकिलस्य वने रुतम् । अन्तर्जलगता पद्मा श्रोतुकामारिवोत्थिता ।' इति––(श० चि० पृ० ४१ स्त० २ प० १२ त १६ या०) । संख्याविशेषः, दशार्बुदम्, निधिप्रभेदः, व्यूहविशेष, गजास्यबिन्दुवृन्दम्, पद्मकम्, पद्मकाष्ठौषधिश्च । 'पद्मोऽस्त्री पद्मके व्यूहनिधिसख्यान्तरेऽम्बुजे । ना नागे, स्त्री फञ्जिकाश्रीचार्वाटीपन्नगीषु च ।' इति––(मे० पृ० १०९ श्लोक १८) । 'पद्मोऽस्त्रिया महापद्मः शखो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ।' इति च शब्दार्णवः' इति––(अम० सु० व्या० पृ० २९ स्त० २ प० १३-४) । कस, कसम् = तैजसद्रव्यम्,

---

पाणिनीयेऽपि—(१) (पुन्नपुसकयो) ॥ अधिकारोऽयम् । सि० कौ० पृ० ४०४ सू० १७७ ।

(२) (कस चाप्राणिनि) ॥ अप्राणिनि कसं पुन्नपुसके स्यात् । अय–कस, इद–कसम् = भाजनम् । अन्यश्च । "कसोऽस्त्री पानभाजनम्" इत्यमर ।' प्राणिनि तु कस = उग्रसेनपुत्र, मथुराधिप । सि० कौ० पृ० ४०१ सू० ९८ ।

लोहविशेष , कास्यम्, परिमाणविशेषश्च । 'कसोऽस्त्री तैजसद्रव्ये कांस्ये माने,ऽसुरे तु ना ।' इति—(मे० पृ० १७० श्लोक २)। बर्हि (स्)=कुश । 'बर्हिं पुसि हुताशने । न स्त्री कुशे' इति (मे० पृ० १७२ श्लोक ३६)। बाल, बालम्=ह्लीबेरम्, केशश्च । 'बालो ना कुन्तलेऽश्वस्य गजस्यापि च (करिणश्चापि) बालधौ । नारिकेरे (ले), हरिद्राया मल्लिकाभिद्यपि स्त्रियाम् ॥ वाच्यलिङ्गोऽर्भके मूर्खे, ह्लीबेरे पुन्नपुसकम् ।' इति—(मे० पृ० १४७ श्लोक ३९)। 'बालो मूर्खेऽर्भके, व्यालग्राहावश्वेभपुच्छयो । ह्लीबेरकेशयो' इति च—(ना० म० पृ० ७८ प० ७,८)। द्वापर , द्वापरम्=सशय , युग च। 'द्वापरौ युगसशयौ ।' इति—(अम० ना० लि० पृ० ४२५ श्लोक १६२)। 'द्वापर (र) सशये युगे ।' इति च— (मे० पृ० १३४ श्लोक १६८)। पिप्पल , पिप्पलम्=वस्त्रच्छेदविशेष । 'पिप्पल सलिले वस्त्रच्छेदभेदे च, ना तरौ ।' इति—(मे० पृ० १५३ श्लोक १११)। विष्टर, विष्टरम्=तरु , वृक्ष । 'विष्टर कुशमुष्टौ स्यादासने च महीरुहे ।' इति— (मे० पृ० १३८ श्लोक २१४)। अब्द, अब्दम्=वर्षम् । 'अब्द सँव्वत्सरे वारिवाहमुस्तकयो. पुमान् ।' इति—(मे० पृ० ७४ श्लोक २)। दर, दरम्=त्रास.। 'दरोऽस्त्री साध्वसे गर्ते' इति—(मे० पृ० १२६ श्लोक ४६)। कुकूल, कुकूलम्=तुषपावक.। 'कुकूलं शङ्कुभि कीर्णे श्वभ्रे, ना तु तुषानले ॥' इति—(वै० पृ० २५८ श्लोक २४)।

अथ सम्प्रति जन्यादीन् सम्परायपर्य्यन्तान् पुन्नपुसकलिङ्गवाचकशब्दानाह हेम —(अभि० स० लि० पृ० ६ श्लोक. ८६)।

परीवाद–पर्य्यङ्कयो–र्जन्य–तल्पौ
तपो–धर्म–वत्सानि माघो–ष्ण–हृत्सु ।
वट–स्तुल्यता–गोल–भक्ष्येषु वर्णः
सितादि–स्वराद्यो रणे सम्परायः ॥३॥

अस्य व्याख्या—

परीवादेति । परीवादपर्य्यङ्कयोर्यथासंख्येन जन्यतल्पौ, पुन्नपुसकलिङ्गौ भवत । यथा—परीवादे जन्यम् । पर्यङ्के तल्पम् । एव माघोष्णहृत्सु क्रमेण तपो घर्मवत्सानि पुन्नपुंसकलिङ्गे स्यु.। यथा—माघेतपा । उष्णे घर्मं । हृदि वत्सम् । तुल्यतागोलभक्ष्येषु वट । सितादिस्वराद्यो. वर्णः । रणे सम्परायश्चैते शब्दा उक्तार्थेषु पुन्नपुंसकलिङ्गा भवन्ति । जन्य , जन्यम्=परीवादः । 'जन्य हट्टे परीवादे संग्रामे च नपुंसकम् । जन्या मातृवयस्याया, जन्य स्याज्जनके पुमान् ।' इति—(मे० पृ० ११४ श्लोकः २५-६)। तल्पः, तल्पम्=पर्य्यङ्क.। 'तल्पमट्टे कलत्रे च शय-

-नीये च न द्वयो ।' इति—(मे० पृ० १०२ श्लोक ६)। तपा, तप = माघ । 'तपो लोकान्तरेऽपि च ॥ चान्द्रायणादौ धर्मे च, पुमान् शिशिरमाघयो ।' इति— (मे० पृ० १७१ श्लोकः २३)। घर्म, घर्मम् = उष्ण.। 'घर्म्मः स्यादातपे ग्रीष्मेऽप्यूष्म (ऽप्युष्ण) स्वेदाम्भसोरपि।' इति— (मे० पृ० १०९ श्लोक १२)। वत्स, वत्सम् = पुत्र, वत्सरश्च। 'वत्स पुत्रादिवर्षयो । तर्णके नोरसि क्लीबम' इति—(मे० पृ० १७० श्लोक ११०)। वट, वटम् = तुल्यता, गोलम्, भक्ष्यं च। 'वटो वृक्षे गुणे गोले साम्ये भक्ष्यवराटयो ।' इति—(अने० तिं० पृ० ३१ श्लोक २८४)। वर्ण, वर्णम् = सितादि, स्वरादिश्च। 'वर्णो विप्रादिके कीर्तौ द्युतौ गीतक्रमे व्रते। शुक्लादिस्तुतिवेषेषु चित्राक्षरकुथास्वपि ॥ अङ्गरागे गुणे रूपे भेदे तालान्तरे शरे। स्वर्णे, वर्णं कुङ्कुमे तु स्यात्' इति—(अने० लि० पृ० ३० श्लोक २६७)। सम्पराय, सम्परायम् = रणम्। 'सम्परायो मुखे चापि सग्रामोत्तरकालयो ।' इति—(अने० ति० पृ० ८३ श्लोक १९२)।

अथाधुना सैन्धवादीन् एकरात्रपर्यन्तान् पुन्नपुसकलिङ्गवाचक शब्दानाह, हेम — (अभि० स० लिं० पृ० ७ श्लोक. ९०-१-२-३)।

सैन्धवो लवणे, भूतः प्रेते, तमो विधुतुन्दे ।
स्व–दायौ कस्वरे, कृच्छ्रं व्रते, शुक्रोऽग्नि–मासयोः ॥४॥
कर्पूर–स्वर्णयो–श्चन्द्र, उडा–वृक्ष–श्छदे दलः ।
धर्म्मः स्वभावे, रुचको भूषाभि–न्मातुलुङ्गयोः ॥५॥
पाताले वाडवो, वध्रः सीसे, आमलकः फले ।
पिट–जङ्गल–सत्त्वानि पिटका–मांस–जन्तुषु ॥६॥
मधु–पिण्डौ सुरा–तन्वो–र्मध्योऽवलग्र–मध्ययोः ।
एका–द्रात्रः समाहारे तथा' ··· ··· । इति ।

एषा व्याख्या—

सैन्धव इति। लवणे सैन्धव। प्रेते भूतः। विधुन्तुदे तम। कस्वरे स्वदायौ। व्रते कृच्छ्रम्। अग्निमासयो शुक्रश्चैते पुन्नपुसकलिङ्गा भवन्ति। कर्पूरेति। कर्पूरस्वर्णयो चन्द्र। उडौ ऋक्ष।

---

पाणिनीयेऽपि—(१) (म गुमधुसीधुशीधुसानुकमण्डलूनि नपुसके च) एतानि नपुसके। चात्पुसि स्यु। मद्गु, मद्गु= । अय मधु, इद मधु=सुरा। सीधु शीधु, सीधु शीधु=आसव। सानु, सानु= पर्वतस्य समभूभागे। कमण्डलु, कमण्डलु=करक, कुण्डी, सन्न्यासिना मृत्काष्ठादिमय पात्रम्। सि० कौ० पृ० ३९९ सू० ५५।

छदे दल. । स्वभावे धर्म । भूषाभिन्मातुलुङ्गयो रुचकश्चैते पुन्नपुंसकलिङ्गा भवन्ति। पाताल इति। पाताले वाडव । सीसे वर्द्ध । फले आमलक । पिटकामासजन्तुषु क्रमेण पिटजगलसत्त्वानि चैते शब्दा पुन्नपुंसकलिङ्गा भवन्ति । मद्विवति । सुरातन्वो मधुपिण्डौ । शेवालमध्ययो नाम । एकात् रात्र , तथा समाहारे चैते पुन्नपुंसकलिङ्गा. स्यु. । सैन्धव, सैन्धवम् = लवणम् । 'सैन्धवो लवणे न स्त्री, हये ना, सिन्धुजे त्रिषु ।' इति—(ना० र० मा० पृ० १०७ प० १७) । भूत , भूतम् = प्रेत । 'भूत क्ष्मादौ पिशाचादौ जन्तौ क्लीब, त्रिषूचिते । प्राप्ते वृ(वि)त्ते समे सत्ये, देवयोन्यन्तरे तु ना । कुमारेऽपि' इति—(मे० पृ० ५७ श्लोक ४१)। तमा , तम = विधुन्तुद । 'तमो ध्वान्ते गुणे शोके क्लीब, वा ना विधुन्तुदे ।' इति— (मे० पृ० १७१ श्लोक २४) । स्व , स्वम् = कस्वरम्, धनम् । दाय , दायम् = कस्वरम्, धनम् । कृच्छ्र:, कृच्छ्रम् = व्रतविशेष । 'कृच्छ्रमाख्यातमाभीले पापसान्तपनादिनो ।' इति—(मे० पृ० १२४ श्लोक १९) । शुक्र , शुक्रम् = अग्नि , ज्येष्ठमासश्च । 'शुक्रो हुताशने मासभेदे दैत्यगुरौ सिते । शुक्र नेत्रगदे बीजे' इति—(अने० ति० पृ० ३५ श्लोक ३२४) । चन्द्र:, चन्द्रम्—कर्पूर , स्वर्णं च । 'चन्द्र सुवर्णे कर्पूरे मेचके रजनीपतौ । कम्पिल्ये सलिले काम्ये' इति—(अने० ति० पृ० १६ श्लोक १११) । ऋक्ष , ऋक्षम् = नक्षत्रम् । 'भल्लूके शोणके चक्षो, नक्षत्रे पुन्नपुंसकम् ।' इति—(त्रि० शे० पृ० ३७८ श्लोक ४३६) । 'ऋक्ष धिष्ण्ये, भवेदृक्षो भल्लूके स्यात्' इति च—(अने० ति० पृ० ९ श्लोक ३५) । दल , दलम् = छद, भागश्च । 'अर्द्धे पत्रे छदे दलम् ।' इति—(त्रि० शे० पृ० ३७२ श्लोक ३९७) । 'दलमुत्सेधखण्डयो । शस्त्रीछदेऽप्यपद्रव्ये पत्रेऽपि' इति—(मे० पृ० १४७ श्लोक २६) । 'दलो भागे, दल छदे ।' इति च—(वै० पृ० २३३ श्लोक ३९) । धर्म , धर्मम् = स्वभाव: । 'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयो क्रतौ । अहिंसोपनिषन्न्याये, ना धनुर्यमसोमपे ।' इति—(मे० पृ० १०९ श्लोक १६) । 'धर्म: पुण्ये यमे न्याये स्वभावाचारयो क्रतौ ।' इति च—(ना० म० पृ० ५८-९ प० २१-२) । रुचक., रुचकम् = भूषाभिद्, मातुलुङ्गश्च । 'रुचको बीजपूरे च निष्के दन्तकपोतयो । न द्वयो सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययो । सौवर्चलेऽपि मङ्गल्यद्रव्ये चाप्युत्कटे (ऽपिकटके) ऽपि च ।' इति—(मे० पृ० १२ श्लोक १४७) । 'रुचक सर्जिकाक्षारे रोचनाहृद्यगन्धयो । रुवौ लुङ्गे च रुचक.' इति—(शि० को० पृ० ५ श्लोक० ४६-७) । 'सौवर्चल बीजपुर मङ्गल्यद्रव्यक तथा । ग्रीवाभरणक चैव चतुर्षु रुचक स्मृतम् ।' इति धन्वन्तरि' इति—(रा० नि० पृ० ४४१ श्लोक २) । 'सौवर्चलं मातुलुङ्ग शिलाचन्दनपेषणी । ग्रीवाभरणक चैषु चतुर्षु रुचकं स्मृतम् ।' इति ग्रन्थान्तराच्च' इति—(अम० सु० व्या० पृ० १५५ स्त० २ प० २२-३) । वाडव', वाडवम् = पातालम् । 'वाडव करणे स्त्रीणा घोटकौघे नपुंसकम् । पाताले न स्त्रियाम् ।' इति—(मे० पृ० १६१ श्लोक: ५०) । वर्द्ध , वर्द्धम् = सीसम् । 'अस्त्री वर्द्ध त्रपुवरत्रयो ।' इति—(मे० पृ० १२८ श्लोक: ८२) । 'वर्द्ध: सीसवरत्रयो: ।' इति च—(अने० स० पृ० ३७ श्लोक. ४६५) । आमलक:, आमलकम् = फलम्,

धात्रीफलम्। 'धात्रीफल त्वामलकम्' इति--(श० र० म० पृ० ३२ प० १३)। पिट, पिटम् = पिटका, विस्फोट। 'मञ्जूषाया तु पिटको, विस्फोटे पिटका (को) मता।' इति--(श० र० स० पृ० २१ प० ७)। 'पिट चाल' इति--(त्रि० शे० पृ० २८० श्लोक. २)। 'अथ कण्डोल पिटक: पिट।' इति--(वै० पृ० १६४ श्लोक. ६४)। यादवस्तु त्रयीत्याह--'विस्फोट पिटका त्रयी।' इति--(वै० पृ० १८३ श्लोक १२३)। जगल, जगलम् = मासम्। 'जङ्गल निर्जनस्थाने त्रिलिङ्ग्या, पिशितेऽस्त्रियाम्।' इति--(मे० पृ० १५१ श्लोक ९३)। सत्त्व, सत्त्वम् = जन्तुः। 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु।' इति--(अम० ना० लि० पृ० ४३४ श्लोक २१३)। मधु., मधु = सुरा, मधूलश्च। 'मधु पुष्परसे क्षौद्रे मद्ये, ना तु मधूद्रुमे॥' इति-(मे०पृ० ७९ श्लोक: ११)। 'मधूल, तु मधुर्नस्त्री' इति च-- (वै० पृ० १३४ श्लोक १३४)। तनु, तनु = पिण्ड·। 'पिण्डो वृत्ते तनौ गुडे।' इति-(वै० पृ० २३२ श्लोक ३५)। मध्य, मध्यम् = अवलग्नम्, मध्य च। एकरात्र·, एकरात्रम्। एकाचासौ रात्रिश्च एकरात्रम्। द्विरात्र, द्विरात्रम्। द्वयो रात्र्यो समाहार। त्रिरात्र त्रिरात्रम्। तिसृणा रात्रीणा समाहार।

अथ सम्प्रति सक्रमान् कान्तादीन् घान्तान्तान् पुन्नपुसकलिङ्गवाचकशब्दानाह हेम। (अभि० स० लि० पृ० ७ श्लोक ९३ त ९८ या०)।

— — —सूतक–कूलकौ ॥७॥
वैनीतक–भ्रमरकौ मरको वलीक–
वल्मीक–वल्क–पुलका: फरक–व्यलीकौ।
किञ्जल्क–कल्क–मणिक–स्तवकाऽवतङ्क–
वर्चस्क–चूचुक–तडाक–तटाक–तङ्काः ॥८॥
वालकः फलक---माल---कालका
मूलक---स्तिलक---पङ्क---पातका.।

---

पाणिनीयेऽपि–(१) (कोपध) (कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुसके च)॥ चात्पुसि। एतानि पुन्नपुसके स्युरित्यर्थ। अय शुष्क., इद शुष्कम् = अनार्द्र निस्सारो वा। भाण्डक, भाण्डकम् = भाजनविशेष। "कटोरा" इति लोके। पिण्डक, पिण्डकम् = श्राद्धे विशेषद्रव्यनिर्मितविल्वाकार पितृदेयमन्नम्। शण्डक. = दैत्यपुरोहितः, शण्डकम् = अब्जादिसमूहः। पिटक = पुस्तकादीनां मञ्जूषा, पेटकम् = चालः, छदिः। तालकः = कर्णभूषणविशेष., तालुकम् = द्वारपिधानसाधनयत्रम्। पुलाक, पुलाकम् = कदन्नम्, ओदन च। शेषशब्दाना व्याख्या तु हैमादितो बोध्या। सि० कौ० पृ० ३९९ सू० ६२।

कोरकः करक–कन्दुका–ऽन्दुका–

ऽनीक–मिष्क–चषका विशेषकः ॥९॥

शाटक–कण्टक–टङ्क–विटङ्का

मञ्चक–मेचक–नाक–पिनाकाः ।

पुस्तक–मस्तक–मुस्तक–शाका

वर्णक–मोदक–मूषिक–मुष्काः॥१०॥

चण्डातक–श्चरक–रोचक–कञ्चुकानि

मस्तिष्क–यावक–करण्डक–तण्डकानि ।

आतङ्क–शूक–सरकाः कटकः सशुल्कः

पिण्याक–झर्झरक–हंसक–शंख–पुखाः ॥११॥

नख–मुख–मधिकाङ्गः संयुगः पद्मरागो

भग–युग–मथ टङ्गो–द्योग–शृङ्गा निदाघः ।

अस्य व्याख्या–

सूतकेति । वैनीतकेति । बालक इति । शाटकेति । चण्डातक इति । नखेति च । शुल्केन सह वर्त्तते सशुल्क । इह नखमुख भगयुग च विहाय सर्वत्रेतरेतरयोगो द्वन्द्वः । नखमुखे भगयुगे च समाहारो द्वन्द्व । एते सूतकादयो निदाघान्ता शब्दा पुन्नपुसकलिङ्गा भवन्ति । कूलकः, कूलकम् =स्तूप. । 'कूलक न स्त्रिया स्तूपे, पुसि स्यात्क्रमिपर्वते ।' इति—(मे० पृ० ७ श्लोकः ७३) । वैनीतक. ,वैनीतकम्=परम्परावाहनम् । 'परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम् ।' इति—(वै० पृ० ११५ श्लोक १३७) । भ्रमरक, भ्रमरकम्=ललाटे लम्बमानालका, भ्रामरम्, माक्षिक च । 'ते ललाटे भ्रमरका कुरुला भ्रमरालका ॥' इति । 'भ्रामर तु भ्रमरक क्षौद्र सारघमाक्षिके ।' इति च—(वै० पृ० १८१ श्लोक ९९) । मरक , करकम्= घनप्राणिमरणम्, मारक । "मारी" इति लोके । 'मरक स्यान्महामार्य्याम्' इति—(श० र० स० पृ० २३ प० १६) । वलीक., वलीकम्=चोलान्त , पटलप्रान्त । 'नीव्र (ध्रं) वलीक चोलान्ते' इति—(वै० पृ० १६२ श्लोकः ३७) । 'वलीकनीध्रे (व्रे) पटलप्रान्ते' इति च (अम० ना० लिं०पृ०श्लोक ) । वल्मीक , वल्मीकम्=पिपीलिकाकृतो मृत्सञ्चयविशेषः । 'वल्मीको रोगभेदे, च नाकौ च पुन्नपुसकम् ।' इति—(मे० पृ० ११ श्लोक १२८) । वल्क , वल्कम्=

पाणिनीयेऽपि—(१) (शृङ्गार्घनिदाघोघमशल्यदृढा ) ॥ एते पुन्नपुसकयो. स्यु । अय अर्घ., इद अर्घम्= मूल्यम् । पूजाविशेषश्च । शेष० व्या० हृ० बो० । सि० कौ० पृ० ४०४ सू० १७९ ।

वल्कलम् । 'वल्क वल्कलमस्त्रियाम् ।' इति--(अम० ना० लि० पृ० १३१ श्लोक. १२) । 'वल्कं वल्कलशल्कयोः ।' इति च--(मे० पृ० ४ श्लोक ३४) । पुलक, पुलकम्=प्रस्तर-विशेष, पर्वतीयमृत्तिकाविशेष, कङ्कुष्ठ च । 'कृमिप्रभेदे रोमाञ्चे पुलक प्रस्तरे विदु ।' इति--(अने० सम्० पृ० ३३ श्लोक ३७३) । 'पुलक कृमिप्रभेदे प्रस्तरभेदे च मणिदोषे ॥ रोमाञ्चे हरिताले गजान्नपिण्डे त्र गन्धर्वे ।' इति--(मे० पृ० १० श्लोकः १२१-२) । फरक, फरकम्=चर्म, चर्मावरणम् । "ढाल" "फरि" इति च लोके । काष्ठासन च । तलयोरभेद. । 'फलकोऽस्त्री फल चर्म' इति--(अम० ना० लि० पृ० २९४ श्लोक ९०) । 'फलकी चन्दने स्त्री, न स्त्री दार्वासनचर्म्मणो ।' इति च--(वै० पृ० २६१ श्लोक ६०) । व्यलीक, व्यलीकम्=नागर., षिङ्ग, अप्रियम्, पीडन च । 'दुःखे विलक्षे व्यलीकमप्रियाकार्ययोस्तु ना ॥' इति--(वै० पृ० २६३ श्लोक ७९) । 'व्यलीक च प्रतारणम् ॥' इति च--(मे० पृ० १९४ श्लोक ३५) । 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने । ना नागरे' इति च--(मे० पृ० १३ श्लोक १५५) । किञ्जल्क, किञ्जलकम्=पुष्परेणु, पुष्परज, । 'किञ्जल्क केसरे, खे क्ली' इति--(वै० पृ० २५९ श्लोक ३१) । 'पुष्परेणौ च किञ्जल्क' इति । 'किञ्जल्क केसरोऽस्त्रियाम् ।' इति च--(अम० ना० लि० पृ० १०८ श्लोक ४३) । इह साहचर्य्यात् किञ्जल्कोऽप्यस्त्रिया स्यात् । कल्क, कल्कम्=घृततैलादिशेष., दम्भः, विभीतकद्रुश्च । 'कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके ।' इति--(मे० पृ० २ श्लोक. १९) । मणिकः, मणिकम्=अलिञ्जरः, महाकुम्भः । "माट" इति लोके । 'मणिक स्यादलिञ्जरम् ।' इति--(वै० पृ० १६३ श्लोक ५६) । 'अलिञ्जरे तु मणिक' इति च--(श० र० स० पृ० २३ प० १५) । स्तवक, स्तवकम्=गुच्छक, पुष्पकलिकादिकदम्ब, पुष्पादिसंघातः । 'स्याद्गुत्स(च्छ)कस्तुस्तबक' इति--(अम० ना० लि० पृ० १३३ श्लोक १६) । 'गुच्छो गुलुञ्छ स्तवको गुच्छकः कुसुमोच्चय.।' इति च--(रा० निं० पृ० ३२६ श्लोक २७) । अवतङ्क, अवतङ्कम्=स्वल्पभयम् अल्पदरम् । वर्चस्क, वर्चस्कम्=विष्ठा, शकृत् । 'उच्चारो, विण् न ना, गूथो वर्चस्को, मलमस्त्रि-याम् ।' इति--(वै० पृ० १८२ श्लोक ११९) । 'वर्चस्क तु पुरीषे स्यात्' इति च--(श० र० स० पृ० २७ श्लोक १) । इहोभयो. कोशयोर्भिन्नलिङ्गस्तेनाय पुन्नपुसकलिङ्गो ज्ञेय । चूचक, चूचकम्=कुचाग्रभाग. । 'चूचको ना, कुचाननम् ।' इति रत्नकोश' इति--(अम० सु० व्या० पृ० २२९ स्तं १ प० ३९, ४०) । अमरस्तु क्लीबत्वमाह--'चूचुक तु कुचाग्र स्यात्' इति--(अम० ना० लिं० पृ० २२९ श्लोक. ७७) । अतश्चूचुकशब्द पुन्नपुसकलिङ्गो बोध्य । तडाक, तडाकम् । तटाक, तटाकम् । 'तडाग' 'तडागम्' इत्यपि । एते जलाधारविशेषे पद्माकरे । यंत्रकूटके च पुन्नपुंसकलिङ्गा स्युरित्यर्थ । 'तडागोऽस्त्री जलाधारविशेषे यंत्रकूट (प) के ।' इति--(मे० पृ० २४ श्लोक. ३४) । 'पद्माकरस्तडागोऽस्त्री' इति च--(अम० ना० लि० पृ० १०३ श्लोकः २८) ।

तङ्कः, तङ्कम् = भयम्, दु खेन जीवन च। 'तङ्कोऽस्त्री भीर्भिया भीति साध्वस भयन भयम् ।' इति—(वै० पृ० ६८ श्लोक १८५)। वालक, वालकम् = पारिहार्य्यं। 'वालकोऽस्त्री पारिहार्य्ये त्रिषु स्यादङ्गुरीयकम्।' इति— (मे० पृ० १३ श्लोक १५८)। फलकः, फलकम् = चर्म, चर्मावरणम्, काष्ठासन च। 'फलकी चन्दने स्त्री, न स्त्री दार्वासनचर्म्मणो।' इति— (मे० पृ० ९७ श्लोक ९७)। मालक, मालकम् = ग्रामान्तरालाटवी। अलक, अलकम् = चूर्णकुन्तल, कुटिलकेश। 'अलका कुबेरपुर्य्या–मस्त्रिया चूर्णकुन्तले।' इति—(मे० पृ० ४ श्लोक ४१)। मूलक, मूलकम् = भूमिजद्रव्यविशेष। 'हरिपर्णे मूलकोऽस्त्री, सेकिम बुस्तिका न षण्।' इति—(वै० पृ० ५७ श्लोक १५५)। 'मूलक पर्णमूलके।' इति च—(श० र० स० पृ० २४ श्लोक १२)। तिलक, तिलकम् = ललाटे कस्तूर्य्यादिना कृततिलकम्। 'तमालपत्रतिलकचित्रकाणि विशेषकम्। द्वितीय च तुरीय च न स्त्रियाम्' इति—(अम० ना० लि० पृ० २४५ श्लोक १२३)। 'अत्र द्वितीय तिलकमिति तुरीय विशेषकमिति च द्वे न स्त्रिया किन्तु पुन्नपुसकयो' इति टीका। 'तिलको द्रुमरोगाश्वभेदेषु तिलकालके। क्लीब सौवर्चलक्लोम्नोर्न स्त्रिया तु विशेषके।' इति च—(मे० पृ० ६ श्लोक १००)। पङ्क, पङ्कम् = कर्दम, पाप च। 'पङ्कोऽस्त्री कर्दमे पापे' इति—(मे० पृ० ३ श्लोक २९)। पातक, पातकम् = ब्रह्महत्यादि, नरकसाधनम्, पापम्। 'पाप तु पातकम्' इति–(त्रि० शे० पृ० २७१ श्लोक ११)। 'दुरित पातक पापम्' इति च—(वै० पृ० ९७ श्लोक १६८)। कोरक, कोरकम् = कुड्मल., कक्कोलकम्, मृणालम्, बिसं च। 'कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयो:।' इति—(मे० पृ० ७ श्लोक ७५)। तथा च प्रयोग —'समुपहरन् विचकार कोरकाणि' इति माघ —इति मुकुट' इति—(अम० सु० व्या० टि० पृ० १३३ स्त० २ प० ४०)। यादवस्तु पुस्त्वमाह—'कलिका कोरकश्च' इति—(वै० पृ० ४६ श्लोक १९)। इह कोरकस्य पुस्त्व प्रचुरप्रयोगदर्शनादुक्तम्। करक, करकम् = कमण्डलु। 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च। द्वयोर्मेघो (वर्षो) त्पले, न स्त्री करङ्के च कमण्डलौ।' इति–(मे० पृ० ५ श्लोक ५४)। कन्दुक, कन्दुकम् = गेन्दुक। "गेंद" इति लोके, 'कन्दुकः क्रीडनीये स्यात्' इति—(श० र० स० पृ० १० पं० ३)। अन्दुक, अन्दुकम् = हस्तिपादबन्धननिगड। 'प्राची तु शृंखला हिञ्जीरोऽस्त्री स्यादन्दुकश्च स.।' इति—(त्रि० शे० पृ० २६२ श्लोक ३३)। 'अन्दुक: कन्दुक प्रोक्तो, निगडे च मतोऽस्त्रियाम्।' इति च—(श० र० स० पृ० ७ प० १६)। अनीक., अनीकम् = युद्धम्, सैन्य च। 'चक्र चानीकमस्त्रियाम्' इति—(अम० ना० लिं० पृ० २८९ श्लोक: ७८)। 'अनीकोऽस्त्री रणे सैन्ये' इति—(मे० पृ० ४ श्लोक. ४२)। निष्क., निष्कम् = सुवर्णाष्टशतम् पलम्, उरोभूषण च। 'निष्कमस्त्री साष्टहेमशते दीनारकर्षयो.। वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च।' इति—(मे० पृ० ३ श्लोक २८)। चषकः, चषकम् = सुरापात्रम्, मधु, मद्यप्रभेदश्च। 'चषकोऽस्त्री सुरापात्रे मधुमद्यप्रभेदयो:।' इति–(मे० पृ० ८ श्लोक:

८६)। विशेषकः, विशेषकम्=ललाटे कस्तूर्यादिना कृततिलकम्। 'न स्त्रियां तु विशेषके।' इति—(मे० पृ० १७ श्लोकः २१४)। शाटक, शाटकम्=वस्त्रविशेष। "साडी" इति लोके। 'सिचयप्रोथशाटका।' इति—(त्रि० शे० पृ० २९२ श्लोक ३४)। कण्टकः, कण्टकम्=बिल्वादीनामवयवविशेषः। "काँटा" इति लोके। सूच्यग्रम्, क्षुद्रशत्रुः, मत्स्यादिकीकसम्, ज्योतिश्शास्त्रे भावाना सज्ञाविशेषश्च। 'कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे।' इति—(मे० पृ० ५ श्लोक ५८)। टङ्क, टङ्कम्=खनित्रम्। "कुदाल" इति लोके। टङ्कनम्, नीलकपित्थश्च। 'टङ्को नीलकपित्थे च खनित्रे, टङ्कनेऽस्त्रियाम्।' इति—(मे० पृ० ३ श्लोकः २४)। विटङ्कः, विटङ्कम्=गृहप्रान्ते रचितपक्षिस्थानम्, कपोतपालिका, कपोतपाल्यादिन्यासविशेष। 'कपोतपालिकाया तु विटङ्क इति गद्यते।' इति—(श० र० स० पृ० २८ पं० ३)। मञ्चक, मञ्चकम्=शयनविशेषः, खट्वा, इन्द्रकोष, उच्चमण्डपश्च। 'आसन्दी मञ्चकः खट्वाऽपाश्रयो मत्तवारणम्। शय्या पर्य्यङ्कपल्यङ्कौ शयन शयनीयवत्।' इति—(वै० पृ० १७२ श्लोकः १६४)। 'इन्द्रकोषस्तु मञ्चक।' इति—(त्रि० शे० पृ० २८० श्लोकः ४)। मेचक, मेचकम्=वर्णविशेषः, श्यामः। 'मेचक शिखिचन्द्रके। स्रोतेऽञ्जनेऽन्धकारे च श्यामले च निगद्यते।' इति—(श० र० स० पृ० २४ प० १३)। नाकः, नाकम्=स्वर्गः, आकाशम्, ब्रह्मलोकं च। 'नाकः स्वर्गान्तरिक्षयो।' इति—(वै० पृ० ३ श्लोक १)। 'नाको व्योम्नि च त्रिदिवेऽपि च।' इति—(श० र० स० पृ० ४ प० ५)। पिनाक, पिनाकम्=रुद्रायुधविशेषः। 'पिनाकोऽस्त्री रुद्रचापे पाशुवर्षत्रिशूलयोः।' इति—(मे० पृ० १० श्लोकः १२०)। पुस्तकः, पुस्तकम्=लिखितपत्रसञ्चयः, लिखितग्रन्थो मुद्रितग्रन्थो वा। "पोथी" इति लोके। सिन्दूरादेर्दारवभाजन च। 'पुस्तक लेखपत्रे स्यात्' इति—(श० र० स० पृ० २२ प० ४)। 'अस्त्री तु पुस्तक सिन्दूरादेर्दारवभाजने।' इति च (वै० पृ० १६७ श्लोकः १०६)। मस्तकः, मस्तकम्=शीर्षम्, शिर। 'उत्तमाङ्ग शिरः शीर्ष, मूर्धा ना, मस्तकोऽस्त्रियाम्।' इति—(अम० ना० लि० पृ० २३६ श्लोकः ९५)। मुस्तकः, मुस्तकम्=ओषधिविशेष। "मोथा" इति लोके। 'कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्।' इति—(अम० ना० लि० पृ० १८२ श्लोकः १५६)। शाकः, शाकम्=भक्ष्यविशेष। "भाजी" इति लोके। हरितकम्। 'शाको द्वीपान्तरेऽपि च। शक्तौ द्रुमविशेषे च पुमान्, हरितकेऽस्त्रियाम्।' इति—(मे० पृ० ४ श्लोकः ३६)। वर्णक, वर्णकम्=चन्दनम्, विलेपन च। 'वर्णकश्चारणे स्त्री तु चन्दने च विलेपने। द्वयोर्न्नील्यादिषु, स्त्री स्यादुत्कर्षे काञ्च(कथ)नस्य च।' इति—(मे० पृ० १३ श्लोकः १५३)। मोदकः, मोदकम्=भक्ष्यविशेषः। "लड्डू" इति लोके। 'मोदकः खाद्यभेदेऽस्त्री, हर्ष(र्षु)के पुनरन्यवत्।' इति—(मे० पृ० १२ श्लोकः १४२)। मूषिकः, मूषकः, मूषिकम्, मूषकम्=आखुः, उन्दुरुः। "चूहा" "चूही" इति च लोके। 'उन्दुरुर्मूषिकोऽप्याखु' इति—

(अम० ना० लि० पृ० १९१ श्लोक १२)। 'भद्रमूषिक आसन्दी कुन्दुरुन्दुरुरुन्दर । मूषको वज्रदशन क्रम काण्डो बिलेशय· ।' इति च वाचस्पति ' इति--(अम० सु० व्या० पृ० १९१ स्त० १ प० १२-२) । मुष्क, मुष्कम् = अण्डकोश । 'अस्त्रियो मुष्ककोशाण्डा फेलको वृषणोऽण्डुक ।' इति--(वै० पृ० १७८ श्लोक ६३)। चण्डातक, चण्डातकम् = अर्द्धोरुकम्, वरस्त्रीणामर्द्धोरुपर्य्यंत वस्त्रम् । ''लहगा'' इति लोके । अर्द्धोरुक वरस्त्रीणा स्याच्चण्डातकमशुकम् ।' इति--(अम० ना० लिं० पृ० २४३ श्लोक ११९) । 'चण्डातकमस्त्रियाम्' इत्यपि पाठ । 'अर्द्धोरुक वरस्त्रीणां वासश्चण्डातक स्मृत ।' इति पुस्काण्डे बोपालितात्पुलिङ्गोऽपि' इति—(अम० सु० व्या० पृ० २४३ स्त० २ प० २०, २१) । चरक, चरकम् = शास्त्रविशेष, चरकमुनिप्रणीतवैद्यकग्रन्थ । 'चरको ग्रन्थभेदे स्याच्चरक स्थावरेतरे ।' इति—(श० र० स० पृ० १५ प० ४) । रोचक, रोचकम् = अवदश, बुभुक्षा, हस्तिकर्णश्च । 'हस्तिकर्णस्तु रोचक ।' इति—(वै० पृ० १६६ श्लोक १२९) । कञ्चुक, कञ्चुकम् = वारबाण, चोलकाकृतिसन्नाह. । 'कञ्चुको वारबाणोऽस्त्री' इति—(अम० ना० लि० पृ० २८६ श्लोक. ६३) । साहचर्य्यात्कञ्चुकोऽपि पुन्नपुसकलिङ्ग । 'अथ कञ्चुक । निर्मोके चोलके वारबाणे' इति च—(त्रि० शे० पृ० ३१४ श्लोक १३) । मस्तिष्क, मस्तिष्कम् = मस्तुलुङ्ग, गोर्दम्, मस्तकस्थघृताकारस्नेह । 'मस्तिष्कं मस्तुलुङ्गके ।' इति—(श० र० स० पृ० २४ प० ४) । 'मस्तिष्कं गोर्द किट्ट, मलोऽस्त्रियाम् ।' इति च—(अम० ना० लिं० पृ० २२४ श्लोक: ६५) । यावक, यावकम् = कुल्माष । 'कुल्माषोऽर्द्धस्विन्नो यवादि.' इति स्वामी । शूकशून्यो यवादिरिति रक्षितादयः। 'स्याद्यावकस्तु कुल्मास ' इति—(अम० ना० लि० पृ० ३०७ श्लोक १८)। 'यवान्नेऽपि तु यावक. ।' इति च—(श० र० स० पृ० २५ श्लोक. २) । करण्डक·, करण्डकम् = पुष्पादीनामाधारविशेष·, वशादिरचितो भाण्डविशेष. । ''करण्डी'' ''कॅडी'' इति च लोके। तण्डक, तण्डकम् = गृहदारु । छन्दोगब्राह्मणग्रन्थविशेष:, वृक्षस्कन्ध, खञ्जन, फेनश्च । 'गृहदारौ तण्डकोऽस्त्री समासप्रायवाचि च ।' इति--(त्रि० शे० पृ० ३१६ श्लोक· २५) । 'तण्डक, खञ्जने फेने' इति--(हा० व० पृ० ४०८ श्लोक २५६) । 'अथ तण्डक । खञ्जरीटे तरुस्कन्धे फेने मन्दिरदारुणि ।' इति च—(अने० ति० पृ० ५० श्लोक १३०) । आतङ्क:, आतङ्कम् = रोग, सन्ताप, इष्टवियोगजस्ताप, मुरजध्वनि, शङ्का च। 'आन्तको रुजि सन्तापे मुरजध्वनिशङ्कयो ।' इति--(अने० ति० पृ० ४० श्लोक २०) । शूक, शूकम् = तीक्ष्णाग्रधान्यम्, धान्यादे सूची। 'शूकोऽस्त्री शुङ्गदलयो.' इति—(मे० पृ० ४ श्लोक ३८) । 'शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे' इति—(अम० ना० लिं० पृ० ३०९ श्लोक· २३) । श्लक्ष्ण कृश च तत् तीक्ष्ण च तदग्रं च । 'शूकोऽनुक्रोशशुङ्गयो· ।' इति च--(वि० प्र० पृ० ५ श्लोक. ३६) । सरक:, सरकम् = मद्यपानम् । 'मद्यपान-

पात्रम्' इति मुकुट । 'सरक शीधुपानेक्षुशीधुनोर्मद्यभाजने ।' इत्यजय । 'सरकोप्यनुतर्षणम् ।' इति—(अम० ना० लिं० पृ० ३५१ श्लोक ४३) । अपि शब्दात्सरकोऽप्यस्त्री । 'सरक वा नाऽनुतर्षो ना' इति रत्नकोष । 'अनुतर्ष' अपि । 'चषकश्चानुतर्षश्च सरकश्च' इति च भागुरिः' इति—(अम० सु० व्या० पृ० ३५१ स्त० २ प० ३१ त. ३७ या०) । कटक, कटकम् = पर्वत-नितम्ब, दन्तिदन्तमण्डन च । 'कटकोऽस्त्री नितम्बेऽद्रेर्दन्तिना दन्तमण्डने । सामुद्रलवणे राजधानी-वलययोरपि ।' इति—(मे० पृ० ५ श्लोक ५६) । शुल्क, शुल्कम् = घट्टादिदेय, वरादथग्रह, मार्गादिदण्डमान च । 'शुल्क घट्टादिदेये, स्याद्वरादर्थग्रहेऽस्त्रियाम् ।' इति—(मे० पृ० ४ श्लोक: ३८) । पिण्याक, पिण्याकम् = श्च्युततैलकल्कविशेष, तिलकल्क । 'पिण्याकोऽस्त्री तिलकल्के हिङ्गबाह्लीकसिह्लके ।' इति—(मे० पृ० १० श्लोक ११९) । झर्झरक, झर्झरकम् = कलियुगम् । 'पुष्यो झर्झरक कलि ।' इति—(वै० पृ० २४ श्लोक ९२) । झर्झरीक, झर्झरीकम् = शरीरम्, तनु । इति—(श० चि० पृ० १०२६ स्त० प०, १०) । हसक, हसकम् = पादकटक, शब्दरहित-पादभूषणम्, मानसौकाश्च । 'हसक पादकटके, हसको मानसौकसि । यतौ सदाशिवेऽपि स्यात्' इति—(श० र० स० पृ० ३० प० ११) । शख, शंखम् = कम्बु । 'शख कम्बौ न योषित्' इति—(मे० पृ० २० श्लोक ५) । पुख, पुखम् = शरमूलम्, शरस्य पिच्छम् । 'पुखस्तु शरमूले स्यात्' इति—(श० र० स० पृ० ५३ प० १४) । नख, नखम् = कररुहम् । 'नखी स्त्रीपुस(क्लीब)योः शुक्तौ, नरे पुखन्नपुसकम् ।' इति—(मे० पृ० २० श्लोक २) । 'पुनर्भव कररुहो, नखोऽस्त्री नखरोऽस्त्रियाम् ।' इति च—(अम० ना० लिं० पृ० २३१ श्लोक: ८३) । मुख, मुखम् = वदनम्, आननम्, मुखबिलम् । 'प्राक् खनो मुडुदात्तश्च ततोऽच्च प्रत्ययो भवेत् । प्रजासृजा यतः खात तस्मादाहुर्मुखं बुधा. ।' इति निरुक्तम् । 'मुखमुपाये प्रारम्भे श्रेष्ठे नि.सरणास्ययोः ।' इति—(अने० स० पृ० ४ श्लोक २४) । अधिकाङ्ग, अधिकाङ्गम् = सारसतम् । "कमरपट्टी" इति लोके । यत्तु मध्येस-कञ्चुका । बध्नन्ति तत्सारसनमधिकाङ्ग ' इति—(अम० ना० लि० पृ० २८६ श्लोक ६३) । क्वचित्तु 'सारसनाधिपाङ्गे' इति पाठ । यत्कात्य —'अधिपाङ्ग सारसनम्' इति । दुर्गस्तु—'तच्च सारसन ज्ञेय धिपाङ्गं च निबन्धनम् ।' इति । 'अधिकाङ्ग सारसन मध्ये धार्यं सकण्टकै ।' इति—(वै० पृ० ११७ श्लोक १५६) । इहामर पुस्त्व, यादवस्तु क्लीबत्व पठति, अतएव पुन्नपुसकलिङ्गो बोध्यः । सयुग, संयुगम् = युद्धम्, आयोधनम्, प्रहरणक्रिया । 'सम्प्रहाराभिसम्पातकलिसस्फोट-संयुगा ।' इति—(अम० ना० लिं० पृ० २९८ श्लोक १०५) । पद्मराग, पद्मरागम् = रक्तवर्ण-मणिविशेष., माणिक्यम् । "माणक" इति लोके । 'शोणरत्न लोहितक पद्मराग ' इति—(अम० ना० लिं० पृ० ३३२ श्लोक ९२) । भग, भगम् = रवि, योनिश्च । 'भग श्रीर्योनिवीर्येच्छाज्ञान-वैराग्यकीर्तिषु । महात्म्यैश्वर्य्ययत्नेषु धर्मे मोक्षे च, ना रवौ ।' इति—(मे० पृ० २२ श्लोक १२) । युग, युगम् = रथहलाद्यङ्गम् । "जूआ" इति लोके । युग्म च । 'युगो रथहलाद्यङ्गे, न

द्वयोस्तु कृतादिषु । युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च ।' इति--(मे० पृ० २३ श्लोक १७)। टङ्क, टङ्कम्=खनित्रकम्, खड्गभेद, जघाया च । टङ्कोऽस्त्री स्यात् खनित्रके । खड्गभेदे च जघायाम्' इति—(मे० पृ० २२ श्लोक ५)। उद्योग, उद्योगम्=उद्यम, यत्न, चेष्टा, पराक्रम । 'उद्योग प्रौढिमान्नेऽपि' इति—(श० र० स० पृ० ६३ प० १४)। शृङ्ग, शृङ्गम्=विषाणम्। "सीग" इति लोके । कूर्चशीर्षक च । 'शृङ्ग प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयत्रके । विषाणोत्कर्षयोश्चाथ शृङ्ग कूर्चकशीर्षके ।' इति—(मे० पृ० २३ श्लोक २५-६)। निदाघ, निदाघम्=ग्रीष्मकाल, उष्णम्, स्वेदजल च । 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि ।' इति—(मे० पृ० २६ श्लोक ८)।

अथाधुना चान्तादीन् बान्तान्तान् क्रमसहितान् पुन्नपुसकलिङ्गवाचकशब्दानाह हेम—(अभि० स० लि० पृ० ७, ८ श्लोका ९८ त १०८ या०)।

क्रकच–कवच–कूर्चा–ऽर्धर्च–पुच्छो–ञ्छ–कच्छा :
व्रज–मुटज–निकुञ्जौ कुञ्ज–मूर्जा–ऽम्बुजौ च ॥१२॥

ध्वज–मलयज–कूटा: कालकूटा–ऽऽरकूटौ
कवट–कपट–खेटाः कर्पटः पिष्ट–लोष्टौ ।
नट–निकट–किरीटाः कर्वटः कुक्कुटा–ऽट्टौ
कुट–यकुट–विटानि यङ्कटः कोट्ट–कुष्ठौ ॥१३॥

कमठो वारुण्ड–खण्ड–षण्डा
निगडा–ऽऽक्रीड–नड–प्रकाण्ड–काण्डा: ।
कोदण्ड–तरण्ड–मण्ड–मुण्डा
दण्डा–ऽण्डौ दृढ–वारबाण–बाणाः ॥१४॥

---

पाणिनीयेऽपि—(१) (व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छ.) ॥ एते पुन्नपुसकयो स्युः। कुथ, कुथम्=वर्णकम्बल । दर्पः, दर्पम्=अहङ्कारः । अर्भ, अर्भम्=शिशुः, कुशश्च । दर्भ, दर्भम्=कुशाख्यशष्पम् । शे० उ० । सि० कौ० पृ० ४०४ सू० २८० ।

(२) (टोप :) ॥ (कुटकूटककटकवाटकर्पटनटनिक्टकीटकटानि नपुसके च) ॥ एतानि नपुसके । चात्पुसि स्युः । कवाटः, कवाटम्=कपाट । कीट, कीटम्=क्षुद्रजन्तु । शे० उ० । सि० कौ० पृ० ३९९ सू० ६५ ।

पाणिनीयेऽपि—(३) (दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशाङ्कुशकुलिशा) ॥ एते पुन्नपुसयो. स्यु । शवः, शवम्=मृतशरीरम् । कुश=रामसुतः । "कुशो रामसुते दर्भे योक्त्रे द्वीपे कुश जले ।" इति विश्व । शलाका वाची तु स्त्रियाम् । तथा च जनपदादिसूत्रेणायो विकारे ङीषि कुशी । दारुणि तु टापा–कुशा । "वनस्पत्याः

कार्षापण–श्रवण–पक्वण–कङ्कणानि
द्रोणा–ऽपराह्ण–चरणानि तृण सुवर्णम् ।
स्वर्ण–व्रणौ वृषण–भूषण–दूषणानि
भाण–स्तथा किण–रण–प्रवणानि चूर्णः ॥१५॥

तोरण–पूर्त्त–निकेत–निवाताः
पारत–मन्त–युत–प्रयुतानि ।
क्ष्वेडित–मक्षत–दैवत–वृत्तै–
रावत–लोहित–हस्त–शतानि ॥१६॥

व्रतो–पवीतौ पलितो वसन्त–
ध्वान्ता–ऽयुत–द्यूत–घृतानि पुस्तः ।
शुद्धान्त–बुस्तौ रजतो मुहूर्त्त–
द्वियूथ–यूथानि वरूथ–गूथौ ॥१७॥

प्रस्थं तीर्थं प्रोथ–मलिन्दः
ककुदः कुकुदा–ऽष्टापद–कुन्दाः ।

---

स्थ ता मा याति" श्रुति. । अत क्रमीति सूत्रे कुशाकर्णीष्विति प्रयोगश्च । व्याससूत्रे च—"हानौ तूपायनशब्दे शेषत्वात्कुशाच्छन्दः" इति । तत्र शारीरिकभाष्येऽप्येवम् । एव च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते "आच्छन्द" इत्याङ्प्रश्लेषादिपरो भामतीग्रन्थ प्रौढिवादमात्रपर इति विभावनीय बहुश्रुतैः ॥ कुशम्=जलम् । शे० उ० । सि० कौ पृ० ४०४ सू० १२८ ।

(४) (णोनध) ॥ (कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचर्णतृणानि नपुसके च) ॥ एतानि नपुसके। चात्पुसि स्यु । विषाण, विषाणम्=पशुश्रृङ्गम् । शे० उ० । सि० कौ० पृ० ४०० सू० ६६ ।

(५) (बाणकाण्डौ नपुसके च) ॥ एतौ नपुसके। चात्पुसि स्त । व्या० उ० । सि० कौ० पृ० ३९९ सू० ४७ ।

(१) (द्रोणाढकौ नपुसके च) ॥ एतौ नपुसके । चात्पुसि स्त । व्या० उ० । सि० कौ० पृ० ४०१ सू० १०३ ।

(२) (शतायुतप्रयुता पुसि च)॥ एते पुसि । चान्नपुसके स्युः । व्या० उ० । सि०कौ०पृ० ४०२ सू० १४६ ।

(३) (घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिता ) ॥ एते पुन्नपुसकयो स्युः । क्ष्वेलित, क्ष्वेलितम्=सिंहनादविशेष । शे० उ० । सि० कौ० पृ० ४०४ सू० १७८ ।

(४) (तीर्थप्रोथयूथगाथानि नपुसके च) ॥ एतानि नपुसके । चात्पुसि स्यु । गाथ, गाथम्= शे० उ० । सि० कौ० पृ० ४०० सू ७२ ।

गुद–दोहद–कुमुद–च्छद–कन्दा–
ऽर्बुद–सौध–मथो–त्सेध–कबन्धौ[1] ॥१८॥
श्राद्धा–ऽऽयुधा–ऽन्धौ–षध–गन्धमादन[2]–
प्रस्फोटना लग्न–पिधान–चन्दना. ।
वितान–राजादन–शिश्न–यौवनाः
पीनो–दपाना–ऽसन–केतना–ऽशनाः ॥१९॥
नलिन–पुलिन–मौना वर्द्धमान समानौ–
दन–दिन–शतमाना हायन–स्थान–मानाः ।
धन–निधन–विमाना–स्ताडन–स्तेन–वस्ना
भवन–भुवन–यानो–द्यान–वातायनानि ॥२०॥
अभिधान–द्वीपिनौ निपानः
शयनं लशुन–रसोन–गृञ्जनानि ।
खलिन–खलीना–ऽनुमान–दीपाः[3]
कुणप–कुतपा–ऽऽवाप–चाप–शूर्पाः ॥२१॥
स्तूपो–डुपौ विटप–मण्डप–शष्प–बाष्प–
द्वीपानि विष्टप–निपौ शफ–डिम्ब–बिम्बाः ।

एषा व्याख्या—

क्रकचेति । ध्वजेति । कमठ इति । कार्षापणेति । तोरणेति । व्रतेति । प्रस्थमिति ।

---

पाणिनीयेऽपि—(१) (कबन्धौषधायुधान्ता) ॥ एते पुन्नपुंसकयो स्यु । व्या० उ० । सि० कौ० पृ० ४०४ सू० १८१ ।

(२) (नोऽघ) ॥ (मा ण्यानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसम्भावनविभावनविमानानि नपुंसके च) ॥ एतानि नपुंसके । चात्पुंसि स्युः । आलान, आलानम् = करिणो बन्धनस्तम्भः, गजबन्धनरज्जुश्च । वसन, वसनम् = छादनम्, वस्त्रम्, निवास, स्त्रीकटिभूषण च । विभावनः, विभावनम् = निष्पत्ति । सभावन, सभावनम् । शे० उ० । सि० कौ० पृ० ४०० सू० ७५ ।

(३) (पोपध) ॥ (शूर्पकुतपकुणपदीपविटपानि नपुंसके च) ॥ एतानि नपुंसके । चात्पुंसि स्युः । व्या० उ० । सि० कौ० पृ० ४०० सू० ७८ ।

श्राद्धेति। नलिनेति। अभिधानेति। स्तूपेति च। इह गुदादीन् सौधान्तान् हित्वा ककचादिषु बिम्बान्तेषु शेषेषु इतरेतरयोगो द्वन्द्व। गुदादिषु सौधान्तेषु तु समाहारो द्वन्द्वः। एते ककचादयो बिम्बान्ता शब्दा पुन्नपुसकलिङ्गा भवन्ति। ककच, ककचम्=करपत्रम्। "आरा" इति लोके। 'ककच करपत्रेऽस्त्री, ग्रन्थिलाख्यतरौ पुमान्।' इति—(मे० पृ० २८ श्लोक १४)। काष्ठादिविदारणशस्त्रमेतत्। "करोत" इत्यपि लोके। कवचः, कवचम्=सन्नाह, तनुत्रम्। "बख्तर" "झिलिम" वा इति लोके। 'उरश्छद कङ्कटको जगर कवचोऽस्त्रियाम्।' इति—(अम० ना० लि० पृ० २८६ श्लोक ६४)। 'कवचो गर्दभाण्डे च सन्नाहे पटहेऽपि च।' इति च-(मे० पृ० २८ श्लोक १३)। कूर्च, कूर्चम्=भ्रुवोर्मध्यम्, दीर्घश्मश्रु, कैतव च। 'कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे।' इति—(मे० पृ० २७ श्लोक ३)। अर्धर्च, अर्धर्चम्=ऋचोऽर्द्धम्। अर्धं चासौ ऋक् च समासान्तोऽत्। "आधी ऋचा" इति लोके। 'अर्धर्चादिगणे प्रोक्तम् सर्वं नृक्लीबलिङ्गकम्।' इति—(वै० पृ० २९१ श्लोक. २८)। पुच्छ, पुच्छम्=लाङ्गूल, पश्चात्प्रदेशश्च। 'पुच्छ पश्चात्प्रदेशे, स्याल्लाङ्गूले पुच्छमिष्यते।' इति—(मे० पृ० २९ श्लोक ५)। 'पुच्छोऽस्त्री लूमलाङ्गूले' इति च—(अम० ना० लि० पृ० २८२ श्लोक ५०)। उञ्छ, उञ्छम्=मुनिवृत्तिः, धान्यकणोच्चय, उञ्छशीलम्, ऋतम्, एकैकगुडकोच्चयनमुञ्छः। 'उञ्छस्तु मुनिवृत्तौ स्यात्' इति—(श० र० स० पृ० ७४ प० ७)। कच्छ, कच्छम्=पार्श्वम्, कक्षा। "काच्छ" इति भाषाप्रसिद्ध परिधानाञ्चलम्। 'जलप्रायमनूप स्यात्पुसि कच्छस्तथाविध॥' इति—(अम० ना० लिं० पृ० ११३ श्लोक १०)। 'कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च। कच्छास्तु देशे, कच्छा स्यात्परिधानापराञ्चले। चीर्य्यां वाराह्याम्' इति—(अने० स० पृ० ६ श्लोक ६३)। 'त्रिषु' इत्यस्य बाधनार्थं 'पुंसि' इति। 'कच्छमनूपम्' इति च बोपालित' इति—(अम० सु० व्या० पृ० ११३ स्त० २ पं० २६)। परिधानापराञ्चले यथा—'प्रलम्बककच्छा किल दाक्षिणात्याः' इति। अत्र स्मृति—'वामे पृष्ठे तथा नाभौ कक्षात्रयमुदाहृतम्। एभिः कक्षै परीधत्ते यो विप्र स शुचि स्मृत।' इति—(श० चि० पृ० ४५६ स्तं० २ प० ११तः)। चीरी=पक्षिविशेष। वाराही=वराहाक्रान्ता ओषधी। इत्यनेकार्थकैरवाकरकौमुदी' इति—(अम० सु० व्या० टि० पृ० ११३ स्त० २ प० ३८)। व्रजः, व्रजम्=निवहः, गोष्ठम्, पन्थाश्च। 'व्रजो गोष्ठाध्ववृन्देषु' इति—(मे० पृ० ३० श्लोक. १५)। उटज, उटजम्=तापसपर्णकुटी, मुनीनां तृणपर्णादिरचितालय, पर्णशाला। 'मुनीनां तु पर्णशालोटजोऽस्त्रियाम्।' इति—(अम० ना० लि० पृ० ११८ श्लोक ६)। 'उटस्तृणपर्णादि.' इति देशीकोशः' इति—(अम० सु० व्या० पृ० ११८ स्त० २ प० ३५)। तथा च प्रयोग.—'सौधजालमुटजेषु विस्मृतम्' इति रघु —इति मुकुट' इति—(अम० सु० व्या० टि० पृ० ११८ स्त २ प० ४१)। निकुञ्ज., निकुञ्जम्=लतादिपिहितस्थलम्, वृक्षवृतान्तरम्। 'निकुञ्जोऽस्त्री कुञ्जो

वृक्षवृतान्तरे ।' इति––(वै० पृ० ४१ श्लोक १०) । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥' इति च––(अम० ना० लि०पृ० १२७ श्लोक ८) । कुञ्ज, कुञ्जम् = गह्वरम्, समन्ताल्लतादिभिराच्छादितस्थानविशेष, हस्तिहनुश्च । 'कुञ्जोऽस्त्रिया निकुञ्जे च हनौ दन्ते च दन्तिनाम् ।' इति––(मे० पृ० ३० श्लोक ६) । ऊर्ज, ऊर्जम् = कार्तिकमास, जल च । 'अथोर्ज कार्तिकिकबलोत्साहेषु कीर्तित । ऊर्ज जले भवेत् क्लीबम्' इति––(श० र० स० पृ० ७६ प० २, ३) । अम्बुज, अम्बुजम् = कमलम्, निचुलश्च । 'अम्बुजो निचुले पुसि, कमले तु नपुसकम् ।' इति––(मे० पृ० ३१ श्लोक १९) । ध्वज, ध्वजम् = चिह्नविशेष, पताका च । 'ध्वज स्याच्छौण्डिके पुमान् । न स्त्रिया तु पताकाया खट्वाङ्गे मेढ्रचिह्नयो ।' इति––(मे० पृ० ३० श्लोक १०) । मलयज, मलयजम् = चन्दनम् । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।' इति––(अम० ना० लि० पृ० २४७ श्लोक १३१) । कूट, कूटम् = निश्चल, राशिश्च । 'कूटोऽस्त्री निश्चले राशौ सीरावयवयत्रयो । मायाद्रिशृङ्गयोस्तुच्छे लौहमुद्गरदम्भयो । अनृतेऽपि' इति––(श० र० स० पृ० ८४ प० ३) । कालकूट, कालकूटम् = स्थावरे तीव्रविषविशेष । 'पुसि क्लीबे च काकोल–कालकूटहलाहला ।' इति––(अम० ना० लि० पृ० ६० श्लोक १०) । आरकूट, आरकूटम् = पित्तलम् । ''पीतल'' इति लोके । 'रीति स्त्रियामारकूटो न स्त्रियाम्' इति– (अम० ना० लि० पृ० ३३३ श्लोक ९७) । कवट, कवटम् = । कपट, कपटम् = व्याज:, दम्भ:, छद्म । 'कपटोऽस्त्री, व्याजदम्भोपधयश्छद्मकैतवे ।' इति––(अम० ना० लि० पृ० ८२ श्लोक ३०) । खेट, खेटम् = चर्म, अल्पपुर च । 'खेट कफे ग्रामभेदे चर्मण्यस्त्र्यर्वति त्रिषु ।' इति––(मे० पृ० ३४ श्लोक १०) । 'पुरेऽल्पे खेटमस्त्रियाम् ।' इति च––(वै० पृ० २३२ श्लोक. २४) । कर्पट, कर्पटम् = वस्त्रविशेष, प्रस्वेदादिमार्जनार्थहस्तस्थवस्त्रखण्डम् । 'समौ नक्तककर्पटौ ।' इति––(अम० ना० लि० पृ० २४२ श्लोक: ११५) । 'कर्पट त्वथ वासासि ।' इति च––(श० र० स० पृ० ८८ प० ३) । पिष्ट:, पिष्टम् = अपूप, सीसकम्, मानविशेष., आढक, कल्कश्च । 'नाग बहुमल चीन पिष्ट योगेष्टसीसकम् ।' इति––(प० र० मा० पृ० २३ प० ६) । 'पिष्टं कल्को विनीयश्च' इति––(प० र० मा पृ० ३९ प० २३) । 'पात्र शूर्पावर पिष्ट सेहिका आढकोऽस्त्रियाम् ।' इति––(वै० पृ० १९० श्लोक ५५) । लोष्ट, लोष्टम् = मृत्सस्थानविशेष., मृत्तिकाखण्डम् । 'लोष्टानि लेष्टव. पुसि' इति––(अम० ना० लि० पृ० ३०५ श्लोक: १२) । पुस्यपि । 'लेष्टु: षण्ढेऽपि लोष्ट. स्यात्' इति च बोपालित' इति––(अम० सु० व्या० पृ० ३०५ स्त० १ पं० १२-३) । नट, नटम् = नर्तकविशेष । 'रङ्गावतारी शैलूषो नटो भरतभारतौ ।' इति वाचस्पति:' इति––(अम० सु० व्या० पृ० ३४२ स्त० २ प० १२) । 'नटी नल्यौषधे स्त्री स्यात्, शैलूषाशोकयो पुमान् ।' इति च––(मे० पृ० ३४ श्लोक १९) । निकट:, निकटम् = समीपम् । 'समीपे निकटासन्नसन्निकृष्टसनीडवत् ।' इति––(अम० ना०

लि० पृ० ३७१ श्लोक ६६) । किरीट, किरीटम् = मुकुटम्, शिरोभूषणम् । 'अथ मुकुट किरीट पुन्नपुसकम् ।' इति—(अम० ना० लि० पृ० २३८ श्लोक १०२ ) । कर्वट, कर्वटम् = द्विशतग्राममध्ये मनोरमस्थानम् । 'कर्वटोऽस्त्री द्रोणमुख पट्टन पुटभेदनम् ।' इति—(वै० पृ० १५६ श्लोक ३) । कुक्कुट, कुक्कुटम् = ताम्रचूड, चरणायुध । "मुर्गा" इति लोके । 'कुक्कुटचनृतचर्य्याया, पुसि स्याच्चरणायुधे ।।' इति—(मे० पृ० ३६ श्लोक ३८) । अट्टः, अट्टम् = हर्म्यपृष्ठोपरिनिकेतनम्, क्षौमम् । "अटारी" इति लोके । ओदन च । "भात" इति लोके । 'अट्टं भक्ते च शुष्के, ना क्षौमेऽत्यर्थे गृहान्तरे ।' इति—(मे० पृ० ३३ श्लोक १) । 'स्यादट्ट क्षोममस्त्रियाम् ।' इति—(अम० ना० लि० पृ० १२० श्लोक १२) । 'क्षौम' अपि। साहचर्य्यादट्टोऽप्यस्त्रियाम् । अट्टोऽट्टालिका । कुट, कुटम्—घट, हलाङ्गविशेषश्च । 'कुटः कोटे पुमा,—नस्त्री घटे, स्त्रीपुसयोर्गृहे ।' इति—(मे० पृ० ३४ श्लोक ६) । यकुट, जकुट, यकुटम्, जकुटम् = मलय, श्वा, वार्त्ताकुपुष्प च । 'जकुट वार्त्ताकुपुष्पे, जकुटो मलये शुनि ।' इति—(मे० पृ० ३६ श्लोक ४२) । 'वार्त्ताकुपुष्पे जकुट, पुसि स्यान्मलये शुनि ।' इति च—(श० र० स० पृ० ८६ प० ३) । विटः, विटम् = धूर्त्त, महाधूर्त्त, पर्वत, लवण च । 'वातपुत्रे विटधरौ' इति । 'विटोऽद्रौ लवणे षिड्गे मूषिके खदिरेऽपि च ।' इति च—(हा० व० पृ० ४०७ श्लोकः २२८) । त्र्यङ्कट, त्र्यङ्गटः, त्र्यङ्कटम्, त्र्यङ्गटम् = शिक्यभेदः, धौताञ्जनी च । त्र्यङ्कट शिक्यभेदेऽपि धौताञ्जन्या च न द्वयो ।' इति—(मे० पृ० ३६ श्लोक ४३) । 'त्र्यङ्गट शिक्यभेदे स्याद् धौताञ्जन्यामपि स्मृतम् ।' इति च—(अने० स० पृ० ६१ श्लोकः १६०) । कोट्ट, कोट्टम् = गिर्य्यादिभिर्दुर्गम पुरम् । "किल्ला" "गढ" "कोट" इति च भाषाप्रसिद्धं राज्ञा वासस्थानम् । 'कोट्टारघट्टहट्टाश्च' इति पुस्काण्डेऽमर' इति—(अम० ना० लि० पृ० ४५४ श्लोक १८) । हेमस्तु पुस्काण्डे पठति क्लीबलिङ्ग तथा चाह—'स्कन्धावारो राजधानी कोट्टदुर्गे पुन. समे ।' इति—(अभि० सं० अभि० चिं० पृ० ३८ श्लोक. ६७३) । कुष्ठः, कुष्ठम् = रोग, गन्धद्रव्यविशेषश्च । 'अथ कुष्ठ भेषजरोगयो. ।' इति—(अने० ति० पृ० १२ श्लोक ७३) । 'कुष्ठ रोगे पुष्करेऽस्त्री' इति—(मे० पृ० ३९ श्लोक ३) । 'गदे च कुष्ठमस्त्री स्यात्' इति च—(ना० र० मा० पृ० २१ श्लोक. १९) । कमठः, कमठम् = कच्छपः, भाण्डभेदश्च । 'कमठ कच्छपे पुसि, भाण्डभेदे नपुसकम् ।' इति—(मे० पृ० ३९ श्लोक १२) । वारुण्ड, वारुण्डम् = सेकपात्रम्, नौस्थजलनिःसारणभाजनम्, नेत्रमलम्, कर्णमलं च । 'वारुण्डी द्वारपिण्ड्या स्त्री, फणिनां राजके पुमान् । न स्त्रिया सेकपात्रे च मलेऽक्ष्ण श्रवणस्य च ।' इति—(मे० पृ० ४३ श्लोक ३३) । खण्ड, खण्डम् = शकलम्, अर्द्धम्, इक्षुविकारविशेषश्च । 'खण्डोऽस्त्री शकले, नेक्षुविकारमणिदोषयो । खण्ड पानान्तरे भेदे' इति—(मे० पृ० ४१ श्लोक. ७, ८) । षण्डः, षण्डम् = पद्मादिसघात. । 'षण्डं पद्मादिसघाते न स्त्री स्याद् गोपतौ पुमान् ।' इति—(मे० पृ०

४२ श्लोक २६) । निगड, निगडम् = बन्धनविशेष । 'अन्दुको निगडोऽस्त्री स्यात्' इति—(अम० ना० लिं० पृ० २७८ श्लोक. ४१) । आक्रीड, आक्रीडम् = उद्यानम्, राज्ञ क्रीडासाधन साधारण वनम्, लीलास्थान च । 'ज्ञेयमाक्रीडमुद्यानम्' इत्यमरमाला ।' इति—(अम० सु० व्या० पृ० १२८ स्त० १ प० ५, ६) । अमरस्तु पुस्त्व प्राह—'पुमानाक्रीड, उद्यान राज्ञ. साधारण वनम् ।' इति च—(अम० ना० लिं० पृ० १२८ श्लोक ३) । नड, नडम् = तृणभेद, धमन, अन्तरविवरम् । 'नल' इति ख्यात । 'नडस्तु धमन पोटगल' इति—(अम० ना० लि० पृ० १८३ श्लोक १६२) । 'तृणभेदे नडो मत ।। नलवच्छब्दभेदज्ञै' इति च—(श० र० स० पृ० ६७ प० १८-९) । प्रकाण्ड., प्रकाण्डम् = प्रशस्तवाचकम्, तरोर्मूलमारभ्य शाखापर्यन्तभाग, तरोर्मूलस्कन्धयोरन्तर च । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इति—(अम० ना० लि० पृ० ५३ श्लोक २७) । 'प्रकाण्ड' पुस्यपि । 'अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयो ।' इति रभसः' इति—(अम० सु० व्या० पृ० ५३ स्त० २ प० २०-१) । 'अस्त्री प्रकाण्ड स्कन्ध. स्यान्मूलाच्छाखावधिस्तरो. ।' इति—(अम० ना० लिं० पृ० १३० श्लोक १०) । 'प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तरो । शस्त' इति च—(मे० पृ० ४२ श्लोक ३१) । काण्ड., काण्डम् = शर । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ।' इति—(अम० ना० लि० पृ० ४०४ श्लोक. ४३) । 'काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयो । कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न स्त्रियाम् ।' इति—(मे० पृ० ४० श्लोक. २, ३) । 'काण्ड चावसरे बाणे नाले स्कन्धे च शाखिनाम् । स्तम्बे रहसि वर्गे च' इति च धरणि.' इति—(अम० सु० व्या० पृ० ४०४ स्त० २ प० ११-२) । कोदण्डः, कोदण्डम् = नीवृद्विशेषो भूम्नि, शरश्च । 'अथ कोदण्डं चापे ना नीवृदन्तरे । भूम्नि' इति—(मे० पृ० ४२ श्लोकः २८) 'कोदण्ड कार्मुके देशभेदभूतलयोरपि ।' इति च—(अने० स० पृ० ६३ श्लोकः १८३) । तरण्ड, तरण्डम् = नौका "नाव" इति लोके । 'तरण्डो बडिशीसूत्रबद्धकाष्ठादिके प्लवे । नौकायामपि न स्त्री स्यात्' इति—(मे० पृ० ४२ श्लोक २९) । मण्ड:, मण्डम् = भक्तादेर्निर्यासः, सारम्, पिच्छ च । 'सर्वरसाग्रे मण्डमस्त्रियाम् ।' इति—(अम० ना० लिं० पृ० ३१६ श्लोक ४९) । 'मण्ड पञ्चाङ्गुले शाकभेदे क्लीब तु मस्तुनि । आमलक्या स्त्रियां मण्डाऽथाऽस्त्रियां सारपिच्छयोः ।' इति च—(मे० पृ० ४२ श्लोक. २१) । मुण्ड, मुण्डम् = शिर, मूर्धा । 'मुण्डो दैत्यान्तरे राहुग्रहे ना, मुण्डिते त्रिषु । मुण्डा मुण्डीरिकायां स्यात्स्त्रिया,—मस्त्री तु मूर्धनि ।' इति—(मे० पृ० ४२ श्लोक. २२) । दण्ड, दण्डम् = लगुड, दमनार्थो निग्रहः । 'दण्डोऽस्त्री लगुडे' इति—(मे० पृ० ४१ श्लोक १५) । 'दण्डो यमे मानभेदे लगुडे दमसैन्ययो । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि । अभिमाने ग्रहे दण्डश्चण्डाशोः पारिपार्श्वके ।' इति च—(वि० प्र० पृ० ४४ श्लोक १२) । अण्डः, अण्डम् = पक्ष्यादिप्रसव, पेशीकोश. । "अण्डा" इति लोके । मुष्कश्च । 'अस्त्रियो मुष्ककोशाण्डा' इति—(वै० पृ०

१७८ श्लोकः ६३) । दृढः, दृढम् = अविनष्टः । 'दृढः प्रगाढे स्थूले च नितान्ते बलवत्यपि ।' इति--(श० र० स० पृ० १०१ पं० १७) । 'दृढं शक्ते भृशे स्थूले' इति--(अने० स० पृ० १२ श्लोकः १३१) । 'दृढं स्थूले नितान्ते च प्रगाढे बलवत्यपि ।' इति च--(मे० पृ० ४३ श्लोकः २) । वारबाण, वारबाणम् = कञ्चुकम् । 'कञ्चुको वारबाणोऽस्त्री यत्तु मध्ये सकञ्चुका. ।' इति--(अम० ना० लिं० पृ० २८६ श्लोक. ६३) । अथ चोलकाकृतिसन्नाहः । बाण, बाणम् = शर, पुष्पविशेषश्च । 'बाण. स्याद्गोस्तने दैत्यभेदे केवलकाण्डयो. । बाणा तु बाणमूले स्त्री, नीलझिण्टचा पुनर्द्वयो ।' इति--(मे० पृ० ४६ श्लोकः २७) । 'बाणो वृक्षान्तरे शरे । शरस्यावयवे दैत्ये कथाकादम्बरीकृति ।' इति च--(अने० ति० पृ० ३० श्लोकः २६८) । कार्षापण, कार्षापणम् = कार्षिकः, रजतरूप्यम्, रूप्यमानम् । 'कार्षापण कार्षिकः स्यात्' इति--(अम० ना० लि० पृ० ३३१ श्लोक ८८) । 'कार्षापणोऽस्त्री कार्षिके पणषोडशकेऽपि च ।' इति च--(मे० पृ० ५१ श्लोक ९३) । श्रवण., श्रवणम् = कर्ण. । "कान" इति लोके । 'कर्णे पुन्नपुंसकयो । श्रवणावनिलस्य च' इति दर्शनात् । 'न स्त्रियां श्रवण. कर्ण.' इति हेमनाममालाभिधानम्' इति च--(श० चि० पृ० ६३१ स्तं २ पं० ११-२-३) । पक्वणः, पक्वणम् = भिल्लग्रामः, अन्त्यजालयश्च । 'पक्वण शबरावासे' इति--(श० र० स० पृ० ११३ पं० ११) । 'पक्वणोऽस्त्र्यन्त्यजालय. ।' इति च--(वै० पृ० १३८ श्लोक. ३२) । कङ्कणः, कङ्कणम् = करभूषणम् । 'कङ्कण करभूषणम् ।' इति--(अम० ना० लि० पृ० २४० श्लोकः १०८) । पुंस्यपि । 'कङ्कणो ना प्रतीसर.' इति रत्नकोश.' इति--(अम० सु० व्या० पृ० २४० स्तं० १ पं० २३) । 'कङ्कणं मण्डने हस्तसूत्रे च भुजभूषणे ।' इति च--(अने० ति० पृ० ४६ श्लोक ८२) । द्रोण., द्रोणम् = परिमाणविशेषः, आढक । 'द्रोणोऽस्त्रियामाढके स्यादाढकानां (दि) चतुष्टये ।' इति--(मे० पृ० ४६ श्लोकः १७) । अपराह्णः, अपराह्णम् = दिनस्यापरभागः, दिनान्तांश । 'सायाह्नोऽप्यपराह्णोऽस्त्री' इति--(वै० पृ० २२ श्लोकः ६५) । चरणः, चरणम् = पाद. । "पैर" इति लोके । 'चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च । भ्रमणे भक्षणे चा(वा)पि नपुंसक उदाहृतः ।' इति--(मे० पृ० ४८ श्लोक. ४८) । तृणः, तृणम् = शष्पम्, तृणमात्रम्, तृणविशेषो नडादिः । 'तृणं तु यवसे मतम् । इति--(श० र० स० पृ० १०५ पं० १६) । सुवर्ण, स्वर्णः, सुवर्णम्, स्वर्णम् = कनकम् । "सोना" इति लोके । हेम्नोऽक्षः, कर्षः । अशीतिरक्तिकापरिमितं स्वर्णं च । 'सुवर्णो ना स्वर्णकर्षे सुवर्णाख्यमरवान्तरे । स्त्री कृष्णागुरुणि, क्लीबे काञ्चने हरिचन्दने ।' इति--(मे० पृ० ५१ श्लोकः ८४) । व्रण, व्रणम् = क्षतम् । "घाव" इति लोके । 'व्रणः क्षते निगदितः' इति--(श० र० स० पृ० १०७ पं० ६) । 'व्रणोऽस्त्रीयामीर्ममरुः क्लीबे' इति--(अम० ना० लि० पृ० २२० श्लोकः ५४) । 'व्रणोऽपीर्म-

ऽपि न स्त्रियौ ।' इति च—(वै० पृ० १२२ श्लोक २१७) । वृषण, वृषणम् = अण्ड, अण्ड-कोश । 'तथाण्डे वृषणो मत ।' इति—(श० र० स० पृ० ११६ प० ३) । माधवस्तु क्लीबलिङ्गमाचष्टे—'मुष्कमण्डमपान च वृषण फलकोशकम् ।' इति च—(प० र० मा० पृ० २६ प० २१) । भूषण-, भूषणम् = अलङ्कार । "गहना" इति लोके । 'भूषण स्यादलङ्कारे' इति—(श० र० स० पृ० ११४ प० ७) । 'अलङ्कारस्त्वाभरण भूषणम्' इति च—(वै० पृ० १६६ श्लोक १३३) । दूषण, दूषणम् = राक्षसविशेष, खरसेनापति, दोषश्च । भाण, भाणम् = नाटकभेद, नाटकादिदशरूपकान्तर्गतरूपकविशेष. । 'भाणो नाटकभेदे स्यात्' इति—(श० र० स० पृ० १०६ श्लोक १९) । 'नाटक नाटिका भाण' इति च–(वै० पृ० १४४ श्लोक ० १००) । किण, किणम् = मासग्रन्थिभेद, शुष्कव्रण, स तु खनित्रदण्डादिसघर्षणात्करतलादौ स्पष्ट । निघर्षणजव्यथाचिह्नम् व्रणज चिह्न वा । "घट्टा" इति लोके । 'किणो रूढ व्रणस्थाने' इति । 'वेतालासनमित्येतदेकाङ्गुष्ठग्रहात्किण ।' इति च—(वै० पृ० १२२ श्लोक २१७) । रण, रणम् = युद्धम् । "लड़ाई" इति लोके । 'रण कोणे क्वणे पुसि, समरे पुन्नपुसकम् ।' इति—(मे० पृ० ४६ श्लोक २५) । प्रवण., प्रवणम् = चतुष्पथम्, क्रमनिम्नभूभागश्च । 'प्रवणो दक्षिणे प्रह्वे क्रमनिम्ने चतुष्पथे ।' इति—(वै० पृ० २६१ श्लोक ५३) । 'प्रवण क्रमनिम्नोर्व्यां प्रह्वे, ना तु चतुष्पथे ॥' इति—(अम० ना० लि० पृ० ४०६ श्लोक ५६) । 'प्रवण. क्रमनिम्नोर्व्यां प्रह्वे च स्याच्चतुष्पथे । आयत्ते च तथा क्षी(क्ष)णे प्रगुणे समुदाहृत ।' इति धरणि' इति—(अम० सु० व्या० पृ० ४०६ स्त० २ प० २१-२) । 'प्रवणो ना चतुष्पथे । क्रमनिम्नमहीभागोदारप्रह्वेषु च त्रिषु ।' इति च—(मे० पृ० ४९ श्लोक ५९) । चूर्ण, चूर्णम् = धूलिः, क्षारभेद., वासयुक्तिश्च । 'चूर्णानि वासयोगा. स्यु' इति—(अम० ना० लि० पृ० २४८ श्लोक १३४) । वासे सुगन्धिकरणे योगा उपाया, पिष्टरज । 'चूर्णो धूलौ क्षारभेदे, चूर्णानि वासयुक्तिषु ।' इति—(मे० पृ० ४५ श्लोक १२) । 'चूर्णानि वासयोगा स्युश्चूर्णो धूलिः सशर्करा ।' इति च—(अने० समु० पृ० ३४ श्लोक ३८०) । तोरण, तोरणम् = निर्यूह, बहिर्द्वारम्, द्वारबन्ध, कन्धरा, पादपान्तर च । 'तोरणोऽस्त्री बहिर्द्वारम्' इति—(अम० ना० लि० पृ० १२२ श्लोक: १६) । 'तोरण द्वारबन्धे स्यात्तोरण पादपान्तरे ।' इति—(श० र० स० पृ० १११ प० १५) । 'कन्धरा तोरण कण्ठी' इति च—(हा० व० पृ० ४०४ श्लोक ७४) । पूर्त्त, पूर्त्तम् = खातादिकर्म, पूरितं च । 'खातादौ पूरिते पूर्त्तम्' इति—(त्रि० शे० पृ० ३३८ श्लोक १६९) । 'पूर्त्तं खातादिकर्मणि ।' इति—(अम० ना० लि० पृ० २५९ श्लोक २८) । 'पूर्त्तं त्रिषु पूरिते स्यात्, क्लीब खातादिकर्मणि ।' इति—(मे० पृ० ५६ श्लोक ३६) । निकेत, निकेतम् = गृहम् । "घर" इति लोके । 'निकेत सदने मतम् ।' इति—(श० र० स० पृ० १४५ श्लोक. १०) । निवात:, निवातम् = दृढसन्नाह, शस्त्राभेद्यवर्म, वातरहिताश्रयश्च ।

''निवातावाश्रयावातौ शस्त्राभद्य च वर्म यत् ।' इति--(अम० ना० लि० पृ० ४११ श्लोक ८४)। 'निवातो दृढसन्नाहे वातशून्येऽपि चाश्रये।' इति च—(मे० पृ० ६३ श्लोक ११९)। पारत, पारतम्=पारद । ''पारा'' इति लोके। 'रसेन्द्र पारद प्रोक्त पारतोऽपि निगद्यते ।' इति– (अम० सु० व्या० पृ० ३३५ स्त० १ प० १९, २०)। क्लीबेऽपि। 'पारद'पारतम्' इति च-- (श० भे० प्र० पृ० ५ श्लोक २०)। अन्त, अन्तम्=अवसानम्, शेषम्। 'अन्त स्वरूपे नाशे ना, न स्त्री शेषे,-ऽन्तिके त्रिषु।' इति--(मे० पृ० ५४ श्लोक २)। 'अथाऽस्त्रियाम्। अन्तो जघन्य चरमम्' इति च--(अम० ना० लि० पृ० ३७६ श्लोक. ८१)। युत, युतम्=युक्तम्, अपृथग्भूतम्, हस्तचतुष्टय च। 'युत हस्तचतुष्टये। स्त्री न्याययोषितो-र्युवित,-र्युतो युक्ते-ऽपृथग्गते ।' इति--(श० र० स० पृ० १३१ श्लोक ८, ९)। प्रयुत:, प्रयुतम्=दशलक्षाणि। 'शत सहस्त्र-मयुत निपुत प्रयुतार्ऽबुदे। व्यत्यासेन तु दृश्येते नियुतप्रयुते क्वचित्। 'प्रयुतनियुते' इत्यर्थं। इति-- (वै० पृ० १८८ श्लोक ३०)। शब्दार्थचिन्तामणौ तु तथैव दृश्येते। क्ष्वेडित, क्ष्वेडितम्= सिहनादविशेष.। 'क्ष्वडित सिहनादे स्यात्' इति--(श० र० स० पृ० १५७ प० १६)। 'नादोऽस्य (सिंहस्य) चुक्कार क्ष्वेडित च तत्।' इति च--(त्रि० शे० पृ० २८६ श्लोक. २)। अक्षतः, अक्षतम्=लाजा., भृष्टव्रीह्यादय। केचित्तु--अखण्डतण्डुला अक्षता--इत्याहु। 'अक्षतं न द्वयो पण्डे लाजेषु, त्रिष्वहिसिते। यवेऽपि क्वचित्' इति--(मे० पृ० ६० श्लोक ८०)। 'अक्षताश्चापि लाजेषु तण्डुलादावहिंसिते।' इति-- (श० र० स० पृ० १३६ प० ११)। 'क्ल्यक्षत तण्डुले धान्ये, न ना लाजेषु, ना यवे।' इति च--(वै० पृ० २५८ श्लोक: १४)। दैवत, दैवतम=देवता। 'वृन्दारका, दैवतानि पुंसि वा, देवता स्त्रियाम्।' इति—(अम० ना० लि० पृ० ५ श्लोक: ९)। वृत्त., वृत्तम्=पद्यम्, वृत्ति, चारित्रम्, शीलम्, वेदबोधिताचारस्य परिपालनम्, छन्दश्च। 'वृत्तोऽधी-तेऽप्यतीतेऽपि वर्त्तुलेऽपि मृते वृते। वृत्तेऽन्यलिङ्ग (त्रिलिङ्ग), वा क्लीबे छन्दचारित्रवृत्तिषु।' इति—(मे० पृ० ५८ श्लोक ६१)। पक्षे पुसि। 'वृत्त पद्ये चरित्रे, त्रिष्वतीते दृढनिस्तले।।' इति—(अम० ना० लि० पृ० ४१० श्लोक ७८)। 'आचारो वृत्तचारित्रचरित्रचरणानि च।' इति। 'वर्त्तुलं निस्तल वृत्त सुवृत्त परिमण्डलम्।' इति। 'वृत्त स्वरूपे चरिते वृत्तौ छन्दोविधासु च। त्रिष्वतीतदृढाधीतवर्त्तुलेषु' इति च—(वै० पृ० २३६ श्लोक. ७६)। ऐरावत, ऐरावतम्= इन्द्रहस्ती, महेन्द्रस्य ऋजुदीर्घशरासनं च। 'ऐरावतोऽभ्रमातङ्गे नारङ्गे लकुचद्रुमे। नागभेदे च पुसि स्याद्, विद्युत्तद्भेदयो स्त्रियाम्। नपुसकं महेन्द्रस्य ऋजुदीर्घशरासने।' इति—(मे० पृ० ६८ श्लोक १९२)। लोहितः, लोहितम्=शोणितम्, रक्तवर्णः, कुङ्कुमं च। 'लोहित रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने। पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति।' इति—(मे० पृ० ६५ श्लोक: १४८)। 'लोहितो मङ्गले नदे। वर्णभेदे, लोहितं तु कुङ्कुमे रक्तचन्दने।' इति च—(अने० सं० पृ० ७३ श्लोक: ३१०)। हस्त, हस्तम्=करः। ''हाथ'' इति लोके। 'हस्तः करे करिकरे सप्रकोष्ठकरेऽपि

च। ऋक्षे केशात्परो व्राते' इति—(मे० पृ० ५६ श्लोक ७५)। क्लीबेऽपि। 'हस्त चर्मप्रसेविकायाम्' इति शब्दार्थचिन्तामणौ दृश्यते । शत, शतम्=सख्याविशेष । "सौ" इति लोके । नक्षत्रविशेषश्च । 'शत सख्यान्तरे' इति—(श० र० स० पृ० १३३ प० १२)। 'शत सहस्रमयुत नियुत प्रयुत मतम् । स्त्री कोटिरर्बुदमिति क्रमाद् दशगुणोत्तरम् ।' इति च रत्नकोश' इति—(अम० सु० व्या० पृ० ४५७ स्त० २ प० ३६ त) व्रत:, व्रतम्=तप, ब्रह्मचर्यादिनियमः। कृच्छ्र चान्द्रायणादिक च। 'तपो व्रतोऽस्त्री कृच्छ्रोऽस्त्री तच्च चान्द्रायणादिकम् ।' इति—(वै० पृ० ९४ श्लोक १३६) । उपवीत, उपवीतम्=यज्ञसूत्रम्, उत्तरीयम् । "जनेऊ" इति लोके। 'उपवीत यज्ञसूत्र प्रोद्धृते दक्षिणे करे।' इति—(अम० ना० लि० पृ० २६५ श्लोक ४९)। 'उपवीतमुत्तरीये' इति—(श० र० स० पृ० १६० प० ३) । 'यज्ञोपवीतमुपवीते ब्रह्मसूत्रोत्तरीययो ।' इति च—(वै० पृ० २७४ श्लोक० १७) । पलित, पलितम्=पक्वकेश, केशपाक, शैलजम्, कर्दमश्च । 'पलित शैलजे तापे केशपाके च कर्दमे ।' इति—(मे० पृ० ६३ श्लोक १२३) । 'पलित जरसा शौक्लच केशादौ' इति—(अम० ना० लि० पृ० २१५ श्लोक. ४१) । 'केशादिशौक्लचे पलित शैलेये, ना तु कर्दमे।' इति च—(वै० पृ० २६१ श्लोक ५२) । वसन्त, वसन्तम्=ऋतुविशेष., देवपुत्रविशेषश्च । 'वसन्त ऋतुभिद्यपि ।' इति—(श० र० स० पृ० १५२ श्लोक. ९) । ध्वान्त , ध्वान्तम्=गाढान्धकार:। 'अन्धकारोऽस्त्रिया ध्वान्त तमिस्त्र तिमिर तम: ।' इति—(अम० ना० लि० पृ० ८७ श्लोक: ३) । साहचर्यादस्त्रियाम् । 'ध्वान्त गाढेऽन्धतमसि' इति च—(श० र० स० पृ० १२८ प० ५) । अयुत., अयुतम्=दशसहस्राणि । 'दश हजार' इति लोके। 'शतं सहस्रमयुतम् .. ।' इति—(वै० पृ० १८८ श्लोक. २८) । द्यूत., द्यूतम्=दुरोदरम्, द्यूतक्रीडनम् । "जुआ" "खेल" इति लोके । 'द्यूतोऽस्त्रियामक्षवती कैतव पण इत्यपि ।।' इति—(अम० ना० लि० पृ० ३५२ श्लोक. ४४) । घृत , घृतम्=आज्यम्, सर्पि । 'घी" इति लोके । 'तच्च लिङ्गान्तरेऽनुक्त सर्वमुक्त घृतादि च। तत्र केचिद् घृतादीना पुस्त्वाद्य वैदिक विदु ।।' इति—(वै० पृ० २९१ श्लोक २८-९) । कोशान्तरेऽप्येवमुक्तम् । पुस्त:, पुस्तम्=लेप्यादिकर्मविशेष:, पुस्तक च। 'पुस्त क्लीबे पुस्तके च लेप्यादिशिल्पकर्मणि ।' इति—(श० र० स० पृ० १२९ श्लोक: १४) । शुद्धान्त', शुद्धान्तम्=राज्ञा स्त्र्यागारम्, अन्त पुरम्, अवरोधनम्। राज्ञो रह: कक्षान्तरम्, भूपते गुह्यकक्षाभेदश्च । 'कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे ।' इति—(अम० ना० लि० पृ० ४०८ श्लोक ६६) । 'शुद्धान्तोऽन्त:पुरे गुह्यकक्षाभेदे च भूपतेः ।' इति चाजय.' इति—(अम० सु० व्या० पृ० ४०८ स्तं० १ प० २२-३) । बुस्त:, बुस्तम्= मांसशष्कुली, पक्वमांसविशेष:, भृष्टं मांसम्, स्थालीभृष्टमांसम्, मांसपिण्डविशेष:, पनसादिफलस्यासारभागश्च । 'वुस्तं दन्तोष्ठचादि' इत्येके । रजत:, रजतम्=रूप्यम्, श्वेतं च । 'रजतं

'त्रिषु शुक्ले स्यात्, क्लीब हारे च दुर्वर्णे ।' इति--(मे० पृ० ६४ श्लोकः १४४) 'श्वेत रूप्येऽपि' इति— (अम० ना० लि० पृ० ४१० श्लोकः ७९) । 'अथ रजत शोणिते ह्रदे । श्वेते हारेऽपि' इति च—(वै० पृ० २६२ श्लोक. ७०) । मुहूर्त्तं, मुहूर्त्तम् = द्वादशक्षणात्मक कालः, घटिकाद्वयम् । 'ते (क्षणा) तु मुहूर्त्तो द्वादशास्त्रियाम् ॥' इति—(अम० ना० लि० पृ० ४७ श्लोक ११) । यूथ, यूथम् = पशुसमूह. । 'सघसघातपुञ्जौघसार्थयूथकदम्बका ।' इति भागुरि' इति--(अम० सु० व्या० पृ० २०२ स्त० १ प० ३५-६) । 'यूथं तिरश्चा पुन्नपुसकम् ॥' इति--(अम० ना० लि० पृ० २०२ श्लोक ४१) । 'यूथ तिर्यक्समूहेऽस्त्री, पुष्पभेदे च योषिति ।' इति च--(मे० पृ० ७२ श्लोक ११) । वरूथ., वरूथम् = रथगुप्ति., परप्रहारणाभिघातरक्षार्थं रथसन्नाहवदावरणम्, चर्म, वेश्म च । 'वरूथो रथगुप्तौ स्याद् वरूथं चर्मवेश्मनो ।' इति—(मे० पृ० ७३ श्लोक. २१) । गूथ, गूथम् = विष्ठा । 'गूथ पुरीषं वर्च्स्कमस्त्री, विष्ठाविषे स्त्रियौ ।' इति—(अम० ना० लि० पृ० २२५ श्लोकः ६८) । प्रस्थः, प्रस्थम् = सानु, पर्वतसमभूभाग, मानभेदश्च । 'स्नु प्रस्थ सानुरस्त्रियौ ।' इति—(अम० ना० लि० पृ० १२५ श्लोक. ५) । 'प्रस्थोऽस्त्रिया मानभेदे सानावत्युच्चवस्तुनि ।' इति च—(मे० पृ० ७२ श्लोक. ९) । तीर्थं., तीर्थम् = घट, अवतार, नद्यादौ स्नानाद्यर्थमवतरणस्थानम्, पुष्करिण्यादि, पुण्यक्षेत्रम्, पुण्यस्थान च । 'घट्टोऽवतारस्तीर्थोऽस्त्री' इति । 'तीर्थं मंत्राद्युपाध्यायशास्त्रेष्वम्भसि पावने । पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयो ।' इति च—(वै० पृ० २२५ श्लोकः १३) । 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ ॥' इति—(अम० ना० लि० पृ० ४१२ श्लोक ८६) । 'निपान जलावतारः ।' 'निदानमुपाय.' इति मुकुटः । 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमंत्रिषु ।' इति च—(मे० पृ० ७२ श्लोकः ७) । प्रोथ, प्रोथम् = अश्वस्य घोणा, नासिका, अश्वादेर्घोणान्तर च । ''नथुन'' इति लोके । 'घोणा तु प्रोथमस्त्रियाम् ।' इति—(अम० ना० लि० पृ० २८२ श्लोक ४९) । 'प्रोथोऽस्त्री हयघोणायां, ना कट्या,—मध्वगे त्रिषु ।' इति च—(मे० पृ० ७२ श्लोक. १०) । अलिन्द, अलिन्दम् = प्रघाण., बहिर्द्वारप्रकोष्ठ., द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्कम्, द्वारबहिर्भागश्च । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥' इति—(अम० ना० लि० पृ० १२० श्लोकः १२) । अगारैकदेशे प्रघाण. प्रघणश्च । 'गृहैकदेश आलिन्द प्रघाणः प्रघणस्तथा ।' इत्यमरमाला' इति—(अम० सु० व्या० पृ० स्त २ प० ६, ७) । प्रघणोऽलिन्दके ताम्रकलशे लोहमुग्दरे ।' इति च—(अने० सं० पृ० ६६ श्लोकः २२४) । ककुद, ककुदम् = प्रधानम्, वरम्, श्रेष्ठम्, राजचिह्नम्, श्वेतच्छत्रादिः, वृषाङ्गम्, वृषासस्थस्थूलमांसपिण्डः, पर्वताग्रभागश्च । 'प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम् ।' इति—(अम० ना० लि० पृ० ४१३ श्लोकः ९२) । 'ककुद्मत्ककुद श्रेष्ठे वृषाङ्गे राजलक्ष्मणि ।' इति

च--(वि० प्र० पृ० ८० श्लोक ३२)। कुकुद, कुकुदम् = वरायादरपूर्वक अलङ्कृतकन्यादाता, परिणेत्रे आदरपूर्वकमलङ्कृता कन्या यो ददाति स कुकुद। 'कूकुद' इत्यपि। 'सत्कृत्यालङ्कृता कन्या यो ददाति स कूकुद।' इति--(अम० ना० लिं० पृ० ३५६ श्लोक १४)। अष्टापद', अष्टापदम् = सुवर्णम्, चतुरङ्गादिद्यूतफलक च। 'अष्टापदोऽस्त्री कनके शारीणा पलकेऽपि च। अष्टापदी चन्द्रमल्ल्या, शरभे मर्कटे पुमान्।' इति--(मे० पृ० ७७ श्लोक ४४)। शारीणा फल पट्ट। शारीणा खेलनाधरपट्ट। कुन्द, कुन्दम् = पुष्पविशेष, माघ्यम्। 'कुन्दो माघ्येऽस्त्री, मुकुन्दभ्रमिनिध्यन्तरेषु ना।' इति--(मे० पृ० ७४ श्लोक ३)। 'माघ्य कुन्दम्' इति--(अम० ना० लि० पृ० १५३ श्लोक ७३)। पुस्त्वमपि। 'माघ्य कुन्द कुरुण्टक।' इति च पुस्काण्डे रत्नकोष' इति--(अम० सु० व्या० पृ० १५३ स्त० २ प० ३)। गुद, गुदम् = अपानम्। 'गुद त्वपान, पायुर्ना' इति--(अम० ना० लि० पृ० २२७ श्लोक ७३)। दोहद, दोहदम् = गर्भ, गर्भिण्या अभिलाष, लालसा च। 'दोहदो गर्भलक्षणे। अभिलाषे तथा गर्भे' इति--(अने० स० पृ० ७७ श्लोक ३६०)। कुमुद, कुमुदम् = कैरवम्, दिग्गजविशेषश्च। 'वामन कुमुदोऽञ्जन.।' इति। 'अस्मिन्' सिते कुमुदकैरवे॥' इति च--(अम० ना० लि० पृ० १०७ श्लोक ३७)। 'कुमुद कैरवे, ना तु दिग्गजे भुजगे कपौ।' इति च-- (ना० र० मा० पृ० ८६ प० १३)। छद, छदम् = पक्षिपक्षम्। ''पख'' इति लोके। 'गरुत्पक्षच्छदा: पत्र पतत्र च तनूरुहम्।' इति--(अम० ना० लि० पृ० २०० श्लोक ३६)। 'गरुतौ पक्षौ छदौ। पक्षसी च स्मृतौ पक्षौ' इति शुभाङ्क' इति--(अम० सु० व्या० पृ० २०० स्त० १ प० ९)। क्लीबेऽपि। 'गरुत्पक्षौ नरौ छदम्।' इति च क्लीबकाण्डे बोपालित' इति-- (अम० सु० व्या० पृ० २०० स्त० १ प० १२)। कन्द', कन्दम् = मूलविशेष, सस्यमूलम्, सूरणश्च। 'कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान्।' इति--(मे० पृ० ७४ श्लोक ३)। अर्बुद', अर्बुदम् = सख्याविशेष., दशकोटच.। 'अर्बुदो मासपरुसि, दशकोटिषु न स्त्रियाम्।' इति--(मे० पृ० ७५ श्लोक. १६)। सौध:, सौधम् = धवलगृहम्, राजसदनम्। 'सौधोऽस्त्री राजसदनम्' इति--(अम० ना० लि० पृ० ११६ श्लोक. १०)। उत्सेध, उत्सेधम् = वृक्षपर्वताद्यारोह', उच्छ्रय.। "वृक्षादि की ऊँचाई" इति लोके। 'उत्सेधस्तूच्छ्रये न स्त्री, क्लीब सहननेऽपि च।' इति--(मे० पृ० ८० श्लोक २९)। कबन्ध, कबन्धम् = शिरोरहितकाय। 'कबन्धोऽस्त्री क्रियायुक्तव्यपमूर्धकलेवरे। क्लीब जले, पुस्युदरे राहुरक्षोविशेषयो।' 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यपि पाठ। श्राद्ध, श्राद्धम् = पितृक्रिया, शास्त्रत: पितृकर्म। 'श्राद्ध तत्कर्म शास्त्रत.।' इति--(अम० ना० लि० पृ० २५९ श्लोक ३१)। 'श्राद्ध श्रद्धान्विते त्रिषु। हव्यकव्यविधौ क्लीबम्' इति--(मे० पृ० ८० श्लोक १९)। 'श्राद्ध: श्रद्धालुरास्तिक:।' इति। 'श्राद्ध तु पितृभोजनम्।' इति च--(वै० पृ० ८८ श्लोक: ६४)।

'श्राद्ध निवापे, श्रद्धालौ त्रिषु' इति—(त्रि० शे० पृ० ३४६ श्लोक २२४)। निवापे पित्रुद्देशेन दाने, पित्रादिभ्यः श्रद्धया देये द्रव्ये च। 'श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते।' इति टीका। यैस्तु श्राद्धशब्द अणन्तो व्युत्पाद्यते श्रद्धा अस्यास्तीति स वाच्यलिङ्ग एव—श्राद्धो नरः, श्राद्धा स्त्री, श्राद्ध कुलमिति। आयुधः, आयुधम्=शस्त्रमात्रम्, प्रहरणमात्रम्। 'आयुध तु प्रहरणं शस्त्रमस्त्रम्' इति—(अम० ना० लि० पृ० २९१ श्लोक ८२)। अन्ध, अन्धम्=तिमिरम्, अदृक् च। "अन्धा" इति लोके। 'अन्धोऽदृक्' इति—(अम० ना० लि० पृ० २२२ श्लोक ६१)। 'अन्धश्चक्षुर्विहीने स्यादन्ध तु तिमिरे मतम्।' इति—(श० र० स० पृ० १८० प० २)। 'अन्ध स्यात्तिमिरे क्लीब, चक्षुर्हीनेऽभिधेयवत्।' इति—(मे० पृ० ७९ श्लोक ३)। 'अन्धोऽचक्षुस्तमोऽप्यन्धम्' इति च—(वै० पृ० २३० श्लोक ६)। औषध, औषधम्=भेषजम्, रोगनाशकद्रव्यम्, रोगहृत्त्वेन द्रव्यमात्रविवक्षायामौषधप्रयोग, तेन घृततैलादिकमप्यौषधशब्दवाच्यमिति ज्ञेयम्। 'औषध तु भिषग्जितम्।' इति—(त्रि० शे० पृ० २९० श्लोक १३)। गन्धमादन, गन्धमादनम्=पर्वतविशेषः। 'स्याद् गन्धमादनो भृङ्गे गन्धके वानरान्तरे। स्त्री सुराया, नगे न स्त्री' इति—(मे० पृ० १०० श्लोक १३४)। प्रस्फोटन, प्रस्फोटनम्=शूर्पम्। "सूप" इति लोके। ताडनम्, विकाशनम्, पचनं च। 'प्रस्फोटन विकसने शूर्पे स्यात्ताडनेऽपि च।' इति—(श० र० स० पृ० २०५ प० ६)। लग्न, लग्नम्=मेषादिराशीनामुदयः, मत्तहस्ती, स्तुतिपाठकश्च। 'लग्न राश्युदये क्लीबं, सक्तलज्जितयोस्त्रिषु।' इति—(मे० पृ० ८४ श्लोक १८)। 'लग्नो मदकलो मत्त' इति—(वै० पृ० १०९ श्लोक ६८)। 'लग्ना प्रातर्गेया. स्तुतिवृताः।' इति च—(त्रि० शे० पृ० ३०१ श्लोक ५६)। पिधान, पिधानम्=सवरणम्, तिरोधानम्, अन्तर्धानम्। 'अपिधानतिरोधानपिधानाच्छादनानि च।' इति—(अम० ना० लि० पृ० ३४ श्लोक १३)। चन्दनः, चन्दनम्=मलयज। 'चन्दनी तु नदीभिदि। चन्दनोऽस्त्री मलयजे, भद्रकाल्यां नपुसकम्।' इति—(मे० पृ० ६७ श्लोक ६०)। वितानः, वितानम्=विस्तार, उल्लोच। "चन्दोया" इति लोके। यज्ञश्च। 'वितानो यज्ञ उल्लोचे विस्तारे पुन्नपुसकम्। क्लीबं वृत्तविशेषे स्यात्, त्रिलिङ्गो मत्त(न्द)तुच्छयो।' इति—(मे० पृ० ९२ श्लोक २९)। राजादन, राजादनम्=फलाध्यक्ष, क्षीरिका। "खिरिणी" खिन्नी" इति च लोके। पियालश्च। "चिरौजी" इति लोके। 'राजादनः फलाध्यक्ष' इति। 'राजादनं पियाल स्यात्' इति च—(अम० ना० लि० पृ० १४० श्लोक ३५)। 'राजादन पियाले, ना क्षीरिकायां पलाशके।' इति च—(वै० पृ० २७८ श्लोक २१)। शिश्न, शिश्नम्=लिङ्गम्। 'शिश्नो मेढ्र मेहनशेफसी।' इति—(अम० ना० लि० पृ० २२८ श्लोक ७६)। 'नपुसकेऽपि।' 'शङ्कुर्मेढ्. शेफकोशौ शिश्न मेहनशेफसी।' इति च—(वै० पृ० १७८ श्लोक ५१)। यौवनः, यौवनम्=द्वितीय वय.। "जवानी" इति लोके। 'तारुण्य यौवनं समे।' इति—(अम० ना० लि० पृ० २१५ श्लोक ४०)।

आपीनः, आपीनम् = ऊधः, क्षीराशयः, कूपश्च । 'ऊधस्तु क्लीबमापीनं समौ' इति—(अम० ना० लिं० पृ० ३२६ श्लोक. ७३) । 'पुस्यपि' । 'आपीन , अन्धुः, कूपः' इति च बोपदेवः' इति—(श० चिं० पृ० २७० स्त २ प० २०) । उदपान , उदपानम् = कूपः । "कुआँ" इति लोके । 'उदपानं तु पुंसि वा ।' इति—(अम० ना० लिं० पृ० १०३ श्लोक २६) । 'प्रदरस्तूदपानोऽस्त्री' इति च—(वै० पृ० १५४ श्लोकः ६) । आसन , आसनम् = उपवेशनम्, स्थितिः, पीठम्, द्विरदस्कन्धदेश , जीवकद्रुमश्च । 'आसन द्विरदस्कन्धे पीठे यात्रानिवर्त्तने । आसनी विपणौ स्थित्यामासनो ना जीवकद्रुमे ।' इति—(श० र० स० पृ० १९१ प० २) । केतन , केतनम् = गृहम्, निमत्रणम्, ध्वज , कृत्यम्, स्थानं च । 'केतन तु गृहे केतौ कृत्ये चापि निमत्रणे ।' इति—(श० र० स० पृ० १९२ प० १३) । अशन , असन , अशनम्, असनम् = वृक्षविशेषः, जीवकद्रुमः, क्षेपणं च । 'असन क्षेपणे क्लीब, पुंसि स्याज्जीवकद्रुमे ।' इति—(मे० पृ० ८४ श्लोकः २९) । नलिन , नलिनम् = पद्मम्, कमलम्, प्राचीनामलक च । 'सहस्रपत्र नलिन शतपत्र कुशेशयम् ।' इति—(वै० पृ० १५७ श्लोक ३८) । 'नलिन नलिकातोयाम्बुजेषु' इति । 'नलिनी पद्मिनीव्योमनिम्नगाकमलाकरे । नपुसक नीलिकाया, न पुंसि सरसीरुहे ॥' इति च—(मे० पृ० ८८ श्लोकः ८२) । पुलिनः, पुलिनम् = सैकतम्, वालुकामयतटम्, तोयोत्थिततटम्, जलादचिरोत्थिततटम् । "चडा" "टापू" इति च लोके । द्वीपश्च । 'तोयोत्थित तत्पुलिनम्' इति—(अम० ना० लिं० पृ० ९६ श्लोक. ६) । 'पुलिनं द्वीपमुच्यते ।' इति च कोशान्तरम्' इति—(अम० सु० व्या० पृ० ९६ स्तं० १ प० १४-५) । मौन , मौनम् = वाङ्नियम , अभाषणम्, तूष्णीम्, तूष्णीकाम्, शब्दराहित्यम् । 'मौन वाङ्नियम.' इति—(श० र० स० पृ० १८८ प० १३) । 'अथ मौनमभाषणम् ।' इति—(अम० ना० लिं० पृ० २६१ श्लोक ३६) । वर्द्धमानः, वर्द्धमानम् = शरावः, एरण्ड , प्रश्नभेदः, विष्णु , भूषणम्, देशविशेषश्च । 'वर्द्धमान शरावे स्यादेरण्डे भूषणेऽपि च ।' इति—(वै० पृ० २६८ श्लोक ४४) । 'वर्द्धमान प्रश्नभेदे शरावैरण्डविष्णुषु ।' इति च—(मे० पृ० ९८ श्लोक १०५) । समान , समानम् = हृन्नाभिसर्वसन्धिवृत्तौ वायुविशेष । 'समान सत्समैकेषु त्रिषु, ना नाभिमारुते ।' इति—(मे० प० ६३ श्लोकः ४६) । 'समाना सत्समैके स्युः' इति च—(अम० ना० लि० पृ० ४१८ श्लोकः १२७) । ओदनः, ओदनम् = भक्ष्यविशेष , भक्तम् । "भात" इति लोके । 'ओदन न स्त्रिया भक्ते, बालायामोदनी स्त्रियाम् ।' इति—(मे० पृ० ८५ श्लोक ४३) । दिन , दिनम् = दिवसः । 'दिनं त्वहनि न स्त्रियाम् ।' इति—(श० र० स० पृ० १८७ प० ११) । शत मानानि अस्य, शतमानः, शतमानम् = रूप्यपलम्, दशरूप्यधरणानि, विशत्यधिकरक्तिकाशतत्रयप्रमाणम्, इत्यर्थ. । 'धरणानि दश ज्ञेय, शतमानस्तु राजत. ।' इति मनु ' इति—(श० चि० पृ० ५०७ स्तं० २ पं० २२-३) । भूभागविशेषश्च । हायनः, हायनम् = सवत्, वर्षम् । "साल" इति

लोके । 'हायनोऽस्त्री, शरत्समा ।' इति--(अम० ना० लि० पृ० ५० श्लोक: २०) । 'हायनो न स्त्रियां वर्षे, पुस्यर्चिर्व्रीहिभेदयो ।' इति च--(मे० पृ० ६४ श्लोक: ५८) । स्थानः, स्थानम्=आश्रय, स्थितिश्च । 'स्थानं स्यादाश्रये स्थितौ ।' इति--(वै० पृ० २२७ श्लोक: ३६) । 'अवकाशे स्थितौ स्थानम्' इति--(अम० ना० लि० पृ० ४१७ श्लोक ११७) । 'स्थान सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे ।' इति च--(मे० पृ० ८४ श्लोक २३) । मानः, मानम्=दर्प, चित्तोन्नतिः, ग्रहः, प्रमाणम्, प्रस्थादिश्च । 'मानश्चित्तोन्नतौ ग्रहे । क्लीब प्रमाणे प्रस्थादौ' इति--(मे० पृ० ८३ श्लोक १४) । 'मानश्चित्तसमुन्नति' इति । 'मानं तुलाङ्गुलिप्रस्थै' इति च--(अम० ना० लि० पृ० ३३० श्लोक ८५) । धनः, धनम्= द्रव्यम्, वित्ताम्, गोधन च । 'धन तु गोधने वित्ते' इति--(मे० पृ० ८३ श्लोक १२) । निधनः, निधनम्=विनाश, कुल च । 'निधन स्यात्कुले नाशे' इति--(मे० पृ० ८८ श्लोक: ८३) । 'मरणं, निधनोऽस्त्रियाम् ।।' इति च--(अम० ना० लिं० पृ० ३०१ श्लोक ११६) । विमानः, विमानम्=रथविशेष, आकाशयानम्, यानमात्र च । 'व्योमयान विमानोऽस्त्री' इति--(अम० ना० लि० पृ० २० श्लोक. ४८) । 'विमानो व्योमयाने च सार्व(सप्त) भौमगृहेऽपि च । घोटके यानमात्रे च पुन्नपुंसकयोर्मत. ।' इति च--(मे० पृ० ९२ श्लोक: ३०) । ताडनः, ताडनम्=आघात, हननम् । 'हननं ताडन समे ।' इति--(वै० पृ० १८९ श्लोक: ३६) । स्तेनः, स्तेनम्=चौर, तस्कर, स्तेयम्, चौर्य्य च । 'स्तेन शङ्कितवर्णक ।' इति--(हा० व० पृ० ४०२ श्लोक: १२८) । 'स्तेनो रात्रिचरो दस्युर्मोषिक. पारिपन्थिक. ।' इति च--(वै० पृ० १४० श्लोक: ५६) । वस्नः, वस्नम्=मूल्यम्, अवक्रय, वेतनम्, कटि-भूषणम्, लवणविशेषश्च । 'वस्नस्त्ववक्रये पुसि, वेतने स्यान्नपुसकम् ।' इति--(मे० पृ० ८४ श्लोक: १८) । 'वस्नं स्याद्वेतने मूल्ये वसनद्रव्ययोरपि ।' इति--(श० र० स० पृ० १८९ श्लोक ५) । 'वस्नोऽर्घोऽवक्रयो मूल्यम्' इति । 'रौमक तु रुमाभवम् । वस्न च' इति च--(वै० पृ० १२८ श्लोक ७०) । भवन, भवनम्=गृहम्, भाव, श्वा च । 'भवनं स्याद्गृहे भावे' इति--(मे० पृ० ९० श्लोक. १) । 'कौलेयकोऽस्थिरवादश्च भवनो भलुहोऽपि च ।' इति । 'अगार भवनं धाम' इति च--(वै० पृ० १६० श्लोक. १७) । भुवनः, भुवनम्=लोक । 'भुवनं वि(पि)ष्टपेऽपि स्यात्सलिले गगने जने ।' इति--(मे० पृ० ९० श्लोक २) । 'भुवन, पिष्टपः पुमान् ।' इति च बोपालित.' इति--(अम० सु० व्या० पृ० ११२ स्त० १ प० ३२) । यान, यानम्=वाहनम्, गतिश्च । 'यान स्याद् वाहने गतौ ।' इति--(मे० पृ० १३ श्लोक १६) । उद्यान, उद्यानम्=वनभेद, आराम., उपवनम् । ''बाग'' ''बगीचा'' ''पार्क'' इति च लोके । नि सरणम्, बहिर्गमनम्, प्रयो-जनम्, आक्रीडम्, उद्गमश्च । 'उद्यान वनभेदे स्यान्नि सृतौ च प्रयोजने ।' इति धरणि.' इति--

(अम० सु० व्या० पृ० ४१७ स्त० १ प० १०-१) । 'ज्ञेययाक्रीडमुद्यानम्' इति चामरमाला' इति--((अम० सु० व्या० पृ० १२८ प० ६) । वातायन, वातायनम् = गवाक्ष, जालकः । ''झरोखा'' इति लोके। अश्वश्च । 'वातायनश्चैकशफ' इति । 'वातायनं गृहाक्ष स्याद्धधूट-शयन तथा ।' इति च--(त्रि० शे० पृ० २८१ श्लोक ६) । 'वातायन गवाक्ष· स्यात्' इति च-(अम० ना० लि० पृ० ११६ श्लोक ६) । अभिधानः, अभिधानम् = नाम, सज्ञा, शब्दकोष, कथन च । 'शब्दाभिलापौ त्वभिधाभिधान वाचको ध्वनि । ह्लास कुहरितश्च' इति— (त्रि० शे० पृ० २७१ श्लोक १) । 'कृत्तद्धितसमासानामभिधान नियामकम् ।' इति च बोपदेव' इति--(श० चि० पृ० १३३ स्त० २ प० ५, ६) । द्वीपी, द्विपिन, द्विपि, द्विपिनम् = व्याघ्र । "बघेरा" इति लोके। चित्रकश्च । ''चीता'' इति लोके। 'शार्दूलद्विपिनौ व्याघ्रे' इति--(अम० ना० लि० पृ० १८६ श्लोक १) । निपान, निपानम् = उपकूपजलाशय, कूपसमीपरचितजला-धारः । "प्याऊ" ''चरही'' इति वा लोके । दोहनी च । 'आहावस्तु निपान स्यादुपकूपजलाशये ।' इति--(अम० ना० लिं० पृ० १०३ श्लोक २६) । 'पारी तु दोहनी । निपान, स्त्री गवी तुम्बा निलिम्पा रोहिणी च सा ।' इति च—(त्रि० शे० पृ० ३०३ श्लोक. १६) । शयन·, शयनम् = तूलकादि । मुकुटस्तु--शय्यामात्रम्, निद्रा, मैथुन च । 'शयन तु मत स्वापशय्ययोः सुरतेऽपि च ।' इति--(श० र० स० पृ० २०० प० ५) । 'शय्यायां शयन न, स्त्री, निद्रासुरतयोर्नपुम् ।' इति च--(वै० पृ० २६३ श्लोक ८५) । लशुन, रसोनः, लशुनम्, रसोनम् = गृञ्जन । "लहशुन" इति लोके । 'खञ्जोऽरिष्टो गृहोच्छिष्टो रसनो गृञ्जन. कटु । कायाङ्ग लशुन दिव्यं महाकन्दामृतोद्भवे ।' इति—(वै० पृ० ६२ श्लोक २०४) । 'उभौ पुस्यपि' । 'रसोनो लशुनो रिष्टो म्लेछकन्दो महौषधम् ।' इति च--(भा० प्र० पृ० १६१ श्लोक २०२) । इह पाठान्तरं दृश्यते । गृञ्जन., गृञ्जनम् = लशुनम्, विषदग्धपशुमास च । 'विषदग्धपशोर्मांसे क्लीबं, पुसि रसोनके ।' इति—(मे० पृ० ८७ श्लोक ५८) । खलिन·, खलीनः, खलिनम्, खलीनम् = कविका । "लगाम" "कडिआली" इति च लोके। 'कविका तु खलीनोऽस्त्री' इति--(अम० ना० लिं० पृ० २८२ श्लोक. ४९) । 'खलिनी खलमेलके । खलीनमश्वावरणे मुखगे लोहनि-र्मिते । ताडपत्र्या च खलिनी' इति—(श० र० स० पृ० १९२ प० १६-७) । 'खलिनं च खलीनं च' इति च—(द्वि० को० पृ० ४१३ श्लोकः ५४) । यल्लक्ष्यम्--'खलिन हयाय दद्यात्' इति— (श० चि० पृ० ७५५ स्त० २ प० १५-६) । अनुमानः, अनुमानम् = अनुमा, व्याप्तिदर्शनेन व्यापकनिश्चय., वितर्कणं च । 'अनुमा त्वनुमानं स्यात्' इति— (त्रि० शे० पृ० ३१० श्लोक. ११) । 'अनुमानं वितर्कणे ।' इति च-(श० र० स० पृ० २०२ प० १०) । 'वितर्कणम्' इति ऊहः संशयः विपरीततर्को वा । दीपः, दीपम् = प्रकाशविशेष·, वर्तिस्थज्वलदग्निशिखा । "रोशनी" "चिराग" "दिया" इति च लोके। दीपस्तु स्नेहाशः कज्जलध्वज । दशेन्धनो

गृहमणि—दीपातिलक इत्यपि ।' इति— (त्रि० शे० पृ० २९३ श्लोक ४२)। कुणप, कुणपम् = शव । । "लाश" "मुर्दा" इति वा लोके । पूय च । "पीव" इति लोके। 'कुणपस्तु शवोऽस्त्रियाम् ।' इति। 'पूय तु कुणप दूष्यम' इति च—(वै० पृ० १२२ श्लोक: २१६) । 'कुणप शवमस्त्रियाम् ।' इति च—(अम० ना० लि० पृ० ३०१ श्लोक ११८)। कुतप, कुतपम् = छागरोममयो वस्तुविशेष, दिनस्याष्टमोऽशश्च । 'अशोऽष्टमोऽह्न कुतपोऽस्त्रियाम् ।' इति—(अम० ना० लि० पृ० २५९ श्लोक ३१)। अशशब्दोऽत्र मुहूर्त्तपर । 'मुहूर्त्तात्सप्तमादूर्ध्व मुहूर्त्तान्नवमादध । स काल कुतपो ज्ञेय' इत्युक्ते ।' 'दिवसस्याष्टमे भागे मन्दीभवति भास्करे। स काल कुतपो ज्ञेय पितॄणा दत्तमक्षयम् ।' इति शातातप । क्लीबे तु कुतपम्। शब्दरत्नावल्या तु 'कुतुप' इति द्व्युकारोऽपि ।' इति—(अम० अम० वि० टी० पृ० १७३ प० १७ त. २० या०) । 'कुतपोऽस्त्रिया दौहित्रे वाद्ये छागजकम्बले। कुशे दिनस्याष्टमाशे, ना सूर्ये' इति—(मे० पृ० १०३ श्लोक १९)। 'कुतपो भागिनेयेऽर्के विप्रेऽन्नावतिथौ गवि। अस्त्री त्वह्नोऽष्टमे भागे तिलेषु च्छागकम्बले ।' इति च—(वै० पृ० २५९ श्लोक २९-३०)। आवाप, आवापम् = आलवालम्, वृक्षमूलसेकार्थं स्वल्पजलखातम्। "थाल्हा" इति लोके। पानभेद, प्रक्षेप, भाण्डपच(व)नम्, आपाकश्च। "आवा" इति लोके। 'आवापो न्यास आवाले' इति—(वै० पृ० २३९ श्लोक ६) । 'आवाप शत्रुचिन्ताया प्रक्षेपावालयोरपि ।' इति—(ना० र० मा० पृ० ६२ प० १९) । 'आवापो भाण्डपच(व)ने परिक्षेपालवालयोः ।' इति च—(मे० पृ० १०२ श्लोक १४)। चाप, चापम् = धनु, शरासनम्। "धनुष" इति लोके। 'अथास्त्रियौ। धनुश्चापौ' इति—(अम० ना० लि० पृ० २६१ श्लोक ८३) । शूर्प, शूर्पम् = प्रस्फोटनम् । "सूप" इति लोके। मानविशेषश्च। 'प्रस्फोटन शूर्पमस्त्री' इति—(अम० ना० लि० पृ० ३१० श्लोक २६) । स्तूप, स्तूपम् = वायुः, रण., उच्छ्रायः, समुच्छ्राय, मृदादिकूट, राशीकृतमृत्तिकादि, वटकादिश्च । 'घृतादिकृतकूट.' इति मुकुट । 'स्तूपा वायुरणोच्छ्राया' इति च—(वै० पृ० २१९ श्लोक. ६७)। उडुपः, उडुपम् = जलतरणोचितघटितकाष्ठाना सञ्चयविशेष, प्लव, कोलः, भेल, चर्मविनद्ध यानपात्रम्, चन्द्रश्च। 'उडुप. प्लवचन्द्रयो. ।' इति—(श० र० स० पृ० २१२ प० ५) । 'उडुपश्चन्द्रभेलयोः ।' इति धरणि.' इति—(अम० सु० व्या० पृ० ६७ स्त० १ प० ४) । 'क्लीबेऽपि ।' 'उडुप तु प्लव कोलः' इति च—(अम० ना० लि० पृ० ९७ श्लोक ११) । विटपः, विटपम् = लतासमुदायविशेषः, शाखापल्लवसमुदाय, विस्तार, गुल्म, शाखा, पल्लवश्च । 'विस्तारो विटपोऽस्त्रियाम् ।' इति। 'स्तम्बेऽपि विटपोऽस्त्रियाम् ।' इति च—(अम० ना० लि० पृ० ४१९ श्लोक १३१) । 'स्कन्धादूर्ध्वं तरो शाखा कटप्रो विटपो मत ।' इति कात्य। 'शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम् ।' इति च रभस' इति—(अम० सु० व्या० पृ० १३३ स्त० १ प० १६) । मण्डपः, मण्डपम् = गृहादेर्विन्यासविशेष, जनाश्रयः, जनविश्रामगृह च। 'मण्डपोऽस्त्री जनाश्रयः ।' इति—

(अम० ना० लि० पृ० ११६ श्लोक ९)। 'मण्टप' इत्यपि। 'मण्टपोऽस्त्री जनाश्रय।' इति च—(वै० पृ० १६१ श्लोक २८)। शष्प, शष्पम् = वालतृणम्। "खर" इति लोके। प्रतिभाहानिश्च। 'अथ शष्प बालतृणे स्मृतम्। पुंसि स्यात्प्रतिभाहानौ' इति—(मे० पृ० १०२ श्लोक ११)। 'शष्प बालतृण शादं' इति च—(वै० पृ० ७४ श्लोक २३५)। बाष्प, बाष्पम् = नेत्रजलम्, अम्बुधूम, ऊष्मा च। "भाप" इति लोके। 'बाष्पमूष्माश्रु' इति—(अम० ना० लि० पृ० ४१६ श्लोक १३०)। 'वाष्प मेदिन्यामन्तस्थादौ पठ्यते। अत एव गोवर्द्धनाचार्यैरपि 'वाष्पाकुलम्' (५२८) इत्यार्याऽन्तस्थादिव्रज्याया लिखिता। हैमे तु स्पर्शादौ पठ्यते। वैजयन्त्या तु पवर्गादौ पुलिङ्गे पठ्यते। 'बाष्पोऽश्रुण्यम्बुधूमे च' इति च—(वै० पृ० २१७ श्लोक ४०)। द्वीप, द्वीपम् = द्विधा गता आपो यत्र, जलमध्यस्थस्थलम्, अन्तरीपम्। "टापू" इति लोके। पुराणप्रसिद्धा जम्ब्वादय· सप्त द्वीपाश्च। 'द्वीपोऽस्त्रियामन्तरीप यदन्तर्वारिणस्तटम्।' इति—(अम० ना० लिं० पृ० ६६ श्लोक ८)। 'अस्त्री द्वीपोऽन्तरीप क्ली' इति च—(वै० पृ० १५६ श्लोक ३३)। विष्टप, विष्टपम् = भुवनम्, जगत्। 'पिष्टप·' इत्यपि। 'अथो जगती लोको। विष्टप भुवन जगत्।' इति—(अम० ना० लि० पृ० ११२ श्लोक ६)। 'पुस्यपि'। 'भुवनं पिष्टप पुमान्।' इति च बोपालित.' इति—(अम० सु० व्या० पृ० ११२ स्त० १ प० ३२)। निपः, निपम् = कलश, घट। "कलसा" "घड़ा" इति च लोके। 'घट कुटानिपावस्त्री' इति—(अम० ना० लिं० पृ० ३१२ श्लोकः ३२)। शफः, शफम् = गवादीना खुर, तरूणा मूलम्, सुगन्धिद्रव्यविशेष, नखम्, कोलदल च। 'शफ क्लीबे खुरः पुमान्' इति। 'शफ मूले तरूणा स्याद् गवादीना खुरेऽपि च।' इति च—(अम० ना० लि० पृ० २८२ श्लोक ४९)। 'पुस्यपि'। 'खुर शफ' इति च—(वै० पृ० ७१ श्लोक. ७४)। डिम्ब·, डिम्बम् = डमर, अशस्त्रकलह·, विप्लव, भयध्वनि, अण्डश्च। 'डिम्बो, डमरविप्लवौ।' इति—(अम० ना० लि० पृ० ३९१ श्लोक १४)। 'डिम्ब. प्लीहखगाण्डयो।' इति—(वै० पृ० २१६ श्लोक २४)। 'नपुसकेऽपि'। 'शृगालिका च डिम्ब च डमर विद्रवोऽपि च।' इति। (भीत्या पलायनम्)। 'डिम्ब भये च कलले फुप्फुसे च प्रचक्षते।' इति च—(हा० व० पृ० ४०८ श्लोक. २४४)। बिम्ब, बिम्बम् = मण्डलम्। 'बिम्बोऽस्त्री, मण्डल त्रिषु।' इति—(अम० ना० लिं० पृ० ३५ श्लोक १५)। 'विम्बस्तु प्रतिबिम्बे स्या,-न्मण्डले पुन्नपुसकम्।' इति च—(मे० पृ० १०५ श्लोक ७)।

अथाधुना भान्तादीन् क्षान्तान्तान् क्रमसहितान् पुन्नपुसकलिङ्गवाचकशब्दानाह हेम·—(अभि० सं० लिं० पृ० ८ श्लोकः १०८ तः १२१ या०)।

जम्भः[1] कुसुम्भ–ककुभौ कलभो निभो–ऽर्म[2]–
सङ्काम–संक्रम–ललाम–हिमानि हेम ॥२२॥

उद्यम–कामो–द्दामा–ऽऽश्रम–कुट्टिम–कुसुम–सङ्गमा गुल्मः ।
क्षेम–क्षौमौ कम्बलिवा[3]ह्यो मैरेय–तूर्य्यौ च ॥२३॥

पूया–ऽजन्य–प्रमय–समया राजसूयो हिरण्या–
ऽरण्ये संख्यं मलय–वलयौ वाजपेय कषायः ।

[illegible]या–ऽव्यय–कवियव–द्गोमयं पा(फा)रिहार्य्यः
पारावारो[4] नखर–शिखर–क्षेत्र–वस्त्रो–पवस्त्राः ॥२४॥

अलिञ्जरः कूवर–कूर–वेर–
नीहार–हिञ्जीर–सहस्र[5]–मेढ्राः ।
संसार–सीरौ[6] तुवर–श्च सूत्र–
शृङ्गार–पण्ड्रा–ऽन्तर–कर्णपूराः ॥२५॥

---

पाणिनीयेऽपि—(१) (भोपध) ॥ (जृम्भं नपुंसके च) ॥ इद नपुसके । चात्पुसि स्यात् । व्या० उ० सि० कौ० पृ० ४०० सू० ८१ ।

(२) (मोपध) ॥ (सग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुसके च) ॥ एतानि नपुसके । चात्पुसि स्यु । संग्रामः, सग्रामम्=रणम् । अन्यत्र—(आहवसग्रामौ) एतौ पुसि स्तः। होम, होमम्=यज्ञे हविर्ज्वलनम् । शे० उ० । सि० कौ० पृ० ४०३ सू० १६१ ।

(३) (योपध) ॥ (गोमयकषायमलयान्वयाव्ययानि नपुसके च) ॥ एतानि नपुसके। चात्पुसि स्यु। अन्वय, अन्वयम्=वश, शब्दानामर्थानुकूलोपस्थापन च । शे० उ० । सि० कौ० पृ० ४०० सू० ८७ ।

(४) (रोपधः) ॥ (चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुसके च) ॥ एतानि नपुसके। चात्पुसि स्यु । सार=बलम्, स्थिरांशश्च । सारम्=जलम्, धनम्, बलम् न्याय्य., नवनीतं च । भृङ्गार=कनकालुका, स्वर्णघटितजलपात्रम्, भृङ्गराजश्च । भृङ्गारम्= काञ्चानम्, लवङ्ग च । मन्दारः=सुरद्रुमविशेष । मन्दारम्=सुरद्रुमपुष्पम् । शे० उ० । सि० कौ० पृ० ४०० सू ९१ ।

(५) (सहस्रः क्वचित्) ॥ अय क्वचिन्नपुसके स्यात् । सहस्र, सहस्रम्=दशशतम् । सि० कौ० पृ० ४०२ सू० १४९ ।

(६) सीर, सीरम्=हलम् । अन्यत्र–(सीरार्थौदनाः पुसि) । एते पुसि स्यु. । सि० कौ० पृ० ४०२ सू० १३९ ।

नेत्रं वक्त्रं[1]-पवित्र-पत्र[2]-समरो-शीरा-ऽन्धकारा वर,
केदार-प्रवरौ कुलीर-शिशिरा-वाडम्बरो गह्वर. ।
क्षीरं कोटर-चक्र-चक्रि-तिमिरा-ऽङ्गारा-स्तुषारः शरो,
भ्राष्ट्रो पह्वर-राष्ट्र-तक्र-जठरा ऽऽर्द्राः कुञ्जरः पञ्जरः ॥२६॥
कर्पूर-नूपुर-कुटीर-विहार-वार-
कान्तार-तोमर-दुरोदर-वासराणि ।
कासार-केसर-करीर-शरीर-जीर-
मञ्जीर-शेखर-युगन्धर-वज्र-वप्राः ॥२७॥
आलवाल[3]-पल-भाल-पलालाः
पल्वलः खल-चषाल-विशालाः ।
शूल-मूल-मुकुला-स्तल-तैलौ
तूल-कुड्मल-तमाल-कपालाः ॥२८॥
कवल-प्रवाल-बल-शम्बलो-त्पलो-
पल-शील-शैल-शकला-ऽङ्गुला-ऽञ्चलाः ।
कमलं[4] मलं मुशल-साल-कुण्डलाः
कललं नलं निगल-नील-मङ्गलाः ॥२९॥
काकोल-हलाहलौ हल कोलाहल-कङ्काल-वल्कलाः ।
सौवर्चल-धूमले फलं हालाहल-जम्बाल-खण्डलाः ॥३०॥

---

पाणिनीयेऽपि—(१) (वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च) ॥ एतानि पुंसि। चान्नपुंसके स्युः । एषा व्याख्या तु हैमादितो बोध्या । सि० कौ० पृ० ४०२ सू० १४०।

(२) (पत्रपात्रपवित्रमूत्रच्छत्रा पुंसि च) । एते पुंसि ॥ चान्नपुंसके स्युः । व्या० उ० । सि० कौ० पृ० ४०३ सू० १५८।

(३) (लोपध) । (शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालबालनिगलपलालबिडालखिलशूलाः पुंसि च) ॥ एते पुंसि । चान्नपुंसके स्युः । पलल.=यातुधानम् । पललम्=मांसम्, पङ्कम्, तिलचूर्णं च । बिडालः, बिडालम्=मार्जार, । खिलः, खिलम्=हलादिनाऽऽकृष्टभूमि । श० उ० । सि० कौ० पृ० ४०२ सू० १४४।

(४) (पद्मकमलोत्पलानि पुंसि च) ॥ एतानि पुंसि । चान्नपुंसके स्यु । पद्मादय शब्दा, कुसुमाभिधायित्वेऽपि द्विलिङ्गा स्युः। अमरोऽप्याह—"वा पुंसि पद्मं नलिनम्" इति। एवं च अर्धर्चादिसूत्र तु । "जलजे पद्मं नपुंसकमेव" इति वृत्तिग्रन्थो मतान्तरेण नेय. । व्या० उ० । सि० कौ० पृ० ४०३ सू० १६०।

लाङ्गल—गरला—विन्द्रनील—गाण्डीव—गाण्डिवाः ।
उल्वः पारशवः पार्श्वा–ऽपूर्व–त्रिदिव–ताण्डवम् ॥३१॥
निष्ठेव–प्रग्रीव–शराव–रावा भाव–क्लीब–शवानि ।
दैवः पूर्वः पल्लव–नल्वौ पाशं कुलिशं कर्कश–कोशौ ॥३२॥
आकाश–काश–कणिशा–ऽङ्कुश–शेष–वेषो–
ष्णीषा–म्बरीष–विष–रोहिष–माष–मेषाः ।
प्रत्यूष—यूष—मथ कोष—करीष—कर्ष–
वर्षा–ऽऽमिषा रसं–वुसे–क्थस–चिक्कसा–श्च ॥३३॥
कर्पास आसो दिवसा–ऽवतंस–
वीतंस–मांसाः पनसो–पवासौ ।
निर्य्यास–मासौ चमसां–ऽस–कंस–
स्नेहानि बर्हो गृह–गेह–लोहाः ॥३४॥
पुण्याह–देहौ पटह–स्तनूरुहो
लक्षः··················॥इति॥

एषा व्याख्या—

जम्भ इति। उद्यमेति। पूयेति। आलिञ्जर इति। नेत्रमिति। कर्पूरेति। आलवालेति। कवलेति। काकोलेति। लाङ्गलेति। निष्ठेवेति। आकाशेति। कर्पास इति। पुण्याहेति च। कुल्यादौ पार्श्वादौ प्रत्यूषादौ च समाहारो द्वन्द्व। अन्यत्रेतरेतरयोगो द्वन्द्वो बोध्य। जम्भः, जम्भम्=

---

पाणिनीयेऽपि—(१) (दैव पुंसि च)॥ एतत्पुंसि। चान्नपुंसके स्यात्। व्या० उ०। सि० कौ० पृ० ४०३ सू० १६८।

(२) (षोपध)॥ (यूषकरीषमिषविषवर्षाणि नपुंसके च)॥ एतानि नपुंसके। चात्पुंसि स्युः। मिषः=स्पर्द्धनम्। मिषम्=व्याज। शे० उ०। सि० कौ० पृ० ४०० सू० ९४।

(३) (सोपध)॥ (चमसासरसनिर्यासोपवासकार्पासवासमासकासकांसमासानि नपुंसके च)॥ एतानि नपुंसके। चात्पुंसि स्यु। कार्पास=तुण्डिकेरी, वस्त्रयोनिः। कार्पासम्=कार्पासीफलम्। कास, कासम्=रोगविशेषः। वास=वेश्म, गृहम्। वासम्= । शे० उ०। सि० कौ० पृ० ४०१ सू० ९७।

तत्र विशेषः—वसुः=मयूखः, अग्निः, कुबेरश्च। वसु=धनम्। 'वसुर्मयूखाग्निधनाधिपेषु' इति। सि० कौ० पृ० ३९९ पं०। १९। एष पाठो विश्वप्रकाशस्येति।

(४) (गृहमेहदेहपट्टपटाहाष्टापदार्बुदककुदाश्च)॥ एते पुन्नपुंसकयोः स्युः। मेहः= पट्ट, पट्टम्=वस्त्रविशेष, राजाज्ञालेखनसाधन च। शे० उ०। सि० कौ० पृ० ४०४ सू० १८३।

दानवविशेष । दन्त , दम्भ , जम्बीर , अश , हनु , तूणश्च । 'जम्भा दम्भजम्बीरदानवा । दन्तेऽपि च पुमानेव, भक्ष्यवाचिषु स त्रिषु ।' इति—(ना० र० मा० पृ० ३८ प० ११) । 'जम्भ स्याद्दानवान्तरे । दन्तभोजनयोरशे हनौ जम्बीरतूणयो. ।' इ ति च—(अने० स० पृ० २६ श्लोक ३१२) । कुसुम्भ., कुसुम्भम् = महारजनवृक्षस्य पुष्पम् । "कसूभा" इति लोके । करक, कमण्डलु । 'स्यान्महारजने क्लीब कुसुम्भ, करके पुमान् ।' इति— (अम० ना० लि० पृ० ४२० श्लोक: १३६) । 'महारजने पुष्पभेदे । येन रक्त वस्त्र कौसुम्भम्, करके कमण्डलौ' इति टीका । सुवर्णं च । 'कुसुम्भं हेमनि महारजने, ना कमण्डलौ ।' इति च––(मे० पृ० १०७ श्लोक. १५) । ककुभ , ककुभम् = वीणाङ्गम्, प्रसेवक, वीणादण्डाधःस्थ शब्दगाम्भीर्याय दारुमय भाण्डं यच्चर्म्मणा छाद्यते स, रागविशेष, अर्ज्जुनवृक्षश्च । 'वीणाप्रसेवे ककुभो रागभेदेऽर्ज्जुनद्रुमे ।' इति—(त्रि० शे० पृ० ३५५ श्लोक २८५) । 'ककुभस्त्विन्द्रवृक्षे स्याद्, दिक्षु पक्षिण्यपि द्वयो ।' इति च—(ना० म० पृ० ५७ प० १०) । कलभ , कलभम् = करिपोत , करिशावक , धत्तूरवृक्षश्च । 'त्रिशद्वर्षस्तु कलभ ' इति— (वै० पृ० १०९ श्लोक ६६) । 'पञ्चवर्षपर्य्यन्त. करिण शावक.' इति सुभूति । 'द्विपार्भके समुद्दिष्टः करिशावक इत्ययम् ।' इति– (श० र० स० पृ० ४७ पं० १४) । 'कलभ करिशावक ।' इति च––(अम० ना० लि० पृ० २७६ श्लोक: ३५) । निभ , निभम् = व्याज , सादृश्यं च । 'निभस्तु कथितो व्याजे पुलिङ्ग:, सदृशे त्रिषु ।' इति—(मे० पृ० १०६ श्लोक. ६) । 'क्लीबेऽपि' । 'सादृश्ये सन्निभ निभम् ।' इति । 'प्रकार. सन्निभं निभम् ।' इति । 'व्याजो मिषं छलं छद्म निभ च कपटोऽस्त्रियाम् ।' इति च—(वै० पृ० ९९ श्लोक १९५) । अर्मः, अर्मम् = रोगविशेष., चक्षूरोगभेद । संक्राम , सक्रम , संक्रामम्, संक्रमम् = दुर्गसञ्चर:, दुर्गद्वारे फलकादिनिर्मित सञ्चारमार्ग, जलसञ्चारयंत्रक च । 'संक्रम: क्रमेण पुंसि, न स्त्री स्याद् दुर्गसञ्चरे ।' इति–(मे० पृ० ११२ श्लोक: ५४) । 'अस्त्री तु सक्रमो दुर्गसञ्चरः ।' इति––(अम० ना० लि० पृ० ३६३ श्लोक. २५) । 'सक्रम क्रमणे सम्यग्वारिसञ्चारयत्रके ।' इति—(श० र० स० पृ० २३० पं० ४) । ललाम, ललामम् = प्रभाव , पौरुषम्, ध्वज:, लाञ्छनं च । 'ललामोऽस्त्री ललामाऽपि प्रभावे पौरुषे ध्वजे । श्रेष्ठे भूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु ।' इति––(वै० पृ० २६२ श्लोक ७२) । 'प्रधानध्वजशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु । भूषावाजिप्रभावेषु ललाम स्याल्ललाम च ।' इति च रुद्र । पुण्ड्रमश्वादीनां ललाटचित्रम् । 'अश्वो वाजी । भूषा सामीप्यादश्वस्यैव ।' इति—(अम० सु० व्या० पृ० ४२१ स्त० २ श्लोक १४३) । हिम:, हिमम् = तुहिनम्, तुषार । "पाला" "कोहरा" "ठंड" "बर्फ" इति च लोके । मलयोद्भवं, चन्दनं च । 'हिमं तुषारमलयोद्भवयो: स्यान्नपुंसकम् । शीतले वाच्यलिङ्ग' इति—(मे० पृ० ११० श्लोक ३८) । 'पुंस्यपि' । 'सेभ्य: सीमो हिमोऽपि च ।' इति—( वै० पृ० ११६ श्लोक: ७) । 'हिमा: कर्पूरचन्दनद्रुचन्द्रहेमन्तर्त्तुहिमालयपर्वता: ।

हिमे खबाष्परजनीजले च' इति च—(श० चिं० पृ० १०१८ स्त० १ प० १३-४-५) । हेम:, हेमम् = माषकपरिमाणम् ।' इति वैद्यकपरिभाषा । 'हेम्नी काञ्चनवेतने ।' इति च—(वै० पृ० २२७ श्लोक ३७) । उद्यम., उद्यमम् = उत्साह:, समुद्योगश्च । 'उद्यम. स्यात्समुद्योगे' इति—(श० र० स० पृ० २२८ प० ७) । 'गुरणमुद्यमे ॥' इति च—(अम० ना० लि० पृ० ३६० श्लोक ११) । गुरण भाराद्युद्यमनम् । काम, कामम् = स्मर:, कामदेव, इच्छा, अनुराग, रेत:, निकामम्, काम्यम्, अनुमतिश्च । 'काम स्मरेच्छयो. पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुमकम् ।' इति—(मे० पृ० १०८ श्लोक: ५) । उद्दाम:, उद्दामम् = प्रचेता, वरुण, छन्दोविशेषश्च । 'प्रचेता यादसान्नाथ प्रत्यगाशापतिस्तथा । जलभूषण उद्दाम' इति—(वै० पृ० १२ श्लोक ४६) । 'वशेऽनर्गलमुद्दाममुच्छृङ्खलमयन्त्रितम् ।' इति च—(वै० पृ० २१२ श्लोक १३२) । आश्रम, आश्रमम् = ब्रह्मचारी, गृही, वानप्रस्थ, भिक्षु, वनम्, मठ, स्थानम्, मुनीना वासस्थान च । 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्री' इति—(अम० ना० लि० पृ० २५१ श्लोक. ३, ४) । 'आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे वने मठे । अस्त्रियाम्' इति च—(मे० पृ० १११ श्लोक ३९) । कुट्टिम, कुट्टिमम् = सस्कृत-भूमिविशेष., भित्तिभेद । "फरसबन्दी" इति ख्याता । स्वल्पगहम्, कुटीर, गर्भागारम्, मणिभूमि, रत्नस्य खनि, सुधाघटितभूतलम्, बद्धभूमि । "नीच" "कुरसी" इति च लोके । दाडिमद्रुमश्च । 'कुट्टिमोऽस्त्री बद्धभूमि. ।' इति—(वै० पृ० १६१ श्लोक ३२) । 'कुट्टिम त्वस्य बद्धभू. ।' इति—(अभि० स० अभि० चिं० पृ० ३९ श्लोक. ९९२) । 'मणीनां कुट्टि-मानि बद्धभूमिकानि ।' इति । 'कुट्टिमोऽस्त्री निबद्धा भू.' इति च कोशान्तरम्' इति—(अम० अम० वि० टी० पृ० २७१ श्लोक. ३४) । कुसुम:, कुसुमम् = पुष्पम्, फलम्, स्त्रीरज, नेत्र-रोगश्च । 'कुसुम स्त्रीरजोनेत्ररोगयो: फलपुष्पयो ।' इति—(मे० पृ० १११ श्लोक ४१) । सङ्गम:, सङ्गमम् = सङ्गति, सयोग, समागम । "मेल-मिलाप" इति लोके । 'मेलके सङ्ग-सङ्गमौ ।' इति—(अम० ना० लि० पृ० ३६४ श्लोक २६) । 'ना मेल, सङ्गमो ना वा' इति चामरमाला । 'पक्षे क्लीबमपि' । इति—(अम० सु० व्या० पृ० ३९५ स्तं० १ प० ४) । गुल्म, गुल्मम् = प्रकाण्डम्, उपस्करणम्, रोगश्च । गुल्म. सेनाघट्टभिदो: सेनारक्षणरुग्भिदो: । स्तम्बे, स्त्रियामामलक्येलावल्ली(नी)वस्त्रवेश्मसु ।' इति—(मे० पृ० १०६ श्लोक: ११) । 'गुल्म स्तम्बे प्लीह्नि घट्टसैन्ययो: सैन्यरक्षणे ।' इति च—(वि० प्र० पृ० १११ श्लोक. १३) । रुग्, उदररोग., स्तम्बोऽप्रकाण्ड । क्षेम, क्षेमम् = शुभम्, कुशलम् । 'कुशलं क्षेममस्त्रियाम् ।' इति—(अम० ना० लि० पृ० ५२ श्लोक २६) । 'जानीयान्मङ्गलं क्षेम क्षेम लब्धार्थ-रक्षणम् । चूडायां ना, शुभे न स्त्री, कात्यायन्यां च योषिति ।' इति च—(मे० पृ० १०८ श्लोक: ८) । क्षौम, क्षौमम् = दुकूलम्, सूक्ष्मवास., अट्टश्च । "अट्टा" "अट्टारी" इति लोके ।

'क्षौममट्टे दुकूलेऽस्त्री, क्षौम वल्कलजाशुके । शणजेऽलसीजे ' इति—(मे० पृ० १०८ श्लोक ९) । इह सर्वे वक्ष्यमाणा अबाधिता अदन्ता यान्ता यकारोपधत्वात्पुस्यपि स्यु । कम्बलिवाह्य', कम्बलिवाह्यम्=वृषवाह्यशकटम्, शकटिका, गत्री । 'गत्री कम्बलिवाह्यकम् ।' इति—(अम० ना० लि० पृ० २८३ श्लोक ५२)। मैरेय , मैरेयम्=मद्यविशेष , इक्षुशाकादिजन्यो मद्यविशेषश्च । 'मैरेयमासवो धात्रीधातकीगुडवारिभि ।' इति—(वै० पृ० १४० श्लोक ४६) । 'शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । (रसिकस्तु स ) । मैरेयो (य) धातकीपुष्पगुडधान्या (ना) म्लसयुत (तम्)।' इति च—(प० र० मा० पृ० ६९प० ६, ७) । तूर्य्य , तूर्य्यम्=वाद्यम्, वाद्यप्रभेदश्च । 'तूर्य्योऽस्त्री वाद्यनिर्घोषे' इति—(वै० पृ० १४७ श्लोक १३६) । पूय , पूयम्=पक्वव्रणादिसम्भवघनीभूतशुक्लवर्णविकृतरक्तम्, क्षतजम्, मलजम् । "पीप" "पीव" "राध" इति च लोके । 'पूय तु कुणप दूष्यम्' इति—(वै० पृ० १८२ श्लोक ११८) । अजन्य', अजन्यम्=शुभाशुभसूचकमहाभूतविकार , उत्पात' । 'उपलिङ्ग त्वरिष्ट स्यादजन्य डिम्बविप्लवौ ।' इति—(वै० पृ० ९८ श्लोक. १६०) । 'अजन्यं क्लीव उत्पात उपसर्ग सम त्रयम् ।' इति च—(अम० ना० लि० पृ० २९९ श्लोक १०९) । प्रमय , प्रमयम्=वध , मारणम् । "मारना" इति लोके । समय', समयम्='समयस्तु क्रियाकारे सङ्केते चरिते सताम् । सिद्धान्ते शपथे काले' इति—(वै० पृ० २४५ श्लोकः ८२) । राजसूय', राजसूयम्=राज्ञा कर्त्तव्यो यज्ञविशेषः, नृपाध्वर , क्रतुराज: । 'राजसूयो नृपाध्वर' ॥ क्रतूत्तमश्च' इति—(त्रि० शे० पृ० २९४ श्लोक. ५, ६) । हिरण्य., हिरण्यम्=स्वर्णम्, द्रव्यम्, रेतश्च । 'हिरण्य रेतसि द्रव्ये शातकुम्भवराटयो. । अक्षये मानभेदे च स्यादकुप्ये नपुसकम् ।' इति—(मे० पृ० १२१ श्लोक. ११४) । अरण्य., अरण्यम्=काननम्, वनम् । "जगल" इति लोके । शब्दचन्द्रिकाया तु पुसि कट्फलवृक्षवाचको दृश्यते । 'अटव्यरण्य विपिन गहन कानन वनम् ।' इति—(अम० ना० लि० पृ० १२७ श्लोक १) । संख्य , सख्यम्=युद्धम्, प्रहरणक्रिया । 'सख्यमाहवे । संख्यैकादी विचारे च' इति—(अने० स० पृ० ३२ श्लोक ३८६) । मलय', मलयम्=पर्वतविशेष', उद्यान च । 'उद्याने मलय, ना तु गिर्य्यंशगिरिभेदयोः ।' इति—(वै० पृ० २६२ श्लोक ६३) । 'चन्दनाद्रिस्तु मलय.' इति—(त्रि० शे० पृ० २८१ श्लोक ३) । 'मदनो मलयो द्रुमे ।' इति च—(श० भे० प्र० पृ० ५ श्लोकः २६) । वलय , वलयम्=हस्ताभरणविशेष', कङ्कणम् । 'वलयः कण्ठरोगे ना, कङ्कणे पुन्नपुसकम् ।' इति—(मे० पृ० ११९ श्लोक. ९६) । वाजपेय:, वाजपेयम्=यज्ञविशेष', वाजमन्नं, पैष्टी सुरा, पेयमत्र । अन्नसुराप्रधानो यागविशेष' । एपोऽर्धर्चादि । कषाय., कषायम्=अङ्गराग., रसविशेषश्च । "कसैला" "काढा" इति वा लोके । 'कषायो रसभेदेऽपि निर्य्यासे च विलेपने । अङ्गरागे च न स्त्री स्यात्, सुरभौ लोहिते त्रिषु ।' इति—(मे० पृ० ११८ श्लोक. ७७) । शल्य:, शल्यम्=वंशादीना शलाकाविशेष , शङ्कु । 'शल्यं तु न स्त्रियां शङ्कौ, क्लीबं क्ष्वेडेषु तोमरे । मदनद्रुश्वाविधोर्नां' इति—(मे० पृ० ११७ श्लोकः ५७) । कुल्य', कुल्यम्=

अस्थि, जलपथम्, मान्यं च । 'कुल्य स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च । कुल्या पय प्रणाल्या च नद्या जीवन्तिकौषधौ । कुलोद्भवे कुलहिते त्रिषु, मान्ये पुन पुमान् ।' इति––(मे० पृ० ११४ श्लोक १४) । 'कुल्या नदी, कुल्यमस्थि, कुल्या वारिप्रणालिका ।' इति च धरणि.' इति––(अम० सु० व्या० पृ० १०५ स्त० २ प० २१-२) । अव्यय, अव्ययम् = असख्यशब्दविशेष । 'अव्ययोऽस्त्री शब्दभेदे, ना विष्णौ,–निर्व्यये त्रिषु ।' इति––(मे० पृ० ११८ श्लोक ७१) । कविय, कवियम् = अश्वमुखबन्धनम् । ''लगाम'' इति लोके । 'नार्य्यां कवी, खलीन कविय वा ना, तुरङ्गमुखभाण्डम् ।' इति बोपालित ' इति––(अम० सु० व्या० पृ० ४६१ स्त० १ पं० ४) । पक्षे कविय । 'कवियोऽस्त्री खलीनोऽस्त्री, पञ्चाङ्गी कविका कवी ।' इति ––(वै० पृ० ११३ श्लोक· ११३) । गोमय, गोमयम् = गो पुरीषम्, गो शकृत् । ''गोबर'' इति लोके । 'गोविट् गोमयमस्त्रियाम् ।' इति–– (अम० ना० लि० पृ० ३५० श्लोक ५०) । पारिहार्य्य., पारिहार्य्यम् = आवापक । ''कङ्कण'' ''कड़ा'' ''पहुची'' इति वा लोके । 'आपावकः पारिहार्य्य' इति––(अम० ना० लि० पृ० २३९ श्लोक· १०७) । 'क्लीबेऽपि' । 'आवापक पारिहार्य्य वलय कटकोऽस्त्रियाम् ।' इति च––(वै० पृ० १७० श्लोकः १४४) । पारावार, पारावारम् = समुद्रः, तटद्वय च । 'पारावार समुद्रे ना, तटद्वये नपुसकम् ।' इति–– (मे० पृ० १४३ श्लोक २८१) । नखर, नखरम् = नख, करण्टकः, कररुह, पुनर्भव । 'पुनर्भव कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।' इति––(अम० ना० लिं० पृ० २३१ श्लोक. ८३) । अमरमालाया तु वाचकलिङ्गत्वमाह–– 'नखर त्रिषु' इति––(अम० सु० व्या० पृ० २३१ स्त० २ प० २४) । शिखरः, शिखरम् = द्रुमाग्रम्, अद्रिश्रृङ्गं च । 'शिरोऽग्र शिखरं वा ना' इति––(अम० ना० लिं० पृ० १३१ श्लोकः १२) । 'कूटोऽस्त्री शिखर श्रृङ्गम्' इति च––(अम० ना० लि० पृ० १२५ श्लोक ४) । 'अस्त्री' इति पूर्वोत्तराभ्यां सम्बध्यते । 'शिखरोऽस्त्री द्रुमाग्रे चाद्रिशृङ्गपुलकाग्रयो· । पक्वदाडिमबीजाभ' इति––(मे० पृ० १३६ श्लोक· २२६) । क्षेत्र , क्षेत्रम् = केदार. । ''खेत'' इति लोके । शरीर च । 'क्षेत्र शरीरे केदारे सिद्धस्थानकलत्रयोः ।' इति–– (मे० पृ० १२४ श्लोक २०) । 'पुन्नपुसकयोर्वप्रः केदारः क्षेत्रम्' इति च––(अम० ना० लिं० पृ० ३११ श्लोक. ४) । रोपधत्वात्पुंस्यपि । एव सर्वत्र बोध्यम् । वस्त्र, वस्त्रम् = वसनम् । ''कपडा'' इति लोके । 'वस्त्रमाच्छादन वासश्चेल वसनमशुकम् ॥' इति––(अम० ना० लिं० पृ० २४२ श्लोक ११५) । उपवस्त्र·, उपवस्त्रम् = उपवसनम्, वस्त्रसादृश्यम् । अलिञ्जर, अलिञ्जरम् = महाकुम्भ । ''माट'' इति लोके । 'अलिञ्जरः स्यान्मणिक ' इति–– (अम० ना० लि० पृ० ३१२ श्लोक. ३१) । 'क्लीबेऽपि ।' 'मणिकः स्यादलिञ्जरम् ।' इति च––(वै० पृ० १६३ श्लोक. ५६) । 'अलञ्जर.' इत्यपि । कूबर·, कूबरम् = युगन्धरः, युगकाष्ठबन्धनस्थानम्, यत्र रथस्य युगकाष्ठमासज्यते स , अथवा यत्र रथस्याश्वा बध्यन्ते सः । 'दांडी'' इति ख्यात. ।

युग वोढुर्बन्धनकाष्ठ धारयतीति युगन्धर । "जुआ" इति लोके। कूबरस्त्रिषु चारौ, ना कुब्जके-ऽस्त्री युगन्धरे ।' इति—(मे० पृ० १३३ श्लोक १४१) । कूर, कूरम् = अन्नम्, भक्तम् । ''भात" इति लोके ।'कूर भक्त प्रसादनम् ।' इति–(वै० पृ० १६५ श्लोक ७५)। बेर., बेरम् = शरीरम्, वार्त्ताकु, कुङ्कुम च । 'बेर कलेवरे क्लीब वार्ताकौ कुङ्कुमेऽपि च' । इति-(मे० पृ० १२ श्लोक ८५) । नीहार, नीहारम् = अवश्याय, हिमम्, तुषार: । "धुवारा" इति लोके। 'अवश्यायस्तु नीहार ' इति–(अम० ना० लिं० पृ० ३६ श्लोक १८) । हिञ्जीर, हिञ्जीरम् = हस्तिपाद बन्ध । 'हिञ्जीरश्च पादपाश ' इति—(अभि० स० अभि० चि० पृ० ४७ श्लोक १२२९)। सहस्र सहस्रम् = दशशतानि । "हजार" इति लोके ।'शत सहस्रयुतम्' इति-(वै० पृ० १८८ श्लोक २८) मेढ्र, मेढ्रम् = शिश्नः । 'मेढ् तु शेफसि क्लीबमीरितम् ।' इति–(श० र० स० पृ० २५८ प० २५) 'पुस्यपि' । शङ्कुर्मेढ्र शेफकशो' इति च—(वै० पृ० १७८ श्लोक ६१) । ससार:, ससारम् = भव दु खलोक । 'दु खलोको भवश्चैव ससार कष्टका(चा)रक ।' इति--(त्रि० शे० पृ० २७३ श्लोक ११) । सीर, सीरम् = हलम् । 'सीरोऽर्कहलयो पुसि' इति--(मे० पृ० १२९ श्लोक ९८) । 'क्लीबेऽपि' । 'हलं गोदारण सीरम्' इति च—(वै० पृ० १२५ श्लोक २७) । तुवर, तुवरम् = कषायरस. । "कसैला" "काढा" इति च लोके । 'तुवरस्तु कषायोऽस्त्री' अस्त्रीत्युभयान्वयि । इति--(अम० ना० लि० पृ० ५८ श्लोक ९) । 'अमी तुवराद्या षडपि रसमात्रे वर्त्तमाना पुसि । तद्वत्सु रसवत्सु वर्त्तमानास्त्रिषु वाच्यलिङ्गा इत्यर्थ । तुवरकषायौ नपुसकावपि अस्त्रीत्युक्तत्वात्' इति टीका । 'तुवरस्तु कषाये स्यात्काक्षयाढक्योस्तुवर्य्यपि ।' इति—(मे० पृ० १३४ श्लोक. १६४) । दीर्घादिरपि । 'नरेऽश्मश्रुणिशृङ्गाभ्या रहिते गवि तूवर । काले प्राप्ते कषाये च रसे पुंव्यञ्जने च्युते ।' इत्युत्पलिनी । 'नापि कषायस्तु(स्तू)वर ' इति बोपालितः । पुसि कषायस्तुवरम्' इति क्लीबकाण्डे रत्नकोष: । 'कुवरस्तु कषायोऽस्त्री' इत्येके पठन्ति ।' इति च--(अम० सु० व्या० पृ० ५९ स्त० १, २ प० ३६ त) । सूत्र, सूत्रम् = तन्तु । "सूत" इति लोके। सूत्रण च । 'सूत्राणि, नरि तन्तव ।' इति—(अम० ना० लि० पृ० ३४७ श्लोक २८) । 'सूत्र तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयो. ।' इति च--(अने० स० पृ० ३९ श्लोक. ४८१) । हारावल्यां संहतोऽपि—'सूत्रमेव सूत्रतन्तु' इति—(हा० व० पृ० ४०४ श्लोक १६९) । 'पत्रपात्रपवित्रसूत्रच्छत्रा.' पुसि चेति पुस्त्वमपि ।' शृङ्गार, शृङ्गारम् = सुरतम्, लवङ्ग च । 'शृङ्गार सुरते नाट्यरसे च गजमण्डने । नपुसकं लवङ्गेऽपि नागसम्भवचूर्णयो: ।' इति--(मे० पृ० १३९ श्लोक २३०) । पुण्ड्र:, पुण्ड्रम् = इक्षुभेद । "पौंडा" इति लोके। पुण्डरीकम्, सिताम्भोज च । 'पुण्ड्रोऽतिमुक्तके चित्रे कृमौ दैत्येक्षुभेदयो । पुभूम्नि देशभेदे, स्यात्पुण्डरीके नपुसकम् ।' इति—(श० र० स० पृ० २५७ प० ६) । अन्तर, अन्तरम् = मध्यम् । 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्यात्मसदृशेषु ।' इति--(मे० पृ० १३० श्लोक. १०६) । कर्णपूर, कर्णपूरम् =

अवतंस., शिरोभूषाभेद., उत्तस., कल्हारम्, सौगन्धिकम्, श्वेतोत्पल च। 'कर्णपूरोऽवतसे ना, क्ली सौगन्धिक उत्पले ।' इति—(वै० पृ० २७७ श्लोक ६) । 'कर्णपूर शिरीषे स्यान्नीलोत्पलावतसयो ।' इति च—(मे० पृ० १४१ श्लोक २५४) । नेत्र , नेत्रम् = नयनम्, परिधानविशेषः, वस्त्रभेद , मन्थगुण , द्रुममूल च । 'नेत्र नाडचा तरोर्मूले वस्त्रे दृशि मथो गुणो ।' इति—(वै० पृ० २२५ श्लोकः १७) । 'नेत्र वस्त्रविशेष स्यात्' इति मञ्जरी। 'पुस्यपि' । 'नेत्र वस्त्रविशेषश्च नेत्र चक्षुरुदाहृतम् । परिवर्त्तगुणो नेत्रो, नेत्र कस्तूरिकामृग ।' इति च—(अने० ध्व० म० पृ० ५ श्लोक. ४०) । वक्त्र , वक्त्रम् = मुखम्, वृत्तभेद , पथ्यावक्त्र च। 'वक्त्र मुखे वृत्तभेदे' इति—(मे० पृ० १२८ श्लोक ८३) । पवित्र , पवित्रम् = कुशम्, जलम् , पावनम्, वर्षणम् , अग्नि, हरि., तिलकवृक्ष, पुत्रजीवतरुश्च । 'पवित्रोऽग्नौ हरौ पूते, क्ली तु ताम्रेऽप्सु गोमये। मत्रे दध्नि ब्रह्मसूत्रे हेम्न्यर्थे कलशे कुशे ।' इति—(वै० पृ० २६१ श्लोक ५८) । पत्र , पत्रम् = वाहनम्, पर्णं च । 'पत्र तु वाहने पर्णे क्षुरिकागरुतोरपि ।' इति—(वै० पृ० २२५ श्लोक २०) । समर, समरम् = रण , युद्धम् । सग्राम समरोऽस्त्री' इति—(वै० पृ० १२१ श्लोक २०६) । उशीर, उशीरम् = वीरणीमूलम्, नलदम् । "खस" इति लोके । 'स्याद्वीरण वीरतृण मूलेऽस्योशीरमस्त्रियाम् ।' इति—(वै० पृ० ६४ श्लोक २३१) । अन्धकार, अन्धकारम् = आततिश्चान्धकारोऽस्त्री तत्तु सन्तमस यदि । परित ' इति—(वै० पृ० २२ श्लोक ६२) । वरः, वरम् = जामाता, मनागिष्ट च । 'वरो ना रूपजामात्रोर्देवादेरीप्सिते वृतौ । त्रिष्वग्र्ये, क्ली मनागिष्टे' इति—(वै० पृ० २३६ श्लोक ७२) । केदार , केदारम् = क्षेत्रविशेष । "खेत" "क्यार" इति च लोके । 'केदारेऽद्रौ शिवे क्षेत्रे भूमिभेदाऽऽलवालयो ।' इति—(मे० पृ० १३३ श्लोक १४३) । प्रवरः, प्रवरम् = सन्तति , गोत्रम् । 'प्रवरं सन्ततौ गोत्रे क्लीब श्रेष्ठे तु वाच्यवत् ।' इति—(मे० पृ० १३५ श्लोक. १७६) । 'पुस्यपि' । शालिविशेष. । 'प्रवरः शालियष्टिक ।' इति । मुद्रविशेषश्च । 'कृष्णे प्रवरवासन्तौ' इति च—(वै० पृ० १२६ श्लोक ३७) । कुलीर , कुलीरम् = कर्कट । "कांकडा" इति लोके । राशिविशेष., कर्कटराशिश्च । 'कुलीरः स्यात्कर्कटके राशिभेदे च गद्यते ।' इति—(श० र० स० पृ० २६८ प० १५) । 'कुलिर.' इत्यपि । शिशिर , शिशिरम् = ऋतुविशेष , आद्यर्त्तु, माघफाल्गुनमासौ । 'शिशिरो ना हिमे, न स्त्री ऋतुभेदे, जडे त्रिषु ।' इति—(मे० पृ० १३९ श्लोकः २२७) । आडम्बरः, आडम्बरम् = तूर्यस्वन आनक , पटह., युद्धपटह । "दमदमा" 'ढोल" इति च लोके । पक्ष्म, सरम्भः, कोप , गजगर्जित च । 'आडम्बरोऽस्त्री सरम्भे पटहे गजगर्जिते ।' इति—(वै० पृ० २७७ श्लोक ४) । गह्वर , गह्वरम् = गुहा, दम्भ, वनम्, विषमस्थानम्, लतादिपिहितस्थलं च । 'गह्वर कन्दरे दम्भे' इति—(वै० पृ० २५१ श्लोकः १५) । 'पुस्यपि'। 'गह्वरम् । 'गुहागहनदम्भेषु, निकुञ्जे तु पुमानयम् ।' इति च—(मे० पृ० ११३ श्लोक. १४८) ।

क्षीरः, क्षीरम् = पानीयम्, दुग्ध च। "दूध" इति लोके। 'क्षीर पानीयदुग्धयो.।' इति—(अने० स० पृ० ३४ श्लोक ३१४)। 'क्षीर देहजमम्बु च।' इति च—(वै० पृ० २२४ श्लोक. ४)। कोटर., कोटरम् = वृक्षस्थितगह्वरम्, निष्कुहम्। 'निष्कुट, कोटरो न स्त्री' इति—(वै० पृ० ४६ श्लोक १४)। चक्र, चक्रम् = पक्षिविशेषः, कोक, चक्रवाक.। "चकवा" इति लोके। रथाङ्गम्, राष्ट्रम्, कुम्भकारोपकरण च। "चाक" इति लोके। 'चक्र कोके पुमान्, क्लीब व्रजे सैन्यरथाङ्गयो। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयो। जलावर्तेऽपि' इति—(मे० पृ० १२५ श्लोक ३१)। चुक्र, चुक्रम् = अम्ल, अम्लवेतस, वृक्षाम्लम् शाकाम्लम्, तिन्तिडीक च। 'चुक्र वृक्षाम्ले, चाङ्गेर्यां स्त्री पुस्यम्लेऽम्लवेतसे।' इति—(मे० पृ० १२५ श्लोक ३६)। तिमिर, तिमिरम् = तम, ध्वान्तम्, नेत्रामयान्तर च। 'तिमिर ध्वान्ते नेत्रामयान्तरे।' इति—(मे० पृ० १३४ श्लोक १६२)। अङ्गार, अङ्गारम् = उल्मुकम्, वह्निदग्धशकलम्, अर्धदग्धकाष्ठम्। 'अङ्गारमुल्मुके न स्त्री, पुलिङ्गस्तु महीसुते।' इति—(मे० पृ० १३० श्लोक. १०८)। तुषार, तुषारम् = हिमम्। "वर्फ" इति लोके। देशविशेष., शीकर, जलकण, हिमभेदः, कर्पूरभेदश्च। 'तुषारो हिमदेशयो। शीकरे हिमभेदे च' इति—(अने० स० पृ० ९५ श्लोक ५६६)। शरः, शरम् = बाण, जल च। 'शरस्तु तेजने बाणे दध्यग्रे ना, शर जले।' इति— (मे० पृ० १२९ श्लोक ८६)। भ्राष्ट्र, भ्राष्ट्रम् = अम्बरीषम्, भर्जनपात्रम्। "भडसां" "भाड़" "कड़ाह" इति च लोके। 'क्लीबेऽम्बरीषं, भ्राष्ट्रो ना।' इति—(अम० ना० लि० पृ० ३१२ श्लोक ३०)। तक्र, तक्रम् = चतुर्थांशजलसयुत दधि, मथितम्, दण्डाहतम्, गोरसजम्, कालसेयम्। "मठा" "छाछ" इति च लोके। 'अथ घोल पादाम्बुसयुते। तक्र कट्वरमर्शोघ्नम्।' इति—(वै० पृ० १३५ श्लोक १४९)। जठर, जठरम् = उदरम्, कुक्षि। 'जठरो न स्त्रिया कुक्षौ, बद्धकक्ख (वृद्धकर्क) टयोस्त्रिषु।' इति— (मे० पृ० १३४ श्लोक १५६)। आर्द्र, आर्द्रम् = शृङ्गवेरम्। "अदरख" इति लोके। 'कटुभङ्ग शृङ्गवेरमार्द्रमार्द्रकमस्त्रियौ।' इति— (वै० पृ० ६२ श्लोकः २१४)। कुञ्जरः, कुञ्जरम् = हस्ती, केशश्च। 'कुञ्जरोऽनेकपे केशे।' इति— (मे० पृ० १३२ श्लोकः १३८)। पञ्जर., पञ्जरम् = शरीरम्, देहास्थिसमूह, कङ्कालम्, कलियुगम्। 'गवां नीराजनाविधिः' इति सारस्वताभिधानम्' इति राधाकान्तदेव।' इति—(श० चिं० पृ० १९ स्त० २ प० १८ त० २१ या०)। कायास्थिवृन्दम्, शरीरास्थिपञ्जरम्, शालारम्, पक्ष्यादिबन्धनागारम्। "पिंजरा" इति लोके। कुलाय, नीडम्, पक्षिनिलयश्च। "घोंसला" "कोल" इति च लोके। 'कुलायस्तु पञ्जरं नीडमस्त्रियाम्।' इति— (वै० पृ० ३० श्लोक. ४६)। 'यावन्मध्यं बहुधा पाञ्जरान्नावगाहते' इति दमयन्ती श्लेषादकारवान्।' इति (अम० सु० व्या० टि० पृ० ४५९ स्तं० २ पं० ४२)। क्वचित् 'पिञ्जर' मित्यपि पाठो दृश्यते। पिञ्जरः, पिञ्जरम् =

अश्वान्तरम्, पीत च । 'पिञ्जरोऽश्वान्तरे, पीते क्लीब, स्वर्णे च वाच्यवत् ।' इति—(मे० पृ० १३६ श्लोक १८५)। कर्पूर, कर्पूरम्=चन्द्रभस्म, वेधक । "कपूर" इति लोके। 'वे(रे)णुसारस्तु (रेणुकावर्ण) कर्पूरश्चन्द्रभस्म हिमाह्वयम्। वेधक' इति—(त्रि० शे० पृ० २९३ श्लोक ३९, ४०)। 'अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसंज्ञ सिताभ्रो हिमवालुका ॥' इति च—(अम० ना० लि० पृ० २४७ श्लोक १३०)। नूपुर, नूपुरम्=मञ्जीर। "पैजनिया" इति लोके। मतान्तरे तु पादकटक । "कडा" इति लोके। 'मञ्जीरो नूपुरोऽस्त्रियाम् ।' इति—(अम० ना० लि० पृ० २४० श्लोक १०९)। 'मञ्जीरोऽस्त्री सनूपुर ।' इति रसभ.' इति—(अम० सु० व्या० पृ० २४१ स्त० १ प० ६)। 'मञ्जीरो नूपुरोऽस्त्रियौ।' इति—(वै० पृ० १७० श्लोक १४५)। 'नूपुर पादकटके त्वस्त्रिया परिकीर्तित ।' इति च—(श० र० स० पृ० २७४ प० ७)। कुटीर, कुटीरम्=कर्कट, कुलीर, गृहम्, ह्रस्वा कुटी, क्षुद्रगृह च। "झोपडी" "झूपडी" "कुटिया" इति च लोके। 'कुटीरौ कर्कटालयौ ।' इति—(ना० र० मा० पृ० ९९ प० २)। 'क्लीबेऽपि ।' 'कुटीर क्षुद्रगेहे स्यात्' इति—(ना० म० पृ० ७२ प० २०)। 'कुटिरमित्यपि ।' 'कुटीर कुटिर तथा ॥' इति च—(द्वि० को० पृ० ४१२ श्लोक ३१)। 'विहार, विहारम्=भिक्षुस्थानम्, सौगतावासः, क्रीडा, लीला, क्रीडार्थं पद्भ्या सञ्चरणं च। विहार सौगतावासे क्रीडायाम्' इति—(वै० पृ० २४४ श्लोक. १६८)। 'विहारस्तु परिक्रम. ॥' इति च—(अम० ना० लि० पृ० ३९१ श्लोक· १६)। वार·, वारम्=परिपाटी, आवृत्ति सूर्यादिवासर., मदिरापात्रं च। 'वार· सूर्यादिदिवसे, वारोऽवसरवृन्दयो । कुब्जवृक्षे हरे द्वारे, वारं मद्यस्य भाजने ।' इति—(वि० प्र० पृ० १२६ श्लोक १७) । 'वार सूर्यादिवासरे। महेश्वरावसरयोर्वृन्दे कुब्जाख्यपादपे । वार तु मदिरापात्रे' इति च—(अने० सं० पृ० ३७ श्लोकः ४६६-७) । कान्तार, कान्तारम्=महारण्यम्, वनम्, बिलम्, दुर्गमवर्त्म च । 'कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि । पुसि स्यादिक्षुभेदे' इति—(मे० पृ० १३२ श्लोकः १३४)। तोमर, तोमरन्=आयुधविशेष, शर्वला । "गँडासा" "शावली" इति वा लोके। हस्तक्षेप्यसशल्यदण्ड । "रायबांस" इति लोके। स्थूलाग्रगदा च। 'शर्वला तोमरोऽस्त्रियाम् ।' इति—(अम० ना० लि० पृ० २९५ श्लोक ९३)। 'सर्वला' इत्यपि। 'तोमरस्त्वायुधभिदि' इति च—(श० र० स० पृ० २७२ श्लोक १०) । दुरोदरः, दुरोदरम्=द्यूतकार, पण·, द्यूत च । 'दुरोदरो द्यूतकारे पणे, द्यूते दुरोदरम् ।' इति—(अम० ना० लि० पृ० ४२६ श्लोक. १७१)। 'दुरोदर द्यूतकारे, द्यूताक्षपणयो पुमान् । इति। 'दुरोदर द्यूतभेदे, द्यूतकृत्पणयोः पुमान् ।' इति पाठान्तरम्' इति च—(मे० पृ० १४२ श्लोकः २६७)।' 'आश्रित्य दुर्गं गिरिकन्दरोदर क्रीडन्त्यमुष्मिन् सततं दरोदरम् ।' इति यमकान्निरुकारोऽपि' इति गोवर्धनः—इति मुकुटपीयूषौ' इति—(अम० सु० व्या० टि० पृ० ४२६ स्त० २ प० ३८-९)। वासरः, वासरम्=

दिवस, दिनम् । 'वा तु क्लीबे दिवसवासरौ ।' इति--( अम० ना० लि० पृ० ४४ श्लोक २) । पक्षे वासरम् । 'वासरस्तु पुमान् रागविशेषे, दिवसेऽस्त्रियाम् ।' इति--(मे० पृ० १३८ श्लोक २१३) । कासार:, कासारम्=सरोवर । ''तालाब'' इति लोके । पक्वान्न-विशेषश्च । तत्र नपुसकलिङ्ग । ''कसार'' इति लोके । 'कासार सरसी सर. ।' इति--(अम० ना० लि० पृ० १०३ श्लोक. २८) । 'कासार स्यात्सरोवरे ।' इति—(श० र० स० पृ० २६७ प० १५) । केसर, केसरम्=किञ्जल्क । ''फूल की धूली'' इति लोके । 'किञ्जल्क केसरोऽस्त्रियाम् ।' इति--(अम० ना० लि० पृ० १०८ श्लोक ४३) । 'केसर हिङ्गुनि क्लीब, किञ्जल्के न स्त्रिया, पुमान् । सिहच्छटाया पुन्नागे बकुले नागकेसरे ।' इति च—(मे० पृ० १३३ श्लोक १४२) । रभसस्तु हिङ्गुनि द्वयोरित्याह । करीर, करीरम्=वशाङ्कुर । 'वशाङ्कुरे करीरोऽस्त्री' इति--( मे० पृ० १३१ श्लोक १२५) । 'वशाङ्कुरे करीरोऽस्त्री, तरुभेदे घटे च ना ॥' इति च—(अम० ना० लि० पृ० ४२७ श्लोक १७३) । शरीर, शरीरम्='शरीर करण सिनम् ।' इति—(वै० पृ० १७७ श्लोक ५२) । 'शरीर वर्ष्मणि स्मृतम् ।' इति च--(श० र० स० पृ० २८१ प० १०) । जीर, जीरम्=जीरक:, अजाजी, खड्गश्च । 'जीरस्तु जरणे खड्गे' इति--(मे० पृ० १२५ श्लोक. ३९) । 'मञ्जीर., मञ्जीरम्=नूपुर. । ''पायजेब'' इति लोके । 'मञ्जीरोऽस्त्री सनूपुर: । ' इति रभस ' इति--(अम० सु० व्या० पृ० २४१ स्त० १ प० ६) । 'मञ्जीरो नूपुरोऽस्त्रियौ ।' इति च—(वै० पृ० १७० श्लोक. १४५) । शेखर, शेखरम्=शिरोभूषणम्, शिखास्थमाल्य च । 'अथापीडेऽवतंसोत्तसशेखरा । केशेषु गर्भकं माल्यम्' इति—(वै० पृ० १७१ श्लोक १५४-५) । 'क्लीबेऽपि । 'लवङ्गकलिका दिव्यं लवङ्ग शेखर लवम् ।' इति च—(रा० नि० पृ० १०४ श्लोक: ८४) । युगन्धर, युगन्धरम्=कूबर. । ''जुआँ'' इति लोके । युगकाष्ठबन्धनस्थानम् । 'कूबरस्तु युगन्धर: ।' इति--(अम० ना० लि० पृ० २८४ श्लो०. ५७) । वज्र, वज्रम्=कुलिशम्, इद्रास्त्रम् । 'ह्लादिनी वज्रमस्त्री स्यात्' इति—(अम० ना० लि० पृ० २० श्लोक ४७) । 'अस्त्रियौ वज्रकुलिशौ' इति संसारावर्त.' इति--(अम० सु० व्या० पृ० २० स्त० १ प० २८, २९) । 'वज्र स्याद् बाल(ध)के धात्र्या क्लीब, योगान्तरे पुमान् । वज्रा स्नुह्या गुडूच्या च, वज्री स्नुह्यन्तरे स्मृता । दम्भोलौ हीरकेऽप्यस्त्री' इति च-- (मे० पृ० १२८ श्लोक. ८१-२) । वप्र:, वप्रम्=क्षेत्रम् । ''खेत'' इति लोके । रेणु, चय:, तट च । 'वप्रस्ताते पुमा,-नस्त्री रेणौ क्षेत्रे चये तटे । इति—(मे० पृ०

---

(१) अस्योदाहरण वामनीयटीकायाम्—''स वाग्वज्रो यजमान हिनस्ति यथेन्द्रशत्रून् स्वरतोऽपराधात् ॥'' तथा--(''जान्वञ्चितातिहिमलीमसशाटकाना मित्रादपि प्रथमयाचितभाटकानाम् । पुत्रादपि प्रियतमैकवराटकाना । वज्र दिव: पततु मूर्ध्नि किराटकानाम् ॥ इति । पृ० १२ प० ६ त. ।

१२८ श्लोकः ८२) । आलवालः, आलवालम् = वृक्षमूलकृतजलाधारः, वृक्षादिमूले समन्ततोऽम्भसो धारणार्थं यद्वेष्टनं तत् । 'आधारस्त्वम्भसां यत्र धारणम् । स्यादालवालमावालमावाप' इति—(अम० ना० लि० पृ० १०४ श्लोक २९) । पल, पलम् = मांसम्, उन्मानं च । 'पलमुन्मानमासयो ।' इति—(मे० पृ० १४७ श्लोक. २६) । रुद्रहेमौ च । भाल, भालम् = ललाटम् । "माथा" इति लोके । 'भाल तेजोललटायो ।' इति—(मे० पृ० १४८ श्लोक. ४२) । पलाल, पलालम् = सकाण्डोऽगृहीतफलत्वान्निष्फलः, निष्फलं तृणादिकाण्डम्, सस्यशुष्कधान्यनाल । "पुआल" "पयार" इति च लोके । 'नाडी नाल च काण्डोऽस्य पलालोऽस्त्री स निष्फल ।' इति—(अम० ना० लि० पृ० ३०९ श्लोक २२) । 'पलालोऽस्त्री, कर्णिका स्त्री' इति च—(वै० पृ० १२८ श्लोक. ६४) । पल्वल, पल्वलम् = क्षुद्रसर, अल्पसरः, वेशन्तः । 'वेशन्त पल्वलं चाल्पसरः' इति—(अम० ना० लि० पृ० १०३ श्लोक २८) । 'वेशन्त पल्वलोऽस्त्री' इति च वाचस्पति ' इति—(अम० सु० व्या० पृ० १०४ स्त० १ प० ३, ४) । खल, खलम् = सूर्य्य, तमालवृक्ष, धत्तूरवृक्षश्चैषु पुलिङ्ग । खलाधानम्, सस्यमर्दनस्थानम्, कल्कम्, भूश्चैषु क्लीबलिङ्गः स्यात् । 'अथ खल सस्यस्थाने, शठे त्रिषु ।' इति—(त्रि० शे० पृ० ३७१ श्लोक ३९०) । 'खलधान पुन. खल ।' इति । 'छिन्न दधि बुस रूक्ष खल सेव्य च नि.सरे ।' इति । 'खल भूस्थानकल्केषु, खलो नीच, खलेत्वरी ।' इति च—(वै० पृ० २३२ श्लोक २५) । चषाल., चषालम् = यज्ञपात्रम्, यज्ञीयपशुबन्धनार्थं यूपमध्ये देयो वलयाकार काष्ठमयो लोहमयो वा पदार्थश्च । 'यूपमध्य समादानं, यूपाग्र तर्म न स्त्रियाम् । कटकेऽस्य चषालोऽस्त्री, मूले तूपरमक्षते ।' इति—(वै० पृ० ९१ श्लोक. १०४-५) । विशाल, विशालम् = आविकः, उरभ्रः, मृगप्रभेदः, पक्षिविशेष, नृपान्तरम्, वृक्षविशेषश्च । 'विशालस्त्वाविकोरभ्रौ' इति—(वै० पृ० १६९ श्लोक १२९) । 'विशाला त्विन्द्रवारुण्यामुज्जयिन्या तु योषिति । नृपवृक्ष(मृगपक्षि)भिदो पुसि, विशाले त्वभिधेयवत् ।' इति च—(मे० पृ० १५४ श्लोक १३३) । शूल, शूलम् = रोगविशेष, प्रहरणविशेषः, आयुध च । 'शूलोऽस्त्री रोग आयुधे । मृत्युकेतनयोगेषु, शूला स्यात्पण्ययोषिति ।' इति—(मे० पृ० १४८ श्लोकः ५३) । मूल., मूलम् = नक्षत्रविशेष, एकोनविशतिनक्षत्रम्, पार्श्वम्, अन्तिकम्, प्रतिष्ठा च । 'मूल शिफाद्ययोः । मूलवित्तेऽन्तिके, वा ना भे' इति । 'मूल शिफाद्ययो. । भे निकुञ्जेऽन्तिके वा ना' इति पाठान्तरम्' इति—( मे० पृ० १४८ श्लोक ४५ ) । 'हस्तास्वातिश्रवणा अक्लीबे, मृगशिरो नपुसि स्यात् । पुसि पुनर्वसुतिष्यौ, मूल त्वस्त्री, स्त्रियां शेषा ।' इति च कोशान्तरम्' इति—(श० चि० पृ० १३२६ स्त० १ प० ११-२ ३-४) । मुकुल, मुकुलम् = कुड्मलः, ईषद्विकाशोन्मुखकलिका, आत्मा, शरीर च । 'कुड्मलो मुकुलोऽस्त्रियाम् ॥' इति—( अम० ना० लि० पृ० १३४ श्लोक १६ ) । तल., तलम् = अधोभाग, अनूर्ध्वम्, मूलम्, महीतलम्, स्वरूप च । 'अधः स्वरूपयोरस्त्री तलम्' इति—(अम०

ना० लि० पृ० ४३२ श्लोक २०२)। 'स्वरूपेऽधस्तलोऽस्त्रियाम्। क्ली तुल्यदेशे।' इति च—(वै० पृ० २३२ श्लोक ३५)। तैल, तैलम्=तिलादीना विकार', स्नेह, म्रक्षणम्। 'कल्क स्नेहे तिलाना तैल स्यादन्येषा नामपूर्वकम्।' इति—(वै० पृ० १३४ श्लोक १३७)। तैलं कल्के तिलस्नेहे' इति च—(शि० को० पृ० ४० श्लोक ४४२)। तूल', तूलम्=पिचु, उन्मान च। 'तूल स्याद् ब्रह्मदारुणि। आकाशे च पिचौ न स्त्री' इति—(मे० पृ० १४६ श्लोक २५-६)। 'पुलिङ्गस्तु पिचौ तूल, क्लीब स्याद् ब्रह्मदारुणि।' इति च रुद्र' इति—(अम० सु० व्या० पृ० १४३ स्त० १ प० ५)। 'पिचुतूल' इति—रभसात्सघातोऽपि' इति—(अम० सु० व्या० पृ० ३३७ स्त० २ प० २१)। कुड्मल, कुड्मलम्=ईपद्विकाशोन्मुखकलिका। 'अथ कुड्मलो मुकुलोऽस्त्रियौ।' इति—(वै० पृ० ४६ श्लोक' १६)। तमाल, तमालम्= वृक्षविशेष, कालस्कन्धवृक्ष। 'कालस्कन्धे तमालोऽस्त्री' इति—(वै० पृ० ५२ श्लोक ८७)। 'तमालस्तिलके कालस्कन्धे च वरुणद्रुमे।' इति च—(शि० को० पृ० ४२ श्लोक ४५९)। कपाल', कपालम्=कर्पर, मूर्धोर्ध्वास्थि। "खोपरी" "खोपडी" इति लोके। घटादीनामवयवविशेषश्च। 'स्यात्कर्पर. कपालोऽस्त्री' इति·—(अम० ना० लिं० पृ० २२५ श्लोक. ६८)। 'कपालोऽस्त्री-शिरोऽस्थिन स्याद् घटादे. शकले व्रजे।' इति च—(मे० पृ० १५० श्लोक ७२)। कवल:, कवलम्=ग्रास। "कौर" इति लोके। 'कवल कबतो ग्रास' इति—(वै० पृ० १६७ श्लोक १०१)। अमरस्तु वकारमध्य' पुस्त्वमपीत्याह—'ग्रासस्तु कवल पुमान्॥' इति च—(अम० ना० लिं० पृ० ३२१ श्लोक: ५४)। लोपधत्वान् क्लीबलिङ्गोऽपि। 'प्रवाल, प्रवालम्= विद्रुम। "मूगा" इति लोके। नवकिसलयविशेषश्च। 'अथ विद्रुम पुंसि, प्रवाल पुन्नपुसकम्' इति। 'प्रवालमङ्कुरेऽप्यस्त्री' इति च—(अम० ना० लि० पृ० ४३२ श्लोक २०४)। 'प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे।' इति—(मे० पृ० १५२ श्लोक १०७)। 'प्रवालोऽस्त्री किसले विद्रुमद्रुमे।' इति च—(शि० को० पृ० ४२ श्लोक ४६३)। प्रवालशब्द ओष्ठमध्योऽपि स्यादिति केचिदिच्छन्ति। बल., बलम्=बलदेव, दैत्यप्रभेद, वायस, गन्धरस, रूपम्, रेत, स्थाम, सैन्यं च। 'बल रूपेऽस्थनि स्थौल्ये शक्तिरेतश्चमूषु च। बलो रामे बलाढचे च' इति—(वै० पृ० २३४ श्लोक ५४-५)। 'बल गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययो.। पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च। बलयुक्तेऽन्यलिङ्ग. स्याद् बला वाटचालके स्त्रियाम्।' इति च—(मे० पृ० १४७ श्लोक. ३७-८)। शम्बल', शम्बलम्=पाथेयम्, कूलम्, मत्सरश्च। 'शम्बलोऽस्त्री सम्बलवत्कूलपाथेयमत्सरे।' इति—(मे० पृ० १५४ श्लोक १३५)। उत्पल:, उत्पलम्=नीलकमलम्, कुष्ठौषधि:, जलसम्भवविशेष', जलजपुष्पमात्र च। 'उत्पला तुष-पर्पटचां, क्लीबं कुष्ठप्रसूनयो' ' इति—(मे० पृ० १४९ श्लोक' ६२)। 'रोगाख्यं पाक-लोत्पले।' इति। 'उद्दण्डपालनदलद्रेकराजीवकोत्पला: ।' इति च—(वै० पृ० १३१

श्लोक ९९)। 'उत्पलं पुष्करे कुष्ठे' इति—(शि० को० पृ० ४१ श्लोक ४४६)। 'चन्द्राब्जे चोत्पल कुष्ठे' इति च—(रा० नि० पृ० ४२३ श्लोक ८)। उपल:, उपलम्=शिला, अश्मा, प्रस्तर। 'शर्कराया दृषत्पुत्रे स्त्र्य,-स्त्र्यन्यमन्य-पलो मणौ।' इति—(वै० पृ० २५८ श्लोक १७)। शील, शीलम्=चरितम्, सद्वृत्तम्, स्वभावश्च। 'शील वृत्त-स्वभावयो.।' इति—(वै० पृ० २२६ श्लोक ३३)। शैल:, शैलम्=पर्वत, शैलेयम्, तार्क्ष्य-शैलम्, रसाञ्जनम्, शिलाजतु च। 'शैलो भूभृति, शैल तु शैलेये तार्क्ष्यशैलके।' इति—(मे० पृ० १४९ श्लोक ५६)। शकल, शकलम्=खण्डम्। 'भित्त शकलखण्डे वा पुस्य,-र्द्धोऽर्द्धं समेऽशके।' इति—(अम० ना० लि० पृ० ३५ श्लोक १६)। 'शकलं खण्डवल्कले।' इति—(वै० पृ० २५२ श्लोक ३४)। अङ्गुल, अङ्गुलम्=अष्टसख्ययवोदरमानम्। 'अङ्गुलोऽस्त्री यवा अष्टौ' इति—(वै० पृ० ३६ श्लोक ५२)। अञ्चल, अञ्चलम्=वस्त्रान्त। "आंचर" "आचल" इति वा लोके। एकशफाघ्रिको बन्धश्च। 'एकशफाघ्रिक बन्धमाहुर्दामाञ्चल बुधा।' इति—(हा० व० पृ० ३९६ श्लोक ६१)। 'वस्त्रान्तस्त्वञ्चल' इति च—(वै० पृ० १६६ श्लोक १३१)। कमल, कमलम्=पद्मम्, सलिलम्, मृगप्रभेद, कुरङ्गश्च। 'कमल सलिले ताम्रे जलजे क्लो(व्यो)म्नि भेषजे (भूषणे)। मृगभेदे तु कमल, कमला श्रीवरस्त्रियो।' इति—(मे० पृ० १४९ श्लोक ६५)। 'स्यात्कुरङ्गेऽपि कमल' इति—(अम० ना० लि० पृ० ४३१ श्लोक १९४)। मल, मलम्=किल्बिषम्, पापम्, विट्, कलङ्कश्च। 'पापे पुरीषे किट्टे च मलमस्त्री' इति—(ना० र० मा० पृ० ५४ प० १२)। मुशल., मुसल, मुशलम्, मुसलम्=आयुधविशेष:, क्षोदनविशेष:, अयोग्रम्, कण्डनीयदण्डश्च। 'मूसर" "मूसल" इति वा लोके। 'अयोनिर्मुसलोऽस्त्री स्यात्' इति—(वै० पृ० १६४ श्लोक ६५)। साल, सालम्=वृक्षमात्रम्, प्राकार, सर्जवृक्ष: "सखू" इति लोके। धूनकश्च। 'साल पादपमात्रे स्यात्प्राकारे सर्जपादपे।' इति—(मे० पृ० १४६ श्लोक ५५)। धूनकार्थे तु क्लीबलिङ्गो बोध्य। 'पुसि भूरुहमात्रेऽपि सालो वरणसर्ज-यो:।' इति रसभ.' इति—(अम० सु० व्या० पृ० १४३ स्त० २ प० ३३-४)। 'तालव्योऽपि, 'तालव्यो नृपझषयो शालो, वृक्षे वृतौ द्रुभेदे च। तालव्यदन्त्य उक्तस्तथा स्त्रिया वृक्षशाखायाम्।' इत्यूष्मविवेक।' इति—(अम० सु० व्या० पृ० ११७ स्त० २ प० ७, ८)। 'शालोऽक्षिपीलुके॥ सर्जे चारेऽपि।' इति च—(शि० को० पृ० ४०, ४१ श्लोक ४४६-७)। कुण्डल:, कुण्डलम्=कर्णाभरणाविशेष। 'कुण्डलो दीर्घनिर्वंशे' इति। 'कुण्डल कर्णवेष्टनम्।' इति च—(वै० पृ० ११७ श्लोक १६३)। 'कुण्डल कर्णभूषाया पाशेऽपि वलयेऽपि च। काञ्चनद्रुगुडच्यो स्त्री' इति च—(मे० पृ० १५१ श्लोक ८२-३)। कलल., कललम्=कलनम्, शुक्रशोणितसघात., शुक्र-शोणितादेरीषद्घनपरिणाम, गर्भवेष्टनचर्म, जरायुश्च। 'उल्व कललोऽस्त्रियाम्।' इति—(अम० ना० लि० पृ० २१४ श्लोक: ३८)। 'जरायु कलल चोल्बम्' इति च— (प० र० मा० पृ० ४४

प० ५)। नल, नलम् = नड, पोटगल·, पद्म च। 'नल· पोटगले राज्ञि पितृदेवे कपीश्वरे। कमलेऽपि च, नट्या च, क्रमेण क्लीबयोषितो.।' इति–(मे० पृ० १४७ श्लोक २७)। निगल, निगलम् = शृखल, हस्तिनिगड। "बेडी" इति ख्यात। 'अन्दुको निगलो न स्त्री, भिदुर, शृंखला त्रयी।' इति––(वै० पृ० ११० श्लोक ८३)। 'डलयोरेकत्वम्।' 'निगड' इत्यपि। 'अथ शृखला। अन्दुको निगडोऽस्त्री स्यात्' इति च––(अम० ना० लि० पृ० २७८ श्लोक ४१)। नील, नीलम् = निधि, पर्वत·, वानरविशेष, नीलरक्तं च। 'नील तु नीलरक्ते, ना निध्यद्रि-वानरान्तरे।' इति––(मे० पृ० १४७ श्लोक २९)। मङ्गल, मङ्गलम् = भौमग्रह, कल्याण च। 'मङ्गला सितदूर्वायामुमाया, पुसि भूमिजे। नपुसक तु कल्याणे, पुसि सर्वार्थरक्षणे।' इति––(मे० पृ० १५३ श्लोक १२०)। काकोल, काकोलम् = विषविशेष। 'पुसि क्लीबे च काकोलकालकूट-हलाहला।' इति––(अम० ना० लि० पृ० ९० श्लोक १०)। 'काकोल नरकान्तरे। ना कुलाले द्रोणकाके, विषभेदे तु न स्त्रियाम्।' इति च––(मे० पृ० १५० श्लोक ७४)। हलाहल, हलाहलम् = विषविशेष। 'पुसि क्लीबे च काकोलकालकूटहलाहल।' इति––(अम० ना० लि० पृ० ९० श्लोक. १०)। हल, हलम् = लाङ्गलम्, गोदारणम्, सीरम्। 'हल गोदारण सीरम्' इति–(वै० पृ० १२५ श्लोक २७)। कोलाहल, कोलाहलम् = कलकल, बहुभि कृतोऽस्पष्टशब्द। 'कोलाहल, कलकल:' इति––(अम० ना० लि० पृ० ७१ श्लोक. २५)। 'कोलाहल कलकलस्तथा सर्जरसेऽपि च।' इति च––(श० र० स० पृ० ३११ प० १४)। कङ्काल·, कङ्कालम् = करङ्क·, अस्थिपञ्जरम्। 'कङ्कालोऽस्त्री तनोरस्थि करङ्कोऽप्यस्थिपञ्जरम्।' इति––(वै० पृ० १८२ श्लोक ११४)। वल्कल., कल्कलम् = वृक्षादीना त्वक्। "छाल" इति लोके। 'वल्क वल्कलमस्त्रियाम्।' इति––(अम० ना० लि० पृ० १३१ श्लोक· १२)। सौवर्चल·, सौवर्चलम् = सर्जिकाक्षार, लवणान्तरं च। 'अथ सौवर्चल सर्जक्षारे च लवणान्तरे।' इति––(मे० पृ० १५७ श्लोक· १६६)। धूमल·, धूमलम् = देवतार्चनवाद्यम्। 'देवतार्चनतूर्ये तु धूमलोऽस्त्री' इति––(वै० पृ० १४७ श्लोक. १३८)। फल., फलम् = हेतुसमुत्थम्, प्रयोजनम्, कुसुमादिसम्भवसस्यम्, वृक्षादीना फलम्, जातीफल च। 'प्रसव पिप्पल सस्य फलम्' इति––(वै० पृ० ४६ श्लोक· २०)। 'फलं हेतुसमुत्थे स्यात्फलके व्युष्टिला-भयो:। जातीफलेऽपि कक्कोले सस्यबाणाग्रयोरपि।' इति च––(वि० प्र० पृ० १४९ श्लोक· २)। हालाहल, हालाहलम् = विषप्रभेद·। 'हलाहल ब्रह्मसूर्पे ज्येष्ठिकायां विषेऽस्त्रियाम्। हालाहलो विषे कीटे' इति––(श० र० स० पृ० ३१४ प० ९)। जम्बाल·, जम्बालम् = पङ्क·, कर्दम·। "कीचड" इति लोके। 'निषद्वरस्तु जम्बाल: पङ्कोऽस्त्री शादकर्दमौ।' इति––(अम० ना० लिं० पृ० ६६ श्लोक. ९)। 'जम्बाल: शैवले पङ्के' इति च–(मे० पृ० १५१ श्लोक· ९१)। खण्डल, खण्डलम् = छिद्र-वस्त्रैश्चीरम्। 'छिद्रवस्त्रैश्चीर खण्डलमस्त्रियाम्।' इति–(वै०पृ० १६९ श्लोक: १३०)। लाङ्गल·, लाङ्गलम् = कुसुमविशेष·, भूमिकर्षणयंत्रविशेष·, गोदारणम्, लिङ्गं च। 'लाङ्गली तोयपिप्पल्यां,

क्लीब तु कुसुमान्तरे । गोदारणे तृणराजगृहदारुविशेषयो ।' इति—(मे० पृ० १५४ श्लोक. १२८) । 'लिङ्ग तु लाङ्गल शेफ' इति च-(त्रि० शे० पृ० २६१ श्लोक २३) । गरल, गरलम् = विषम्, वृक्षविशेष , कैडर्य्यश्च । 'गरल तु विष क्ष्वेल' इति । 'राढ कैडर्य्यो विषपुष्पक. । काकर्दश्छर्दनश्चीनो गरल कण्टकीति च ।' इति च—(वै० पृ० ४९ श्लोक ५०) । इन्द्रनील, इन्द्रनीलम् = अश्मसार., मरकतमणि । "पन्ना" इति लोके । 'अश्मसारस्त्विन्द्रनील' इति—(त्रि० शे० पृ० ३०४ श्लोक. २९) । 'क्लीबेऽपि ।' 'इन्द्रनील महानीलम्' इति च—(वै० पृ० ४४ श्लोक ४०) । गाण्डीव , गाण्डिव , गाण्डीवम्, गाण्डिवम् = धनुर्मात्रम्, अर्जुनधनुश्च । 'गाण्डीवो गाण्डिवश्चास्त्री कार्मुकेऽर्जुनकार्मुके ।' इति—(मे० पृ० १६० श्लोक ३६) । 'कपिध्वजस्य गाण्डीवगाण्डिवौ पुन्नपुसकौ ।' इति—(अम० ना० लि० पृ० २६१ श्लोक ८४) 'जिष्णोर्धनुषि, कोदण्डे, गाण्डीव गाण्डिव तथा ।' इति च—(अने० समु० पृ० ५२ श्लोक: ५८६) । कोदण्डो धनुर्मात्रेऽपि । उल्व , उल्वम् = कलकल , शुक्रशोणितसघात , जरायु , गर्भवेष्टनचर्म, गर्त्त च । 'गर्भाशयो जरायु स्यादुल्व च कललोऽस्त्रियाम् ।' इति—(अम० ना० लि० पृ० २१४ श्लोक ३८) । पारशव , पारशवम् = निषाद , परस्त्रीपुत्र', लोहम्, शस्त्र च । 'पारशव पुमान् । परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च ।' इति—(मे० पृ० १६२ श्लोक: ६०) । पार्श्व , पार्श्वम् = शरीरैकदेश , कक्षाऽधोभाग , चक्रोपान्तम्, पर्शुगण , अन्तिकं च । 'पार्श्वं कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च ।' इति—(मे० पृ० १५८ श्लोक १८) । 'न क्ली कक्षा बाहुमूल पार्श्वमस्त्री तयोरध. ।' इति च—(वै० पृ० १७८ श्लोक ६६) । अपूर्व , अपूर्वम् = न विद्यते पूर्व कारण यस्य स परमात्मा तस्मिन् पुंलिङ्ग । यागावान्तर व्यापारो यागावान्तरकर्म वा तस्मिन् नपुसकलिङ्ग. । त्रिदिव , त्रिदिवम् = स्वर्ग. खम्, नभ:, सुख च । 'त्रिदिवा सरिदन्तरे । पुसि स्वर्गे' इति—(मे० पृ० १६० श्लोक ३७) । 'त्रिदिवो व्योम्नि दिव्यपि ।' इति—(वै० पृ० २४१ श्लोक. २९) । 'क्लीबेऽपि' । 'त्रिदिव तु सुखे स्वर्गे, स्वर्णद्या त्रिदिवा मता ।' इति च—(श० र० स० पृ० ३२० श्लोक ६) । ताण्डव:, ताण्डवम् = नृत्यम्, नाट्यम्, तृणभेदश्च । 'ताण्डवोऽस्त्री तृणान्तरे । भवेदुद्धतनृत्ये च' इति—(मे० पृ० १६० श्लोक ३६) । निष्ठेव , निष्ठेवम् = मुखेन श्लेष्मनिरसनम् । 'निष्ठीवोऽस्त्री निष्ठीवनमपि निष्ठेवनं च निष्ठयूति ।' इति—(वै० पृ० १९५ श्लोक ३६) । प्रग्रीव., प्रग्रीवम् = वास्तुनिमित्तकारणम्, वातायनम् । "झरोखा" इति लोके । मुखशाला । "खिड़की" इति लोके । वृक्षशीर्षक वा । एव कलश:, ग्रीवा, प्रासादश्च । 'प्रग्रीवमस्त्री कलशे ग्रीवाप्रासादयोरपि ।' इति—(वै० पृ० २६१ श्लोक. ५६) । शराव., शरावम् = वर्द्धमानाख्यम् । "सेरवा" "क्वसवा" "ढकना" "मलैया" "कसोरा" इति वा लोके । 'अस्त्री शरावो वर्द्धमानकः ।' इति—(अम० ना० लि० पृ० ३१३ श्लोक ३२) । 'सराव' दन्त्यादिरपि—इति मुकुटश्च ।

राव, रावम् = शब्द, ध्वनि । 'रवो नाद स्वनिर्घोष सव्याड्भ्यो राव आरव ।' इति—. (अभि० म० अभि० चि० पृ० ५३ श्लोक १४००) । भाव, भावम् = स्वभाव, शब्दविषये-ऽभिप्राय, आत्मा, योनिश्च । 'भाव पदार्थो धर्म स्यात्सत्त्व तत्त्व च वस्तु च ।' इति । 'भावो गौरविते जन्तौ पदार्थेऽभिनयान्तरे ।' इति च—(त्रि० शे० पृ० ३७६ श्लोक ४२०) । 'आत्मा भावो मनो भावो भाव सत्ता भवेऽपि च । भाव पूज्यात्मको लोकः पदार्थो भाव उच्यते ।' इति च—(अने० ध्व० म० पृ० २ श्लोक १३) । 'वोपधमदन्तम् ।' इति दुर्ग । वोपधत्वात् क्लीवलिङ्गोऽपि । क्लीव, क्लीवम् = नपुसकम् । "हिजडा" इति लोके । 'अस्त्री नपुसके क्लीब, वाच्यलिङ्गस्त्वविक्रमे ।' इति रुद्र' इति—(अम० सु० व्या० पृ० ४३४ स्त० २ प० १४) । 'पस्थपि ।' 'तृतीया प्रकृति षण्ड क्लीव पण्डो नपुसकम् ।' इति च—(अम० ना० लि० पृ० २१५ श्लोक ३९) । शव, शवम् = मृतशरीरम्, पानीय च । 'शव स्यात्कुणपे पुमान् । नपुसक तु पानीये' इति--(मे० पृ० १५९ श्लोक २४) । 'कुणपस्तु शवोऽस्त्रियाम् ।' इति च--(वै० पृ० १२२ श्लोक २१६) दैव, दैवम् = विवाहविशेष, विधि, प्राक्तनशुभाशुभकर्म । 'दैव भाग्ये च नियतौ देवसम्बन्धवत्यपि ।' इति--(श० र० स० पृ० ३१६ श्लो० १६) । पूर्व, पूर्वम् = कारणम्, पूर्वभावि, अतिक्रान्तश्च । 'पुमास पूर्वजा. पूर्व प्राक् पूर्वमग्रत ।' इति—(अने० समु० पृ० ३९ श्लोक ४३७) । 'प्राक् पूर्वमग्रत' इति धरणि' इति—(अम० सु० व्या० पृ० ४२० स्तं० १ प० ४) । 'पूर्वोऽन्यलिङ्ग प्रागाह, पुबहुत्वेऽपि पूर्वजान् ।' इति--(अम० ना० लि० पृ० ४२० श्लोक १३४) । 'पूर्वे तु पूर्वजेपु स्यु. पूर्व., प्रागाद्ययोस्त्रिषु ।' इति च—(मे० पृ० १०५ श्लोक ६) । पल्लव', पल्लवम् = किसलयम् । ''नये पत्ते'' इति लोके । 'पल्लवोऽस्त्री किसलयम्' इति—(अम० ना० लि० पृ० १३२ श्लोक १४) । 'पल्लवोऽस्त्री किसलय किसलोऽपि नवे दले ।' इति । 'पल्लव स्त्वस्त्री प्रकोष्ठेऽप्यतिविस्तृतौ ।' इति च—(वै० पृ० २६१ श्लोक. ५८) । 'पुसि क्लीबे च पल्लव ।' इति व्याडि.' इति—(अम० सु० व्या० पृ० १३२ स्त० २ प० ३४-५) । 'पल्लवोऽस्त्री किसलये विटपे विस्तरे बले ।' इति—(मे० पृ० १६० श्लोक ३९) । हेमस्तु पुंसीत्याह—'पल्लव. किसले बले । विटपे विस्तरेऽलक्तरागे शृङ्गारपिङ्गयो ।' इति च—(अने० स० पृ० १०६ श्लोक ७४१, ७४२) । नल्वः, नल्वम् = किष्कुचतुःशतम् । 'नल्व. किष्कुचतु शतम् ।' इति—(हा० व० पृ० ४०६ श्लोक १९७) । अमरश्च । 'नल्वौ विश हस्तशतम्' इति मुकुट. । 'क्लीबेऽपि' । 'नल्व हस्तशतम्' इति कात्यः । 'नल्व विशहस्तशतम्' इति च भट्टक्षीर-स्वामी' इति—(अम० सु० व्या० टि० पृ० ११६ स्तं० १ प० ४०-१) । पाशः, पाशम् = कलापार्थः, बन्धनम्, पक्ष्यादिबन्धन च । 'पाश' कचान्ते संघार्थ., कर्णान्ते शोभनार्थकः । छात्राद्यन्ते च निन्दार्थः, पाश' पक्ष्यादिबन्धने ।' इति—(त्रि० शे० पृ० ३७७ श्लोकः ४२८) । कुलिशः, कुलिशम् = शम्बः, वज्रम्, इन्द्रास्त्रम्, दम्भोलि. । 'कुलिशो न स्त्री दम्भोलौ, ना जषान्तरे ।' इति--(मे० पृ० १६४ श्लोक. २०) । व्याडिस्तु नपुंसकलिङ्ग-

माचष्टे । भट्टिकाव्ये पुस्त्वमपि दृश्यते । 'निरस्तोदग्रधाराग्र कुलिशो मम वक्षसि । अभिन्नं शतधात्मान मन्यते बलिन बली ।' इति च—(दु० लि० पृ० ३७ प० १४-५) । कर्कश, कर्कशम् = काशमर्द, इक्षु, काम्पिल्यश्च । 'कर्कश काशमर्देक्षुकाम्पिल्येष्वप्यसौ पुमान् ।' इति—(मे० पृ० १६३ श्लोक १८) । कोश., कोशम् = हिरण्यम्, धनम्, अर्थसघात, शब्दादिसंग्रहश्च । 'कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके । जातिकोशेऽर्थसघाते पेश्या शब्दादिसग्रहे ।' इति—(मे० पृ० १६२ श्लोक ६) । दिव्ये शपथे, शब्दादिसग्रहेऽमरादौ । आकाश, आकाशम् = नभ । 'वा तु पुंस्याकाशविहायसी ।' इति—(अम० ना० लिं० पृ० २९ श्लोक २) । 'मेघवर्त्म चाकाशमस्त्रियाम् ।' इति—(वै० पृ० १७ श्लोक २) । काश, काशम् = कुश, तृणभेद, इक्षुगन्धा, पोटगल । "कास" इति लोके । 'अथो काशमस्त्रियाम् ।' इति—(अम० ना० लिं० पृ० १८३ श्लोक: १६२)। 'काशी वाराणसीपुरे । न स्त्रिया तृणभेदे स्यात्' इति—(मे० पृ० १६२ श्लोक ३)। 'काशस्तृणे रोगभेदे' इति—(अने० स० पृ० ४४ श्लोक: ५५७) । 'काशी काशश्च तृणवाचक.' इति शभेद । कणिश, कणिशम् = धान्यमञ्जरी । "बाली" "बाल" इति च लोके । 'कणिश धान्यमञ्जरी ।' इति—(वै० पृ० १२८ श्लोक ६४) । 'पुंस्यपि ।' सस्यस्य मञ्जरी निर्गतनूतनशिर: कणिशम् । कणा. सन्त्यस्य कणिशम् । 'कणिशो धान्यशीर्षके ।' इति रत्नकोश.' इति—(अम० स० व्या० पृ० ३०८ स्त० २ प० १०-१) । अङ्कुश, अङ्कुशम् = सृणि, गजवारणम् । 'अङ्कुशोऽस्त्री, सृणि· स्त्रियाम् ।' इति—(अम० ना० लिं० पृ० २७९ श्लोक ४१) । शेष, शेषम् = उपयुक्तेतरम्, अवशिष्ठम् । "बचा हुआ" इति लोके । 'शेषो नाऽनन्तसीरिणोः । उपयुक्ततरे त्वस्त्री,' इति—(त्रि० शे० पृ० ३७९ श्लोक ४४१) । 'शेष· सङ्कर्षणे वधे । अनन्ते ना, प्रसादेन स्वर्निर्मल्यापर्णे स्त्रियाम् । उपयुक्ततरे न स्त्री' इति च—(मे० पृ० १६७ श्लोक. २८) । वेष., वेषम् = वेश·, प्रसाधनम्, अलङ्काररचनाकृतशोभा । "श्रृङ्गार" "सजावट" इति वा लोके । 'आकल्पवेषो नेपथ्यं प्रतिकर्म प्रसाधनम् ॥' इति—(अम० ना० लिं० पृ० २३७ श्लोक. ९९) । 'तालव्यशान्तोऽपि' । 'वेशो वेषश्च कथित.' इति—(श० भे० प्र० पृ० ४ श्लोक १७) । 'वेशो वेश्यागृहे गृहे । नेपथ्ये च' इति च—(मे० पृ० १६३ श्लोक १४) । उष्णीष., उष्णीषम् = शिरोवेष्ट, चोलोण्डुकः, शिरोवेष्टनम् । "पगडी" इति लोके । किरीट, लक्षणान्तर च । 'शिरसि सिगुष्णीषमस्त्री स्यात्' इति—(वै० पृ० १६८ श्लोक १२४) । 'उष्णीष तु शिरोवेष्टे किरीटे लक्षणान्तरे ।' इति—(मे० पृ० १६७ श्लोक ३२) । अम्बरीष, अम्बरीषम् = भ्राष्ट्र, भर्जनम् । "कड़ाह" इति लोके । नृपान्तरे च । 'भ्राष्ट्र· पुंस्य,–म्बरीषोऽस्त्री' इति । 'अम्बरीष रणे वर्षे तृणे, नाऽर्ककिशोरयो. ।' इति च—(वै० पृ० २७७ श्लोक: ३) । 'अम्बरीष रणे भ्राष्ट्रे क्लीबं, पुंसि नृपान्तरे ॥ नरकस्य प्रभेदे च किशोरे भास्करेऽपि च ।' इति च—(मे० पृ० १६९ श्लोक ४८-९) । विष., विषम् = क्ष्वेड:, शृङ्गादिद्रव्यविशेष, गरलम् । "जहर" इति लोके । जलं च । 'विषमप्सु च ।' इति—(अम० ना० लिं०

पृ० ४३६ श्लोक॰ २२३) । 'विष तु गरले तोये' इति—(वि० प्र० पृ० १७१ श्लोकः २) । 'विष जलेऽतिविषायां स्त्रिया, क्ष्वेडे तु न स्त्रियाम् ।' इति च—(मे० प० १६७ श्लोक २५) । 'गरले विषमम्भसि च, स्त्रियामतिविषायाम्', इत्यूष्मविवेकान्मूर्धन्यान्तम् । 'पुंसि क्लीबे च' इति त्रिषेणापि सम्बध्यते—इति केचित्—(अम० सु० व्या० पृ० ९० स्तं० १ प० ३७-८-९) । रोहिषः, रौहिष, रोहिषम, रौहिषम् = मृगविशेष , हरिणान्तरम्, मत्स्यभेद , कत्तृणम्, रक्तकत्तृण च । "रोहिस" इति ख्याततृणविशेष । 'रौहिष रक्तकत्तृणे, मत्स्यभेदे मृगे च ना ।' इति—(वै॰ पृ० २६५ श्लोक ७१) । 'रौहिष कत्तृणे क्लीब पुंसि स्याद्धरिणान्तरे ।' इति—(मे० पृ० १६८ श्लोक ४५) । 'कत्तृणे रौहिष क्लीब, पुलिङ्गो हरिणान्तरे ।' इति च मूर्धन्यान्ते रभस ' इति—(अम० सु० व्या० पृ० १८५ स्त० १ प० १०, ११) । माष , माषम् = परिमाणविशेष॰, व्रीहिप्रभेद॰, माषमलः, धान्यवीरश्च । "उडद" इति लोके । 'माषो व्रीह्यन्तरे मूर्खे मानत्वग्दोष-भेदयो ।' इति—(मे० पृ० १६७ श्लोक २१) । 'मूर्खे पुरीषलो माष.' इति—(त्रि० शे० पृ० ३०२ श्लोक ५) । 'मूर्खे माने फले माष' इति च—(त्रि० शे० पृ० ३७९ पृ० ४४०) । मेष , मेषम् = मेढ्र, मेण्ढक, मेण्ढूक । "मेढा" इति लोके । भैषज्यप्रभेद॰, राशि-विशेषश्च । 'मेषो राश्यन्तरे हुडे । भैषज्यभिदि' इति—(मे० पृ० १६७ श्लोकः २१) । प्रत्यूष॰, प्रत्यूषम = अहर्मुखम्, वसुश्च । 'प्रत्यूषोऽहर्मुखे वसौ ।' इति—(मे० पृ० १६८ श्लोकः ४०) । 'क्लीबेऽपि' । 'व्युष्ट विभातं प्रत्यूष सायात्रिकमहर्मुखम् ।' इति च— (वै० पृ० २२ श्लोक. ६८) । मांसादिरसविशेष । 'यूषोऽस्त्री, यु पुमान् रसे ।' इति—(वै० पृ० १६७ श्लोक. १००) । कोष॰, कोषम् = धनसञ्चय. । "खजाना" इति लोके । साम्प्रतं तु "बैंक" इति नाम्ना प्रसिद्धः । शब्दादिसंग्रहश्च । 'कोश॰ कोष॰' इति—(श० भे० प्र० पृ० ४ श्लोक १६) । 'कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके । जातिकोषे (शे)ऽर्थसघाते पेश्यां शब्दादिसंग्रहे ।' इति च—(मे० पृ० १६२ श्लोकः ६) । करीषः, करीषम्—गोमयाग्नि. । 'शुष्कगोमयसघात' इत्येके । 'तत्तु (गोमय) शुष्कं करीषोऽस्त्री' इति—(अम० ना० लि० पृ० ३२० श्लोकः ५१) । 'दोहल तु करीषोऽस्त्री' इति च—(वै० पृ० ७० श्लोकः ६१) । कर्ष., कर्षम् = मानप्रभेद., पलचतुर्थो भाग: । 'ते षोडशाक्षः कर्षोऽस्त्री' इति—(अम० ना० लि० पृ० ३३० श्लोक. ८६) । 'कर्षो ना कर्षणे, मानप्रभेदे पुन्नपुमकम् ।' इति च—(मे० पृ० १६६ श्लोक॰ ८) । वर्ष , वर्षम् = सँवत्सरः, भारतादि , जम्बूद्वीप , वृष्टि., वोलश्च । 'स्याद् वृष्टौ लोकधात्वशे वत्सरे वर्षमस्त्रियाम् ।' इति—(अम० ना० लि० पृ० ४३६ श्लोकः २२४) । 'वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि' इति—(मे० पृ० १६७ श्लोकः २४) । 'अथ वृष्टिर्वर्षमस्त्री केचिदिच्छन्ति वर्षणम् ।' इति शब्दार्णवः' इति—(अम० सु० व्या० पृ० ३३ स्त० २ प० १७-८) । 'पुन्नपुंसकयोर्वर्षं जम्बूद्वीपाब्दवृष्टिषु ।'

इति च रुद्र.' इति—(अम० सु० व्या० पृ० ११२ स्त० २ पं० १०-१) । आमिष , आमिषम् = मांसम्, भोग्यवस्तु, सम्भोग , उत्कोचश्च । 'आमिषं पुन्नपुंसकम् । भोग्यवस्तुनिमम्भोगेऽप्युत्कोचे पललेऽपि च ।' इति-(मे० पृ० १६७ श्लोक ३१) । रस , रसम् = मधुरादि , शृङ्गारादि , विषम्, वीर्य्यम, रागश्च । 'मांसे द्रवे चेक्षुरसे पारदे मधुरादिषु । जले रागे (बालरोगे) विषे नीरे रसो नवसु वक्ष्यते ।' इति—(भा० प्र० पृ० ३८५ श्लोक ४) । 'रसो सूते विषे बले । स्त्री रास्नाशल्लकीपाठाद्राक्षामूर्वामृदीषु च ।' इति—(शि० को० पृ० ४८ श्लोक ५२६, ५२७) । 'रस तु पारदे बोले, रस पारदचर्मणो ।' इति च—(रा० नि० पृ० ४२५ श्लोक ५२) । बुस , बुष , बुसम्, बुषम् = पलालादिक्षोद , कडङ्गर । ''भूस'' भूसा'' इति वा लोके । 'बुस दन्त्यमिति-धातुप्रदीप । 'बुषवेषतुषाग्तोषा ' इति पभेदान्मूर्धन्यान्तमपि । 'कडङ्गरो बुस क्लीबे' इति—(अम० ना० लि० पृ० ३०९ श्लोक २२) । 'छिन्न दधि बुस रूक्ष खल सेव्य च निशरे ।' इति । ( दधिविशेष ) 'पुस्यपि ।' 'कडङ्गरो बुस ' इति च—(वै० पृ० १२८ श्लोकः ६४) । हरदत्तस्तु 'कडङ्कर ' इति प्राह । इक्कस , इक्कसम् =

चिक्कस, चिक्कसम् = यवान्तविशेष , यवचूर्णम् । 'चिक्कसो यवचूर्णके ।' इति—(वै० पृ० १६४ श्लोक ६८) । 'यवक्षोदे तु चिक्कस ।' इति—(अभि० सं० अभि० चि० पृ० २० श्लोकः ४०२) । कर्पास, कर्पासम् = तूलकारणम्, वस्त्रयोनिभेद , तूलफलः, तपनी, आच्छादनफल । ''कपास'' ''रुई'' इति च लोके । 'कर्पासस्तु बादर स्यात्पिचव्य-स्तूलक पिचु ॥' इति—(अभि० सं० अभि० चि० पृ० ४५ श्लोक ११३९) । 'तूल पिचु पिचु तूलम्' इति च—(त्रि० शे० पृ० ३०५ श्लोक ११) । आस, आसम् = धनु., चाप । ''धनुस'' इति लोके । 'अस्त्रियौ चापधनुषावासेष्वासौ धनुर्द्रुणम् ।' इति—(वै० पृ० ११८ श्लोक १७२) । दिवस, दिवसम् = दिनम् । 'वा तु क्लीबे दिवसवासरौ ।' इति—(अम० ना० लि० पृ० ४४ श्लोक २) । अवतस, अवतसम् = शेखरम्, शिरोभूषणम् । ''मुकुट'' ''पगड़ी'' इति वा लोके । कर्णभूषणं च । 'अवतसो न स्त्रियां स्यात्कर्णपूरे च शेखरे ।' इति—(मे० पृ० १७३ श्लोक ४८) । वीतस , वीतसम् = मृगाणा पक्षिणामपि बन्धनोपाय , मृगपक्षि-णाबन्धनोपकरणम् । ''जाल'' ''पाश'' इति च लोके । 'वीतसस्तूपकरणं बन्धने मृगपक्षिणाम् ।' इति—(अम० ना० लि० पृ० ३४६ श्लोक २६) । 'वितस ' इत्यपि । 'वितस. पक्षिबन्धनम् ।' इति—(वै० पृ० १३९ श्लोक ४१) । मास , मासम् = पिशितम् । ''गोश्त'' इति लोके । 'पिशित पलल मास क्रव्यसामिषमुद्यसम् ।' इति—(हा० व० पृ० ३९९ श्लोक. ५५) । पनस, पनसम् = फलवृक्षविशेष., कण्टकिफल । ''कटहल'' ''फनस'' इति च लोके । 'पनस कण्टकिफले कण्टके वनरान्तरे । स्त्रिया रोगप्रभेदे, स्यात्' इति—(मे० पृ० १७२ श्लोकः २७) । उपवास , उपवासम् = भोजनादेर्विच्छेद , उपवस्तम्, अहोरात्रभोजनाभाव । ''व्रत'' ''कड़ाका''

"निराहार" इति च लोके। 'औपवस्त तूपवास ।' इति—(अम० ना० लि० पृ० २६१ श्लोक ३८)। निर्यास, निर्यासम् = वृक्षादेर्निस्यन्द, वृक्षद्रव । "गोद" "सार" इति वा लोके"। 'निर्यासो वेष्टकस्तथा।' इति—(प० र० मा० पृ० ३९ प० २६)। 'निर्यासो लसिका काण्ड-सत्त्वसाराभिधानकम् ।' इति च—(प० मु० व० पृ० ४८ प० ७)। मास, मासम् = काल-परिमाणविशेष, पक्षद्वयात्मक काल । 'मास पक्षद्वयोर्मत ।' इति—(श० र० स० पृ० ३३५ श्लोक ११)। 'मासस्तु तावुभौ'॥' इति च—(अम० ना० लि० पृ० ४७ श्लोक १२)। तौ उभौ शुक्लकृष्णौ। चमस., चमसम् = यज्ञपात्रविशेप । 'चमसो यज्ञपात्रस्य भेदोऽस्त्री, पिष्टके स्त्रियाम् ।' इति—(मे० पृ० १७१ श्लोक २१)। अस, असम् = शरीरैकदेश, स्कन्धः। "कधा" इति लोके। 'स्कन्धो दोश्शिखरोंऽसो स्त्री' इति—(वै० पृ० १७८ श्लोक ७१)। कस, कसम् = लोहविशेप, तैजसद्रव्यम्, ताम्ररङ्गमिश्रितधातुविशेष, कास्यम। "कासा" "कासी" इति वा लोके। परिमाणविशेष, आढकपरिमाण, मान च। 'कसोऽस्त्री तैजसद्रव्ये कास्ये मानेऽसुरे (नृपान्तरे) तु ना।' इति—(मे० पृ० १७० श्लोक २)। स्नेह, स्नेहम् = द्रव, तैलादिरसद्रव्यम्, हार्दम्, सौहार्दम्, सौहृदयम्, प्रेम च। 'स्नेहोऽस्त्री प्रेम सौहार्दम्' इति। 'स्नेहोऽस्त्री पिच्छिले रसे' इति। 'स्नेहोऽस्त्री द्रवहार्दयो ।' इति च—(वै० पृ० २३८ श्लोक ६६)। बर्ह, वर्हम् = मयूरपिच्छम्, दल च। 'बर्हं पिच्छे दलेऽस्त्रियाम् ।' इति—(मे० पृ० १७५ श्लोक ६)। गृह, गृहम् = वास, वेश्म, गृहम्। "घर" इति लोके। कलत्र च। "औरत" इति लोके। 'गृह गृहाश्च पुर्भूम्नि कलत्रेऽपि च सद्मनि।' इति—(मे० पृ० १७५ श्लोक. ५)। केचित्तु–गृहिण्येव गृहमित्याहु –'न गृह गृहमित्याहुर्गृहिणी गृहमुच्यते। तया हि सहित सर्वान् पुरुषार्थान् समश्नुते।' इति—(श० चि० पृ० ८२८ स्त० १ प० १८ त. २० या०)। गेह, गेहम् = इष्टकादिरचित वासस्थानम्, मन्दिरम्, सद्मम्, वेश्म। "घर" इति लोके। 'गेहमस्त्री, शालासभे स्त्रियाम् ।' इति वाचस्पति' इति—(अम० सु० व्या० पृ० ११८ स्त० १ प० ५)। 'न नोदवसित, न स्त्री गेह, पुभूम्नि वा गृहम् ।' इति च—(वै० पृ० १६० श्लोक १९)। तथा च प्रयोग—'कालागुरुप्रततधूपवहाश्च गेहा ।' इति–(द्वि० लिं० पृ० ३५-६ प० २१,१)। लोह, लोहम् = अय प्रभृतिद्रव्यविशेष, कालायसम्। 'लोहोऽस्त्री शस्त्रके लोहे जोङ्गके सर्वतैजसे ।' इति—(मे० पृ० १७५ श्लोक. ८)। पुण्याहः, पुण्याहम् = सुदिनम्, शोभनदिवस, मङ्गल च। 'पुण्याहमह्नि पुण्योऽश ' इति—(वै० पृ० २२ श्लोक ६७)। देह, देहम = शरीरम्। 'कायो देह क्लीबपुसो:' इति–(अम० ना० लि० पृ० २२६ श्लोक. ७१) 'देह: कलेवरे' इति च—(श० र० स० पृ० ३४१ पं० ३)। पटह, पटहम् = वाद्यविशेषः, आनक.। 'पटहो ना समारम्भे, आनके पुन्नपुंसकम् ।' इति—(मे० पृ० १७६ श्लोक १९)। तनूरुह., तनूरुहम् = पुत्र:, लोम, रोम। "रोंगटा" इति लोके। पक्षश्च। "पख" इति लोके। 'तनूरुहं मत लोम्नि, पतत्रेऽपि तथाविधम् ।' इति—(श० र० स० पृ० ३४४ प० ४)। 'तनूरुहस्तु पुत्रे गरुति

लोम्नि च ।' इति च--(अने० स० पृ० १३९ श्लोक ३५५) । लक्ष , लक्षम् = छाग', लक्ष्यम्, शरव्य च । "वेध" "निशाना" "ध्येय" इति च लोके । 'लक्ष तु लक्षण लक्ष्यमभिसन्धानमासिकम् । वेध्य शरव्य न नरि' इति । 'पुस्यपि ।' 'छागे तु करुणो लक्षो मल्लिका कुसुमप्रिय ।' इति च—(वै० पृ० ४७ श्लोक ३५) । करुण = "करणा नीवू" इति प्रसिद्धो वृक्षविशेष', करुणरसश्च । यथा—'एको रसः करुण एव · · · ।' इति भवभूति ' इति ॥

अथ साम्प्रतमिकारान्तमुकारान्ताश्च दो.शब्दसहिताश् पुन्नपुसकलिङ्गवाचकशब्दानाह हेम —(अभि० स० लि० पृ० ८ श्लोक १२१-२) ।

'··· ··· अररि–स्थाणु–कमण्डलूनि ।
चाटु–श्चटु–र्जन्तु कशिप्व–णु–स्तथा
जीवातु—कुस्तुम्बुरु—जानु—सानु ॥३५॥
कम्बु शङ्कु–र्दार्व–गुरु–वास्तु–पलाण्डु
हिङ्गुः शिग्रु–र्दो–स्तितउ. सीधु' ··· ॥

अस्य व्याख्या—

अररीति । कम्बुरिति च । इहारर्य्यादा इतरेतरयोगो द्वन्द्व । जीवात्वादो दार्वादो च समाहारो द्वन्द्वः । एतेऽरर्य्यादिय· सीध्वन्ताः शब्दा पुन्नपुसकलिङ्गा· स्यु· । अररि , अररि = कपाटम्, कवाटम् । "किंवाड" इति लोके । 'कपाटश्च कवाटश्च त्रिषु, स्यादररं न ना ।' इति वाचस्पति ' इति—(अम० सु० व्या० पृ० १२२ स्त० २ प० १६) । 'अरर छदकपाटयो ॥' इति—(मे० पृ० १३० श्लोक· ११०) । 'अररिः' इदन्तोऽपि । 'अररं पुन. । कपाटोऽररि कवाट ' इति च—(अभि० सं० अभि० चि० पृ० ३९ श्लोक १००६) । तथा च कथिताभ्युदये—'प्रेयन्तेऽमी परमररयो हर्म्यवातायनानाम् ।' इति मुकुट.' इति--(अम० सु० व्या० टि० पृ० १२२ स्त० २ पं० ४०-१) । स्थाणु', स्थाणु = ध्रुव , शङ्कु , शाखापत्रादिरहिततरु , छिन्नद्रुमशिर ऊर्ध्वकाष्ठमेव । 'स्थाणु कीले हरे पुमान् । अस्त्री ध्रुवे' इति--(मे० पृ० ४७ श्लोक. ३२) । 'स्थाणुर्वा ना, ध्रुव शङ्कु ' इति च—(अम० ना० लिं० पृ० १२९ श्लोकः ८) । कमण्डलु', कमण्डलु = पात्रविशेष , करकम्, ऋषिपात्रम् । 'अस्त्री कमण्डलुः, कुण्डी' इति—(अम० ना० लिं० पृ० २६४ श्लोक· ४६) । 'कमण्डलु स्यात्करके न स्त्री, ना प्लक्षपादपे ।' इति—(मे० पृ० १५६ श्लोक. १५१) । चाटु , चाटु = चटु , प्रियवाक्यम्, प्रियप्रायम् । 'चटु चाटु प्रिये वाक्ये चाटुकारे, चटु· पुमान् । व्रतिनामासने चापि' इति—(श० र० स० पृ० ८४ पं० १६) । 'चटुश्चाटु ' इति च—(श० भे० प्र० पृ० ४ श्लोक १२) ।

चटु, चटु = प्रियवाक्यम्, उदर च। 'चटुश्चाटौ पिचिण्डे च व्रतिनामासने पुमान्।' इति--(मे० पृ० ३८ श्लोक १३)। 'चटुश्चाटुश्च राजादिस्तुतौ पशुपिचिण्डके।' इति--(वै० पृ० २१५ श्लोक २३)। 'देहांशे वर्णने चटु।' इति--(त्रि० शे० पृ० ३२७ श्लोक ९६)। तत्रैव क्लीबलिङ्गोऽपि। 'प्रियवाक् चटुचाटुनी।' इति च--(त्रि० शे० पृ० ३११ श्लोक १६)। जन्तु, जन्तु = प्राणी, जननशील। 'जन्तुर्जन्यमात्रे' इति--(श० र० स० पृ० १२६ प० १६)। कशिपु, कशिपु = शय्या, भक्तम्, भोज्यम्, आच्छादनम्, वस्त्रम्, एकोक्तया भक्ताच्छादने, भोज्यवस्त्रे च। 'अस्त्री कशिपु शय्यायां वस्त्रेऽन्ते तद्द्वयेऽपि च।' इति--(वै० पृ० २५८ श्लोक २०)। 'कशिपु त्वन्नमाच्छादन द्वयम्॥' इति--(अम० ना० लि० पृ० ४१६ श्लोक १३०)। 'एकोक्तया कशिपुर्भक्ताच्छादने च द्वयो पृथक्।' इति च--(वि० प्र० पृ० १०५ श्लोक १८)। अणु, अणु = व्रीहिविशेष। "चीणा" इति लोके। लवणविशेषश्च। 'अणुव्रीहिविशेषे स्यात्पुंसि, सूक्ष्मेऽभिधेयवत्।' इति--(मे० पृ० ४५ श्लोक २)। 'क्लीबेऽपि'। 'भोजनीय कटकटमणु प्रवर वारिजे।' इति च--(वै० पृ० १३२ श्लोक ११९)। जीवातु, जीवातु = भक्तम्, अन्नम्, जीवितम्, प्राणनम्, जीवनौषधम्, मृतसञ्जीवनौषध च। 'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे।' इति--(मे० पृ० ६२ श्लोक ११२)। कुस्तुम्बुरुः, कुस्तुम्बुरु = धन्याकम्। "धनियाँ" इति लोके। 'कुस्तुम्बुरु धनीयकम्।' इति रभस.' इति--(अम० सु० व्या० पृ० ३१५ स्तं० १ प० ३७)। 'पुंस्यपि।' कुस्तुम्बुरुश्चावलिका' इति च--(रा० नि० पृ० ८२ श्लोक. ९७)। जानु, जानु = जानूरुसन्धिः, अष्ठीवान्। "घुटनू" इति लोके। 'जानूरुपर्वाष्ठीवदस्त्रियाम्।' इति--(अम० ना० लिं० पृ० २२७ श्लोक ७२)। 'अस्त्रियाम्' इति त्रिभि. सम्बध्यते। (समस्त्वात्)। सानु, सानु = पर्वतैकदेश, पर्वतसमभूभाग., वन च। 'सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रकोविदे।' इति--(मे० पृ० ८४ श्लोक २२)। 'स्नु· प्रस्थः सानुरस्त्रियौ' इति--(अम० ना० लिं० पृ० १२५ श्लोक. ५)। 'सानुः श्रृङ्गे बुधे मार्गे वात्यायां पल्लवे वने।' इति च--(वि० प्र० पृ० ८६ श्लोक १९)। कम्बु, कम्बु = शख· 'कम्बु शखेऽस्त्रियां, पुंसि शम्बूके वलये गजे।' इति--(मे० पृ० १०४ श्लोक. २)। शङ्कु, शङ्कु = अप्राणिगोचर, कील·, संख्याविशेषश्च। शतादिकत्वादस्य नपुंसकत्व प्राप्तम्। कीलार्थस्य उदन्तत्वात् पुंस्त्व सिद्धम्। 'अस्त्री शङ्कुरप्राणिगोचर.।' इति--(वै० पृ० २९१ श्लोक ३०)। दारु, दारु = 'पुन्नपुंसकयोर्दारु.' इति--(त्रि० शे० पृ० ३८८ श्लोक ८)। 'दारु स्यात्पित्तले काष्ठे देवदारौ नपुंसकम्।' इति--(मे० पृ० १२६ श्लोक. ४७)। अगुरु., अगुरु = कालागुरु। 'कालागुर्वगुरु' इति--(अम० ना० लिं० पृ० २४६ श्लोक: १२७)। 'कालागुर्वप्यगुरूच्यते'--इति सुभूतिः' इति--(अम० सु० व्या० पृ० २४६ स्तं० १ पं० ३१२)।' अगुरु प्रवरं लोहं क्रिमिजग्धमनार्यजम्।' इति शाश्वत:' इति--(अम०

सु० व्या० पृ० २४६ स्तं० १ प० २८) । 'कुस्तुम्बुरुक धान्याकमगुरु वा पुंसि लघुनाम च ।' इति बोपालित ' इति—(अम० सु० व्या० पृ० २४६ स्त० १ प० १६) । 'कर्पूरागुरुकस्तूरीकक्कोल-घुसृणानि च । एकीकृतमिद सर्वं यक्षकर्दम इष्यते ।' इति व्याडि ' इति—(अम० सु० व्या० पृ० २४६ स्त० १ प० ८, ९) । 'अगुरु इत्यपि ।' 'कुङ्कुमागुरुकस्तूरीकर्पूर चन्दन तथा । महासुगन्ध-मित्युक्त नामतो यक्षकर्दम ।' इति धन्वन्तरि ' इति—(रा० नि० पृ० ३०४ श्लोक ४५) । 'कर्पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दम ।' इति–(अम० ना० लि० पृ० २४८ श्लोक १३३) । 'अगुर्वगरु राजार्हम्' इति । 'अगुरुस्त्वगरौ लघौ । शिशिपायाम्' इति च—(अने० स० पृ० ९२ श्लोक ५५३) । वास्तु:, वास्तु =देवविशेष , गृहम्, गृहभूश्च । 'वेश्मभूर्वास्तुरस्त्रियाम् ।' इति—(अम० ना० लि० पृ० १२३ श्लोक. १९) । वेश्मभू = गृहरचनावच्छिन्नभूमि । 'वास्त्वस्त्री गृहभूपुर्य्यो-र्गृहे सीमसुरङ्गयो. ।' इति च—(वै० पृ० २३६ श्लोक. ८०) । पलाण्डु, पलाण्डु = सुकन्दक, मुखदूषण । "कादा" इति । 'प्याज" इति च लोके । 'पलाण्डुस्तु सुकन्दक. ।' इति—(अम० ना० लि० पृ० १७८ श्लोक १४७) । 'हिङ्गु, हिङ्गु = मूलविशेषस्य निर्यास, सूपधूपनम्, रामठम् । "हींग" इति लोके । 'बाह्लीक हिङ्गु रामठम् ।' इति—(अम० ना० लि० पृ० ३१६ श्लोक ४०) । 'पुंस्यपि ।' 'हिङ्गौ तु भूतनाशनम् ।' इति च—(अ० स० अभि० चि० प० पृ० ४ श्लोक. १०२) । शिग्रु, शिग्रु = शाकमात्रम्, शोभाञ्जनश्च । "सहेजँन" इति लोके । 'शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचका ।' इति—(अम० ना० लि० पृ० १३८ श्लोक. ३१) । दो, दो = भुज, बाहुः । "भुजा" इति । "बाँह" इति च लोके । 'दोर्नस्त्री, करयोणिर्ना' इति—(वै० पृ० १७८ श्लोक ७१) । 'दोर्दोषा च भुजो बाहु. पाणिर्हस्त· करस्तथा ।' इति—धनञ्जय.' इति—(अम० सु० व्या० पृ० २३० स्त० २ प० १०) । तितउ, तितउ = चालनी । "चलनी" इति लोके । 'चालनी तितउ पुमान् ।' इति—(अम० ना० लि० पृ० ३१० श्लोक २६) । 'न स्त्री तितउ चालनी' इति—(त्रि० शे० पृ० ३०२ श्लोक: ५) । यादवश्च—'चालन तितउ प्रोक्तम्' इति क्लीबकाण्डे रत्नकोश ' इति—(अम० सु० व्या० पृ० ३१० स्तं० १, २ पं० ४१-१) । 'क्षुद्रच्छिद्रशतोपेत चालन तितउ स्मृत ।' इति च कात्य । 'तितउः पुंसि क्लीबे च पृथगुच्चारणे द्वयो '। सामर्थ्यादि गुणो न,' इति गुणाभाव । सीधु, शीधु·, सीधु, शीधु = इक्षुरस·, मद्य च । 'मैरेयमासव· शीधु ' इति—(अम० ना० लि० पृ० ३५१ श्लोक ४१) । 'शीधु कश्यमिरा कल्या' इति । 'पक्वैरिक्षुरसैरस्त्री शीधु पक्वरस· शिव ।' इति च—(वै० पृ० १३९ श्लोक: ४७) । 'पुन्नपुंसकयोर्दारुजीवातुस्थाणुशीधव ।' इति—(त्रि० शे० पृ० ३८८ श्लोक ८) । यद्यपि 'शीधुरिक्षुरसै· पक्वैरपक्वैरासवो भवेत् । मैरेय धातकीपुष्पगुडधानाम्बुसहितम् ।' इति च (प० र० मा० पृ० ६९ प० ६, ७) ।

अथेदानी भूमप्रभृतीन् महिमपर्य्यन्तान् व्यञ्जनान्तान् पुन्नपुसकलिङ्गवाचकशब्दानाह हेम:—(अभि॰ स॰ लि॰ पृ॰ ८ श्लोक॰ १२२) ।

... .. अथ भूमा ।

वेम प्रेम ब्रह्म गरु–ल्लोम–विहायः
कर्मा–ऽष्ठीव–त्पक्ष्म धनु–र्नाम–महिम्नी ॥३६॥इति ॥

अस्य व्याख्या—

अथेति । इह नामादौ इतरेतरयोगो द्वन्द्वः । एते भूमादयो महिमान्ता शब्दा पुन्नपुसकलिगा भवन्ति । भूमा, भूम=बहुत्वम् । भूमा, महान्, निरतिशयम्, बहु' इति पर्याया । इति भाष्यम् । शब्दोऽय पुलिङ्गवाचक किन्तु द्विस्वरमन्नन्तत्वात् क्लीबलिङ्गोऽपि । वेमा, वेम=वस्त्रव्यूतिदण्ड, वायदण्ड, वापदण्ड । "राछ" इति लोके। 'पुसि वेमा वाप(य)-दण्ड ' इति--(अम॰ ना॰ लि॰ पृ॰ ३४६ श्लोक २८) । 'वेमा ना वानदण्डक ।' इति—(वै॰ पृ॰ १३६ श्लोक ८) । 'वेम इत्यपि ।' 'वायदण्ड पुसि वेमा, वेमो ना, वेम न द्वयो ।' इति च शब्दरत्नावली' इति--(श॰ चि॰ पृ॰ ४३९ स्त॰ १ प॰ १३-४) । प्रेमा, प्रेम=प्रियत्वम, स्नेह, नर्म च । 'प्रेमा ना वासवे वाते, प्रेमाऽस्त्री स्नेहनर्म्मणो ।' इति—(मे॰ पृ॰ ८९ श्लोक ९४) । । ब्रह्मा, ब्रह्म=प्रजापति, ब्रह्मा, तत्त्वम्, तप, वेदश्च । 'वेदस्तत्त्व तपो ब्रह्म, ब्रह्मा विप्र प्रजापति ।' इति—(अम॰ ना॰ लि॰ पृ॰ ४१६ श्लोक: ११४) । 'ब्रह्म तत्त्वतपोवेदे न द्वयो, पुसि वेधसि । ऋत्विग्यागभिदोर्विप्रे' इति--(मे॰ पृ॰ ८६ श्लोक ९६) । गरुत्, गरुत्=पक्ष । "पख" इति लोके । सुवर्णं च । तकारान्तोऽयं शब्द । 'छद पक्षो गरुद्वाजश्छदनं च तनूरुहम् ।' इति—(वै॰ पृ॰ ३० श्लोक ४६) । लोमा, लोम=तनूरुहम् । "रोवां" "रोगटा" इति च लोके । 'तनूरुह रोम लोम' इति—(अम॰ ना॰ लि॰ पृ॰ २३७ श्लोक ९९) । विहाया, विहाय = आकाशम् । 'वा तु पुस्याकाशविहायसी ।' इति--(अम॰ ना॰ लि॰ पृ॰ २९ श्लोक. २) । 'विदुर्विहायसं व्योम पक्षिणश्च विहायस ।' इति--(अने॰ समु॰ पृ॰ ३३ श्लोक ३६५) । 'विहाया शकुनौ पुंसि' गगने पुन्नपुंसकम् ।' इति--(मे॰ पृ॰ १७४ श्लोक ६३) । अयं कर्मा, इद कर्म=क्रिया, व्यापारम्, साधनम्, यजन च । 'क्रियायजनयोः कर्म' इति--(वै॰ पृ॰ २२४ श्लोक. ४) ।

---

पाणिनीयेऽपि--(१) (ब्रह्मन् पुसि च) ॥ एतत्पुंसि । चात्नपुसके स्यात् । अयं— ब्रह्मा, इद ब्रह्म = प्रजापति:, वेधाः । सि॰ कौ॰ पृ॰ ४०३ सू॰ १५१ ।

'कर्माऽस्त्री व्याप्यक्रिययो ।' इति च--(मे० पृ० ८६ श्लोक ४७)। अष्ठीवान्, अष्ठीवत्= जानु। "घुटनू" इति लोके। मत्वन्तोऽय शब्द । 'जानूरुपर्वाष्ठीवदस्त्रियाम् ।' इति--(अम० ना० लिं० पृ० २२७ श्लोक ७२)। पक्ष्मा, पक्ष्म=चक्षूरोम। 'चक्षूरोमाणि पक्ष्माणि' इति--(प० र० मा० पृ० ४२ प० २०)। 'पक्ष्म पक्षे च सूत्रांशे किञ्जल्के नेत्ररोमणि ।' इति--(श० र० स० पृ० २२४ प० १३)। धनु, धनुः=शरासनम्, चापः। "धनुस" इति लोके। 'अथाऽस्त्रियौ। धनुश्चापौ' इति--(अम० ना० लिं० पृ० २९० श्लोक: ८३)। 'धनु पियाले ना, न स्त्री राशिभेदे शरासने। धनुर्धरे त्रिषु' इति सान्तेषु--(मे० पृ० १७१ श्लोक. २६)। नैषधे तूदन्तोऽपि दृश्यते। 'धनु पुमान् पियालद्रौ राशिभेदे शरासने ।' इति नान्तेषु--(मे० पृ० ८३ श्लोक ११)। नामा, नाम=सञ्ज्ञा, अभिधानम्। 'नामधेय च नाम च ।' इति--(अम० ना० लिं० पृ० ६६ श्लोक ८)। महिमा, महिम=महत्त्वम्। "बड़ाई" "कीर्ति" इति लोके। 'चूतप्रयुतैरावतवसन्तककुदौषधमधुमहिमानि।" इति--(दु० लिं० पृ० ३१ श्लोक: ६२)।

अथाधुना क्रमरहितान् मालकादीन् पुन्नपुंसकलिङ्गवाचकशब्दानाह दुर्ग.--(दु० लिं० पृ० २९ त: ३८ या० श्लोक ५८ त: ७९ या०)।

मालक–सरका–ऽनीकाः पुस्तक–मस्तक–चरक–चषक–निष्काः।
पिण्याक–शूक–मोदक–मञ्चक–नट–पङ्क–कल्कानि ॥

अस्य व्याख्या—

मालकेति। मालकादौ पुस्तकादौ पिण्याकादौ च इतरेतरयोगो द्वन्द्वः। एते मालकादय. शब्दाः पुन्नपुंसकलिङ्गाः स्यु । वक्ष्यते "उभयलिङ्गा इति समाप्ता ।" इति, तेनायं सम्बन्धः सिद्धो भवति । तथा स्त्रीनपुंसकेष्वपि बोद्धव्यम् । एतेषा मालकादिशब्दाना व्याख्योदाहरणानि प्रागुक्तानि :

वल्मीक–शाक–शाटक–पिनाक–मूषिक–करण्डकं शुल्कम् ।
करक–नख–तण्डक–शकट–कर्पट–पातक–किरीट–पटाः ॥

अस्य व्याख्या—

वल्मीकेति। वल्मीकादौ करण्डकान्ते समाहारो द्वन्द्व । अपरार्द्धे तु इतरेतरयोगो द्वन्द्वः। एते वल्मीकादयः शब्दाः पुन्नपुंसकलिङ्गा. स्यु । शकटः, शकटम्=अन , बलीवर्दादिवाह्योद्वहनविशेषः। 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इति--(अम० ना० लिं० पृ० २८३

श्लोक: ५२)। प्रयोगश्च—'शकट: शाकिनी गावो यानमस्कदनं स्वनम्। अनूप पर्वतो राजा दुर्भिक्षे नववृत्तय।' इति—(अम० सु० व्या० पृ० २८३ स्त० १ प० ३०-१-२)। पट, शोभनवस्त्रम्, वस्त्रं च। 'सुचेलक पटोऽस्त्री' इति—(अम० ना० लिं० पृ० २४२ श्लोक. ११६)। 'पटोऽस्त्री कर्पट: शाट सिचयप्रोतलक्तका।' इति रभस' इति—(अम० सु० व्या० पृ० २४२ स्त० २ प० २८-९)। 'पटश्चित्रपटे वस्त्रेऽस्त्री, प्रियालद्रुमे पुमान्।' इति च—(मे० पृ० २५ श्लोक. १६)। शेष प्राग्वत्।

निकट–कट–कपट–कूटा भूषण–कुट–कुञ्ज–कुष्ठ–नड–मुष्का।
द्रोण—क्ष्वेडित—तीर्थ—प्रोथा—ऽष्टापद—कबन्धानि ॥

अस्य व्याख्या—

निकटेति। निकटादौ भूषणादौ द्रोणादौ च इतरेतरयोगो द्वन्द्व.। एते निकटादय. शब्दा. पुन्नपुंसकलिङ्गा. स्यु। कट, कटम्=आसनविशेष। ''चटाई'' इति लोके। 'कट किलिञ्ज' इति। 'क्लीबेऽपि।' 'विश्वभेषज सिहल कटम्।' इति च—(वै० पृ० १२९ श्लोक: ७५)। शे० प्रा०।

शृङ्गो-द्योग-तडाग-क्रकच ध्वज पुच्छ-कूर्च–कवचानि।
अर्बुद—यौवन—भुवनं सौधं सीधु व्रतं सक्तुः ॥

अस्य व्याख्या—

शृङ्गेति। शृङ्गादौ इतरेतरयोगो द्वन्द्व:। अपरार्द्धे तु अर्बुदादौ समाहारो द्वन्द्व। एते शृङ्गादय. शब्दा. पुन्नपुसकलिङ्गा· स्यु.। तडाग, तडागम्=जलाधारविशेष·। 'पद्माकर-स्तडागोऽस्त्री' इति—(अम० ना० लिं० पृ० १०३ श्लोक: २८)। 'तडागस्तु जलाधारविशेषे यन्त्रकूप(ट)के।' इति च—(मे० पृ० २४ श्लोक ३४)। 'तडाक.' इति कश्चित्। (तटाक:, तटाग.) इत्येके। सक्तु:, सक्तु=यवादिविकार·। 'चक्षुष्या सक्तव कणा:।' इति—(वै० पृ० १६४ श्लोक: ७०)। 'सक्तुश्चूर्णक आपूप्य.' इति च—(त्रि० शे० पृ० ३०३ श्लोक: १५)। शे० प्रा०।

घूत–प्रयुतै–रावत–वसन्त–ककुदौ–षध–मधु–महिमानि।
पुस्तं बुस्तं हस्तं वास्तु च मुस्तं–व्रजं रजतम् ॥

---

पाणिनीयेऽपि—(१) (सक्तुर्नपुंसके च)॥ अय नपुंसके। चात्पुसि स्यात्। अय सक्तु, इद सक्तु=भृष्टयवादिचूर्णकम्। सि० कौ० पृ० ३९९ सू० ५८।

अस्य व्याख्या—

यूतेति। यूतादा इतरेतरयोगो द्वन्द्व। एते यूतादयः शब्दाः पुन्नपुंसकलिङ्गाः स्युः। मधुः, मधु = मृद्वीकादिमद्यम्, मधूलम्। 'मधु मार्द्वीकमद्ययोः।' इति—(अम० ना० लि० पृ० ३५१ श्लोक ४१)। 'मधूल तु मधुर्न स्त्री' इति। 'क्षौद्रादौ तद्रसेऽप्यस्त्री, ना वसन्ते रसेऽसुरे। चैत्रे मधूके, क्ली त्वप्सु मद्ये पुष्परसे मधु।' इति च—(वै० पृ० २३५ श्लोक ६१)। मुस्तः, मुस्तम् = ओषधिविशेषः, अब्द। "मोथा" इति लोके। विषविशेषश्च। 'मेघाख्य मुस्तक मुस्तम्' इति—(प० मु० व० पृ० ४ प० १८)। 'मुस्त कुष्ठो मेषशृङ्गः' इति—(वै० पृ० १५० श्लोक २५)। 'कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्।' इति च—(अम० ना० लि० पृ० १८२ श्लोक १५९)। शेष प्राग्वत्।

कार्षापण–व्रण–स्थाणु–बाण–तृण–चरण–तोरण–रणानि।
शत–लोहित–घृत–वृत्तानि गूथ–यूथा–ऽयुतं मण्डम्॥

अस्य व्याख्या—

कार्षापणेति। कार्षापणादौ शतादौ चेतरेतरयोगो द्वन्द्वः। गूथादौ तु समाहारो द्वन्द्वः। एते कार्षापणादयः शब्दा पुन्नपुंसकलिङ्गा स्युः। स्थाणुः छिन्नशाखो वृक्ष। लोहित शोणितम्। गुणवचनस्य तु वाच्यलिङ्गता। लोहितो गौः, लोहिता शाटिः, लोहितं वस्त्रम्। घृत, घृतम् = आज्यम्। "घी" इति लोके। जल च। 'घृतमाज्ये जले क्लीब, प्रदीप्ते त्वभिधेयवत्।' इति—(मे० पृ० ५५ श्लोकः १७)। वृत्त, वृत्तम् = वृत्तं, शील, निस्तला च। निस्तला इति वर्तुलम्। शे० प्रा०।

खण्डं मुण्डं कुण्डं काण्डं दण्डं सुवर्ण–वर्णे च।
चन्दन-मोदन–मसनं विमान–धन–भवन–मुद्यानम्॥

अस्य व्याख्या—

खण्डमिति। सुवर्णादौ इतरेतरयोगो द्वन्द्व। विमानादौ तु समाहारो द्वन्द्वः। एते खण्डादयः शब्दाः पुन्नपुंसकलिङ्गाः स्युः। खण्ड = इक्षुविकारविशेष, शकल च। खण्डनक्रियावाचिनस्तु वाच्यलिङ्गता। खण्डो घटः, खण्डा घटी, खण्ड कुलम्। मुण्ड शिरः गुणवचनस्य तु द्रव्ये वर्तमानस्य वाच्यलिङ्गतैव। यथा–मुण्डनगुणयोगात् मुण्ड पुमान्, मुण्डा स्त्री, मुण्ड कुलम्। कुण्डः, कुण्डम् = जीवति भर्त्तरि परजात। अग्निहवनाधारविशेषश्च। 'अमृते (पत्यौ) जारजः कुण्ड' इति—(अम० ना० लि० पृ० २१४ श्लोकः ३६)। 'कुण्डमग्न्यालये मानभेदे देवजलाशये। कुण्डी कमण्डलौ, जारात्पतिवत्नीसुते पुमान्।' इति च—(मे० पृ० ४० श्लोकः ४)। कुण्डः, कुण्डी, कुण्डम् = भाजनविशेषः। स्त्रियां रूढः। पुन्नपुंसकयोः दुर्गः। शे० प्रा०।

निधनं पिधान–मभिधानं मानं दिन–खलीन–नालानि ।
पुलिनं नलिनं स्तेनं शयना–ऽऽसन–यान–निगडानि ॥

अस्य व्याख्या—

निधनमिति । दिनादौ शयनादौ चेतरेतरयोगो द्वन्द्व । एते निधनादय शब्दा पुन्नपुसकलिङ्गा स्यु. । नाल , नालम् = पद्मादीनां दण्ड., जलनिर्गमश्च । 'नाल नाला पद्मदण्डे' इति––(शि० को० पृ० ४० श्लोक ४४३) । 'नाल काण्डे मृणाल च, नाली शाककलम्बके ।' इति च––(अने० स० पृ० ४० श्लोक: ५०६) । शे० प्रा० ।

मण्डप–कुतप–द्वीपा दीप–विटप–शूर्प–जम्बु–बिम्बानि ।
आश्रम–सङ्क्रम–सङ्गम–हिम–कर्म–ब्रह्म–लोमानि ॥

अस्य व्याख्या—

मण्डपेति । मण्डपादौ दीपादा अपरार्द्धे तु आश्रमादौ चेतरेतरयोगो द्वन्द्व । एते मण्डपादय. शब्दा· पुन्नपुसकलिङ्गा. स्युः । जम्बु , जम्बु = वृक्षविशेष । 'अथ जम्बू. स्त्री, जम्बु जाम्बववम् ।' इति––(वै० पृ० ४६ श्लोक: २२) । बिम्ब , बिम्बम् = मण्डलम्, आकृतिश्च । 'विम्बोऽस्त्री, मण्डल त्रिषु ।' इति––(अम० ना० लि० पृ० ३५ श्लोक: १५)। 'बिम्बस्तु प्रतिबिम्बे, स्यान्मण्डले· पुन्नपुसकम् । बिम्बिकाया: फले क्लीब, कृकलासे पुन. पुमान् ।' इति–(मे० पृ० १०५ श्लोक· ७) । 'बिम्बोऽस्त्री मण्डलसमप्रतिमामुखलक्ष्मसु । प्रतिबिम्बे तत्प्रकृतौ, क्लीबे तु बिम्बिकाफले ।' इति च–(वै० पृ० २३४ श्लोक. ५५) । शे० प्रा० ।

गुल्मो–ऽर्मो–द्यम–कुट्टिम–दाडिम–मध्य–मलया–ऽम्बुज–क्षेमा: ।
चक्र—मरण्यं कुल्यं शल्यं गोमय—कषायौ च ॥

अस्य व्याख्या—

गुल्मेति । अर्मादौ अपरार्द्धे तु गोमयादौ चेतरेतरयोगो द्वन्द्वः । एते गुल्मादय. शब्दा: पुन्नपुंसकलिङ्गा. स्युः । दाडिम·, दाडिमम् = वृक्षविशेष , दाडिमवृक्षः । 'समौ करकदाडिमौ ।।' इति–(अम० ना० लि० पृ० १५० श्लोक. ६४) । 'दाडिमस्तु त्रिलिङ्ग , स्यादेलाया करके त्रिषु ।' इति–(मे० पृ० १११ श्लोक: ४४) । 'दाडिम्बोऽपि ।' 'दाडिम्बसारपिण्डीरस्वाद्वम्लशुकवल्लभा: ।' इति च रभस:' इति––(अम० सु० व्या० पृ० १५० स्त० १ प० ३२) । मध्य:, मध्यम् = अन्तरम् । 'बीच' इति लोके । देहमध्यभाग:, विलग्नम्, अवलग्नम्, मध्यमम् । 'मध्यम चावलग्नं च मध्योऽस्त्री' इति––(अम० ना० लिं० पृ० २३० श्लोक ७९)। 'मध्योऽवलग्नं विलग्नं मध्यम: ।' इति नाममाला'

इति—(अम० सु० व्या० पृ० २३० स्त० १ प० २९)। 'मध्य विलग्ने न स्त्री स्यान्न्यायेऽन्तरेऽधये त्रिषु।' इति—(मे० पृ० ११६ श्लोक ४४)। 'न्याय्यावलग्नयोर्मध्यमन्तरे चाधमे त्रिषु।' इति च रभस.' इति—(अम० सु० व्या० पृ० ४२५ स्त० १ पं० ८)। शे० प्रा०।

समय-कविय-वलया-ऽव्यय-दारु-प्रतिसर-युगन्धर-क्षीरम्।
सूत्रं छत्रं वक्त्रं वस्त्रं पत्रं पवित्रं च॥

अस्य व्याख्या—

समयेति। समयादौ समाहारो द्वन्द्व। एते समयादय शब्दा पुन्नपुसकलिङ्गाः स्युः। छत्र, छत्रम्=आतपत्रम्। "छाता" इति लोके। 'छत्र स्यादातपत्रम्' इति—(वै० पृ० १०५ श्लोक १६)। 'छत्र पुटोटजम्' इति च—(त्रि० शे० पृ० २९९ श्लोक ३२)। शे० प्रा०।

नेत्रं वज्रं वप्रं राष्ट्रं वासर–शरीर–तिमिराणि।
कुञ्जर–समरो–शीरा विहार–वारा–ऽन्धकाराणि॥

अस्य व्याख्या—

नेत्रमिति। वासरादा अपरार्द्धे तु कुञ्जरादौ विहारादौ चेतरेतरयोगो द्वन्द्व। एते नेत्रादयः शब्दाः पुन्नपुसकलिङ्गाः स्युः। शे० प्रा०।

अङ्गार–शिखर–तोमर–सहस्र–पार्श्वं शराव–गाण्डीवौ।
काशा–ऽऽकाश–कुशा–अङ्कुश–कोश–प्रग्रीव–पात्रीवाः॥

अस्य व्याख्या—

अङ्गारेति। अङ्गारादौ समाहारो द्वन्द्व। शरावादौ अपरार्द्धे काशादौ चेतरेतरयोगो द्वन्द्व.। एतेऽङ्गारादय शब्दा पुन्नपुसकलिङ्गा स्यु। शिखर, शिखरम्=अग्रम्, द्रुमाग्रम्, पर्वताग्रम्, पुलकाग्रं च। 'शिरोऽग्र शिखरं वा ना' इति। 'कूटोऽस्त्री शिखर शृङ्गम्' इति च—(अम० ना० लि० पृ० १२५ श्लोक ४)। 'अस्त्री' इति पूर्वोत्तराभ्यां सम्बध्यते। 'शिखरोऽस्त्री द्रुमाग्रे चाद्रिशृङ्गपुलकाग्रयो।' इति—(मे० पृ० १३९ श्लोक. २२६)। 'शिखरं पुलकाग्रयो। पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च। गिरिवृक्षाग्रकक्षासु' इति च—(अने० स० पृ० ९९ श्लोक ६४६)। तथा च प्रयोग—रोमाञ्चाग्रमात्रयोर्यथा—'रुचिरैः शिखरै. काम्या गृहस्त्री च मृगेक्षणा'। पक्वदाडिमबीजाभमाणिक्यखण्डे यथा—'तन्वी श्यामा शिखरदशना' इत्यनेकार्थकैरवाकरकौमुदी' इति—(अम० सु० व्या० टि० पृ० १२५ स्तं० २ प० २७-८-९)। कुश·, कुशम्=तृणविशेष, दर्भविशेषः, बर्हि। "कुशा" इति

लोके । 'कुशो रामसुते द्वीपे पापिष्ठे योक्त्रमत्तयो । कुशी फाले, कुशो दर्भे, कुशा वाल्गा, कुश जले ।' इति--(अने० स० पृ० ४४ श्लोक ५५८) । पात्रीव , पात्रीवम् = यज्ञोपकरण-पात्रभेद । 'यज्ञद्रव्य तु पात्रीव(य)म्' इति--(त्रि० शे० पृ० २९४ श्लोक ९) । कोशान्तरे तु 'पात्रीर.' इति दृश्यते । शे प्रा० ।

भावं दैवं ताण्डव–मथ–वल्कल–मूल–मुसल–कललानि ।
शील–फल–कमल–मङ्गल–कमण्डलु–बलो–पल–पलालम् ॥

अस्य व्याख्या—

भावमिति । वल्कलादा इतरेतरयोगो द्वन्द्व । अपरार्द्धे शीलादौ समाहारो द्वन्द्वः । एते भावादय शब्दा पुन्नपुसलिङ्गा स्यु । शे० प्रा० ।

कुण्डल–तमाल–तैलं शकल–मृणाल–तल–मल–चषालानि ।
शूल—प्रवाल—शम्बल—शाल–निगल–यूष–मेषाणि ॥

अस्य व्याख्या—

कुण्डलेति । कुण्डलादौ समाहारो द्वन्द्वः । शकलादौ इतरेतरयोगो द्वन्द्व । अपरार्द्धेऽपि शूलादा इतरेतरयोगो द्वन्द्व । एते कुण्डलादय शब्दा पुन्नपुसकलिङ्गा स्यु । मृणाल, मृणालम् = बिसम्, अब्जादीना मूलम् । 'तदङ्कुर' इत्येके । 'मृणाल नलदे क्लीब, पुन्नपुसकयोर्बिसे ।' इति मेदिनी । क्वचिन्मेदिनीपुस्तके तु 'स्त्रीनपुसकयो.' इत्युपलभ्यते । अपचयविवक्षाया गौरादित्वात् ङीषि 'मृणाली' इत्यपि । तथा च—'सान्द्र चन्दनमङ्गले वलयिता पाणौ मृणालीलता ।' इति राजशेखर--इति मुकुट' इति—(अम० सु० व्या० टि० पृ० १०८ स्तं० २ प० ३२) । 'अथास्त्रियाम् । मृणाल बिसम्' इति--(अम० ना० लि० पृ० १०८ श्लोक ४२) । 'मृणाले तु बिसं बिशम् ।' इति च द्विरूपकोश.' इति--(अम० सु० व्या० पृ० १०८ स्त० २ पं० ५, ६) । शे० प्रा० ।

कर्ष–करीषा–ऽऽमिष–विष–वर्षे–र्मर्षं च मास–मांसं च ।
कर्पास–दिवस–चिक्कस–कंसा–ऽस–रस–चमसै–र्जृम्भः ॥

अस्य व्याख्या

कर्षेति । एते माषं मासमांसं जृम्भश्च कर्षादिभि कर्पासादिभिश्च सह पुन्नपुसकलिङ्गा भवन्ति । जृम्भः, जृम्भम् = जृम्भणम् । 'जँमुआना'' इति लोके । 'जृम्भस्तु त्रिषु जृम्भणम् '

इति—(अम० ना० लि० पृ० ८५ श्लोक ३५) । 'जृम्भा विकासजृम्भणयोस्त्रिषु' इति च—(मे० पृ० १०६ श्लोक ४) । अदन्तभोपधत्वात्पुंलिङ्ग । 'जृम्भ नपुसके च ।' इति नपुसकलिङ्गोऽपि । शे० प्रा० ।

अवतंस–सानु–निर्यासान्यु–पवासा–ऽपराह्ण–गृह–गेहाः ।
दैवत—कुमुदा—ऽर्धर्चाः शतमानं वारबाणं च ॥

अस्य व्याख्या—

अवतसेति । अवतसादौ उपवासादा अपराह्णे तु दैवतादौ चेतरेतरयोगो द्वन्द्व । अवतसादीना व्याख्योदाहरणानि प्रागुक्तानि ।

जलजौ च शंख–पद्मौ भूतः प्रेते च सैन्धवो लवणे ।
उत्कर्षे सारो—ऽयं नै—तत्सारं त्वि–दं न्याय्ये ॥

अस्य व्याख्या—

जलजाविति । जलेऽम्बुनि जातौ उत्पन्नौ, शखश्च पद्मश्च शखपद्मौ कम्बुकमला उभयलिङ्गौ स्याताम् । निधिवचनावत्र नृलिङ्गौ एव । शख', शखम् । पद्म, पद्मम् । भूतशब्दः प्रेते पिशाचे उभयलिङ्ग । भूत, भूतम् । अन्यत्र क्लीबलिङ्ग' । भूत उपचित निदग्धम् । भूतानि प्राणिन । उपमावचनः क्रियावचनश्च अभिधेयलिङ्ग । पितृभूतोऽय, पितृभूतमिदम् । मातृभूतोऽयं, मामृभूतमिदम् । पितेव मातेव इत्यर्थः । अतीतार्थे तु भूत भूतं भूता । एव जातार्थे भूत भूत भूता इति । सैन्धवशब्दो लवणे नृक्लीबलिङ्ग । यौगिकस्तु अभिधेयलिङ्ग । सारशब्द उत्कर्षे ना नृलिङ्ग. । न्याय्यादनपेते तु क्लीबलिङ्ग एव । इति—(दु० लिं० वृ० पृ० ३६ श्लोकः ७५) ।

धर्मो–ऽय–मित्य–ऽपूर्वे भवति च तत्साधने–ऽपि धर्म्म–मिदम् ।
अर्द्ध–मिदं समभागेऽसमभागे—ऽपि च प्रेम ॥

अस्य व्याख्या—

धर्म इति । अपूर्वे, अनुमेये पुण्ये, धर्मशब्द पुलिङ्ग । तस्य साधने दानादौ क्लीबलिङ्ग इत्यर्थ । समभागे तुल्याशे अर्धशब्द क्लीबलिङ्ग. । यथा—खार्य्यर्धम् । असमभागे विषमाशे नृलिङ्ग एव । यथा—अर्धः पटी, अर्धो नगरम्, ग्रामार्ध, वस्त्रार्ध । इतरत्र तु अभिधेयलिङ्गः । अर्धः पटः, अर्धा नगरी, अर्धं कुलम् । प्रेमशब्दस्य व्याख्या प्रागुक्ता । इति—(दु० लिं० वृ० पृ० ३६ श्लोकः ७६) ।

लोह्–पटह्–देह्–द्वीपिन–दृढ–मातङ्क–कण्टक–विटङ्कम् ।
कान्तार–जठर–कन्दर–शेखर–केदार––वर––पारम् ॥

अस्य व्याख्या––

लोहेति । लोहादौ, आतङ्कादौ अपरार्द्धे तु कान्तरादौ च समाहारो द्वन्द्व । एते लोहादय· शब्दा· पुन्नपुसकलिङ्गा स्यु. । कन्दरः, कन्दरम्=अङ्कुश, कृत्रिमगृहाकारगिरिविवरम्, गुहा च । 'दरी तु कन्दरो वा स्त्री' इति––(अम० ना० लि० पृ० १२६ श्लोक ६) । 'कन्दरस्त्वङ्कुशे पुसि, गुहाया च नपुसकम् ।' इति––(मे० पृ० १३२ श्लोक· १३२) । 'कन्दरोऽङ्कुशे ॥ विवरे गुहायां च' इति––(अने० स० पृ० ९२ श्लोक· ५६२-३) । पार, पारम्=परतीरम् । 'पारावारे परार्वाची तीरे' इति––(अम० ना० लि० पृ० ९५ श्लोक ८) । 'पार प्रान्ते परतटे' इति––(अने० सं० पृ० ३६ श्लोक ४४८) । 'पार परतटे प्रान्ते न स्त्री' इति––(मे० पृ० १२६ श्लोक ५६) । शे० प्रा० ।

खण्डल–मण्डल–मुकुलाः कपाल–खल–कुलिश–बाल–पूलाश्च ।
स्थान––फलको–त्पल–निदाघ–मेचक–वितान–कुसुमाश्च ॥

अस्य व्याख्या––

खण्डलेति । खण्डलादौ कपालादौ अपरार्द्धे तु स्थानादौ चेतरेतरयोगो द्वन्द्व । एते ख ड-लादय. शब्दा. पुनपुसकलिङ्गा स्यु । खण्डल., खण्डलम्=छिद्रवस्त्रैश्चीरम्, खण्डवत्, खण्डशब्दवत् । यावन्तः खण्डशब्दार्थास्तावन्त खण्डलस्यापीत्यर्थ । 'छिद्रवस्त्रैश्चीर खण्डलमस्त्रियाम् ।' इति––(वै० पृ० १६९ श्लोक १३०) । मण्डल., मण्डलम्=भूभागविशेष , श्वा च । 'मण्डल परिवेशश्च परिधिश्चोपसूर्यकम् ।' इति भागुरि·' इति––(अम० सु० व्या० पृ० ४२ स्त० १ प० २७-८) । 'स्यान्मण्डल द्वादशराजके च देशे च बिम्बे च कदम्बके च । कुष्ठप्रभेदेऽप्युपसूर्यकेऽपि, भुजङ्गभेदे शुनि मण्डल स्यात् ।' इति––(वि० प्र० पृ० १५५ श्लोक· ८१) । 'मण्डल परिधौ कोठे देशे द्वादशराजसु । क्लीबेऽथ निवहे बिम्बे त्रिषु, पुसि तु कुक्कुरे ॥' इति च––(मे० पृ० १५३ श्लोकः १२१) । पूल., पूलम्=बद्धतृणसञ्चयविशेष· । 'पूला' 'पूली' वेत्यपि' लोकेऽपि । 'पूलोऽस्त्री तृणपञ्चिका ।' इति––(वै० पृ० १२८ श्लोकः ६५) । शे० प्रा० ।

स्नेह–मुख–मूलक–पटल–वर्चस्क–कुणप–विडङ्ग–नीडाश्च ।
पिष्ट–पलित–कुक्कुट–मरक–मुभयलिङ्गा इति समाप्ताः ॥

अस्य व्याख्या––

स्नेहेति । स्नेहादौ इतरेतरयोगो द्वन्द्वः । अपरार्द्धे पिष्टादौ समाहारो द्वन्द्वः ।

एते स्नेहादय. शब्दा. पुन्नपुसकलिङ्गा· स्यु । पटल , पटलम् = गृहोपरिभाग , नेत्ररोगविशेष । ग्रन्थप्रभेद –काण्ड , वर्ग·, परिच्छेदश्च । 'पटल काण्डमस्त्रियाम् ।' इति––(त्रि० शे० पृ० ३११ श्लोक: २५) । 'पटल नेत्ररोगे च परिच्छेदसमूहयो । तिलके पुन्नपुसि स्या,––च्छदि स्त्री पटलीति च ।' इति––(ना० म० पृ० ८१ प० १, २) । 'अथ पटल पिटके च परिच्छदे । छदिर्दृग्रोगतिलके क्लीबं, वृन्दे पुनर्न ना ॥' इति––(मे० पृ० १५२ श्लोक १०५) । 'पटलं पिटकौघयोः । तिलकच्छदिषोर्नेत्ररोगेऽध्याये परिच्छदे ।' इति च––(अने० ति० पृ० ५५ श्लोक १८४-५) । विडङ्ग , विडङ्गम् = कृमिहा, कृमिघ्नमौषधम् । 'विडङ्गस्त्रिष्वभिज्ञे स्यात्, कृमिघ्ने पुन्नपुसकम् ।' इति––(मे० पृ० २५ श्लोक. ४७) । नीड , नीडम् = पक्षिवासविशेष , पक्षिनिलय । "घोसला" "कोल" इति वा लोके । 'कुलायस्तु पञ्जर नीडमस्त्रियाम् ।' इति––(वै० पृ० ३० श्लोक ४९) । 'कुलायो नीडमस्त्रियाम् ॥' इति––(अम० ना० लिं० पृ० २०० श्लोक ३७) । 'नीडं स्थानकुलाययो ।' इति च––(मे० पृ० ४१ श्लोक १७) । शे० प्रा० ।

तथा च पुरुषोत्तमदेव –(त्रि० शे० पृ० ३८८ त ३९२ या० श्लोकः ८त १४ या०) ।

पुन्नपुंसकयो–र्दारु–जीवातु–स्थाणु–सीधवः ।
स्याद् वास्तु हिङ्गु तितउ सानु कम्बु कमण्डलु ॥

अस्य व्याख्या––

पुन्नपुंसकयोरिति । दार्वादौ इतरेतरयोगो द्वन्द्व. । एते दार्वादय शब्दा: पुन्नपुसकयो. पुन्नपुसकलिङ्गा भवन्ति इत्यर्थ । दार्वादिशब्दाना व्याख्योदाहरणानि प्रागुक्तानि ।

गोमय–कुमुद–बिम्ब–शंखा–ऽऽश्रम–शूल–सुवर्ण–तोरणाः ।
नूपुर–शिखर–तूर्य्य–निर्य्यास–गृहा–ऽङ्कुश–र्बाह–पल्लवाः ॥

अस्य व्याख्या––

गोमयेति । गोमायादौ नूपुरादौ चेतरेतरयोगो द्वन्द्वः । एते गोमयादयः शब्दा. पुन्नपुंसकलिङ्गा भवन्ति । व्याख्यादय प्राग्वत् ।

वृत–दिन–मास–वर्ष–दल–वल्कल–कोटर–षण्ड–चामराः ।
चन्दन–पद्म–धर्म–कोलाहल––किसलय––देह––दोहदाः ॥

अस्य व्याख्या—

व्रतेति। व्रतादौ चन्दनादौ चेतरेतरयोगो द्वन्द्व । एते व्रतादय शब्दाः पुन्नपुसकलिङ्गा भवन्ति । चामर, चामरम् = चमरीपुच्छनिर्मित वालव्यजनम्, प्रकीर्णकम् । "चौर" चौरी" इति च लोके । 'चामरा चामर वालव्यजन रोमगुच्छकम् ।' इति रभस' इति––(अम० सु० व्या० पृ० २७५ स्त० २ प० १७) । 'चामर चामराऽपि च । दण्डे च वालव्यजने' इति च––(मे० पृ० १३३ श्लोक १५४) । 'किसलय, किसलयम् = नवपत्रम्, पल्लव । "नया पत्ता" इति लोके । 'किसलयमपि तरुराग विद्रुर्मलतायावकं प्रवालं च ।' इति––(हा० व० पृ० ४०१ श्लोक ९१) । 'पल्लवो,-ऽस्त्री किसलयम्' इति च––(अम० ना० लि० पृ० १३२ श्लोक १४) । तथा च––'किसलयै सलयैरिव' इति रघु —इति मुकुट' इति— (अम० सु० व्या० टि० पृ० १३२ स्त० २ प० ४२) । 'किशलयमपि' । शे० प्रा० ।

कुलिश–ध्वज–कार्षापण–पिनाक–मुस्ता–ऽन्धकार–शृङ्ग–वलयाः ।
पटल––प्रवाल––चषको––पवास––कासार––कटक–सन्तानाः ॥

अस्य व्याख्या—

कुलिशेति । कुलिशादौ पटलादौ चेतरेतरयोगो द्वन्द्व । एते कुलिशादय शब्दा. पुन्नपुसकलिङ्गा भवन्ति । सन्तान, सन्तानम् = वश, देववृक्ष, विस्तारश्च । 'सन्तान. सन्ततौ देववृक्षे चापत्यगोत्रयो ।' इति––(त्रि० शे० पृ० ३५३ श्लोकः २६८) । 'क्लीबेऽपि ।' 'सन्तानं सन्ततौ गोत्रे स्यादपत्येऽमरद्रुमे ।' इति च––(श० र० स० पृ० २०० पं० १८) । शे० प्रा० ।

आकाश–कुञ्ज–कुतपौ–दन–वारबाण–
प्रस्था–ऽवतंस–नख–मण्डप–कच्छ–पुच्छा ।
कान्तार–कङ्कण–तडाग–किरीट–राष्ट्र—
तीर्थ–व्रण–स्तबक–सङ्क्रम–पीठकानि ॥

अस्य व्याख्या

आकाशेति । आकाशादौ कान्तारादौ चेतरेतरयोगो द्वन्द्व । एते आकाशादय शब्दाः पुन्नपुंसकलिङ्गा भवन्ति । पीठक, पीठकम् = आसनविशेष, व्रतिनामासनम् । 'पीठ.' इत्यपि पाठः । 'पीठमासनम् ॥' इति—(अम० ना० लि० पृ० २४९ श्लोकः १३८) । 'विष्टर. पीठमस्त्रियाम् ।' इति—(त्रि० शे० पृ० २९३ श्लोकः ४१) । शे० प्रा० ।

समर–सरक–रण–विटपा–ऽङ्गार–गैरिक–दैवत–कूटा–ऽऽगाराः।
प्रोथ–मुहूर्त्त–दिवस–फलकानि काश–निदाघ–मुषल–तिलकानि ॥

अस्य व्याख्या—

समरेति। समरादौ, अपराद्ध तु प्रोथादौ काशादौ चेतरेतरयोगो द्वन्द्व.। एते समरादय. शब्दा पुन्नपुसकलिङ्गा भवन्ति। गैरिकः, गैरिकम्=पर्वतजात उपधातुभेदः। ''गेरु'' इति लोके। स्वर्णं च। 'स्वर्णेऽपि गैरिकम्' इति—(अम० ना० लि० पृ० ३९९ श्लोक १२)। 'गैरिकं धातुरुक्मयो।' इति—(मे० पृ० ७ श्लोक ८४)। 'गैरिक धातौ रुक्मे रक्ते च हल्लके।' इति च—(शि० को० पृ० ३ श्लोकः २६)। कूटागार., कूटागारम्=वलभी, वडभी, चन्द्रशालिका, मृषागारम्, स्त्रीणां क्रीडागृह च। 'कूटागारं तु वलभी' इति—(वै० पृ० १६१ श्लोकः ३१)। शेषं प्राग्वत्।

वल्मीक–वृषण–द्रोण–गाण्डीव–निगडानि च।
मुकुलादि च विज्ञेय शिष्टसन्दर्भतोऽपरम् ॥

अस्य व्याख्या—

वल्मीकेति। वल्मीकादौ इतरेतरयोगो द्वन्द्व। एते वल्मीकादयः शब्दाः पुन्नपुसकलिङ्गा भवन्ति। वल्मीकादीनां व्याख्योदाहरणानि प्रागुक्तानि। अत्रादिपदात् मृणालापणामिषादि। अपरम् अन्यच्च शिष्टसन्दर्भत शिष्टाना स्थिरबुद्धीनाम्। 'न पाणिपादचपलो न नेत्रचपलो यतिः (मुनिः) न च वाक्चपलश्चैवमिति शिष्टस्य लक्षणम्।' इत्युक्तलक्षणवतां महेश्वरेन्द्रचन्द्रपाणिनिवररुचिप्रभृतीना सन्दर्भत काव्यादिरचनाविशेषतः। 'गूढार्थस्य प्रकाशश्च सारोक्ति श्रेष्ठता तथा। नानार्थकत्व वेद्यत्व सन्दर्भ. कथ्यते बुधैः।' इत्युक्तलक्षणात् सन्दर्भविशेषाद् वा। विज्ञेय बोद्धव्यम्।' इति—(त्रि० शे० टी० पृ० ३९२ श्लोकः १४)।

अथेदानी सक्षेपतः क्रमरहितान् पुन्नपुसकलिङ्गवाचकशब्दानाहामरः—(अम० ना० लिं० पृ० ४६०-१ श्लोकः ३२ त. ३६ या०)।

पुन्नपुंसकयोः शेषो–ऽर्धर्च–पिण्याक–कण्टकाः ॥
मोदक–स्तण्डक–षृङ्कः शाटकः कर्पटोऽर्बुदः।
पातको–द्योग–चरक–तमाला–ऽऽमलका नडः ॥
कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेम—कुट्टिमम्।
सङ्गमं शतमाना–ऽर्म–शम्बला–ऽव्यय–ताण्डवम् ॥

कवियं कन्द–कर्पासं पारावारं युगन्धरम् ।
यूपं प्रग्रीव–पात्रीवे यूषं चमस–चिक्कसौ ।।

एषा व्याख्या—

पुमिति । 'पुन्नपुंसकयो' इत्यधिकार । एतेऽर्धर्चादयश्चिक्कसान्ता शब्दा पुक्लीबलिङ्गा भवन्ति। शेष: प्रागुक्तादन्य । यथा—निधिवाचकौ यौ शखपद्मौ तौ पुलिङ्गौ । कम्बुनलिनवाचिनौ तु पुंक्लीबलिङ्गौ । योऽत्रत्यशब्द सोऽपि यत्पर्य्याये बाधितस्तत्पर्यायाद्भिन्नो यदि तदा नृक्लीबयोरित्यर्थ । अर्धर्चादौ चेतरेतरयोगो द्वन्द्व । अर्धर्चादीना व्याख्यादय प्राग्वद् बोध्या । मोदक इति । पातकादौ इतरेतरयोगो द्वन्द्व । मोदकादीना व्याख्या प्राग्वत् । कुष्ठमिति । क्षेमादौ शतमानादौ च समाहारो द्वन्द्व । कुष्ठादीना व्याख्या प्राग्वत् । कवियमिति । प्रग्रीवादौ चेतरेतरयोगो द्वन्द्व । यूप', यूपम् = यज्ञाङ्गभेद', पशुबन्धनकाष्ठविशेष', तूदवृक्षश्च । "शहतूत" इति लोके। 'यूपोऽस्त्री संस्कृतस्तम्भ.' इति–(वै० पृ० ९१ श्लोक १०३)। शेषशब्दानां व्याख्या प्राग्वत् ।

अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ।
त–न्नो–क्त–मिह लोकेऽपि त–च्चेद–स्त्य–स्तु शेषवत् ।।" इति ।।

अस्य व्याख्या—

अर्धचेति । अर्धर्चादौ अस्मिन् वर्गे पुन्नपुंसकाधिकाधिकारे इति यावत् । घृतादीनां घृतप्रभृतिशब्दानां यत्पुंस्त्वाद्यं पुलिङ्गत्वप्रभृति पाणिन्यादिभि: पाणिनिकात्यायनवररुचिपूर्वैर्महर्षिभिरुक्तं कथितं तत्तु वैदिकम् । श्रुतौ प्रसिद्धमित्यभिप्राय' । अस्मात्कारणात् तत् इहास्मिन् लिङ्गानुशासनवर्गे नोक्त न कथितम् । चेत्तल्लोकेऽप्यस्ति तर्हि तु शेषवत् उक्तात्कथितादन्य. शेषस्तद्वदस्तु । अर्थाच्छिष्टाना स्थिरमतीना प्रणीतशास्त्रेषु ये प्रयोगास्तेभ्यो ग्राह्यमित्याशय. ।

एव वैजयन्त्यां यादवेनापि संक्षेपत' पुन्नपुसकलिङ्गवाचकशब्दा उक्तास्ते यथा—(वै० पृ० २९१ श्लोक: २८ तः ३१ या० ) ।

अर्धर्चादिगणे प्रोक्तं सर्व नृक्लीबलिङ्गकम् ।
तच्च लिङ्गान्तरेऽनुक्तं सर्वमुक्तं घृतादि च ।।

---

पाणिनीये तु—(१) (अर्धर्चाः पुंसि च ।। २।४।३१) । अर्धर्चादयः शब्दा पुसि, क्ली`च स्यु' । अर्धर्च, गोमय, कषाय, कार्षापण, कुतप, कुणप, कपाट, शख, गूथ, यूथ, ध्वज, कबन्ध, पद्म, गृह, सरक, कस, दिवस, यूष, अन्धकार, दण्ड, कमण्डलु, मण्ड, भूत, द्वीप, द्यूत, चक्र, धर्म, कलश, कर्म, मोदक, शतमान, यान, नख, नखर, चरण, पुच्छ, दाडिम, हिम, रजत, सक्तु, पिधान, सार, पात्र, घृत, सैन्धव,

तत्र केचिद् घृतादीनां पुंस्त्वाद्यं वैदिकं विदुः ।
अत एकेन लिङ्गेन ते पूर्वमिह वर्णिताः ॥

अनयोर्व्याख्या—

अर्धर्चेति । तत्रेति च । अर्धर्चादिगणो महर्षिपाणिनिना यत्प्रोक्त कथितं तत्सर्वं समस्तं नृक्लीबलिङ्गकं पुन्नपुंसकलिङ्गक ज्ञेयम् । यदनुक्तं तत्सर्व लिङ्गान्तरे अन्यस्मिन् लिङ्गे बोध्यम् । यद् घृतादि आज्यप्रभृति चोक्त तत्र केचिच्छब्दशास्त्रज्ञा घृतादीनामाज्यप्रभृतीना पुँस्त्वाद्य नृलिङ्गत्वाद्यं वदन्ति तद् वैदिकमाम्नायक विदुर्जानन्ति । अतोऽस्मात्कारणात् पूर्वं प्राक् ये शब्दा एकेन लिङ्गेन वर्णितास्ते इहोक्ताः ।

पिशाचादिषु भूतोऽस्त्री शङ्कुरप्राणिगोचरः ।
विशेषकञ्च तिलकं पुण्ड्रे ब्रह्मा द्विजे–ऽब्जजे ॥
क्ष्वेडा–श्च कन्दलाः कालकूटाद्या–स्तु कमण्डलुः ।
सक्तुः परीत–न्महिमा कर्म पर्व च लोम दोः ॥" इति ।

अनयोर्व्याख्या—

पिशाचेति । पिशाचादिषु प्रेतप्रभृतिषु भूत भूतशब्दः, अप्राणिगोचर शङ्कुः, पुण्ड्रे पुण्ड्रे विशेषक तिलकं च, द्विजे ब्राह्मणे, अब्जजे कमलजातेऽपि ब्रह्मा च पुन्नपुसकयो स्यु ।

---

औषध, आढक, चषक, द्रोण, खलीन, पात्रीव, षष्टिक, वारबाण, प्रोथ, कपित्थ, शुष्क, शाल, शील, शुल्क शीधु, कवच, ऋण, कपट, शीकर, मुसल, सुवर्ण, वर्ण, पूर्ण, चमस, क्षीर, कर्ष, आकाश, अष्टापद, मङ्गल निधन, निर्य्यास, जृम्भ, वृत्त, पुस्त, बुस्त, क्ष्वेडित, शृङ्ग, निगड, खल, मधु, मूल, मूलक, स्थूल, शराव नाल, वप्र, विमान, मुख, प्रग्रीव, शूल, वज्र, पीयूष, कटक, कण्टक, कर्पट, शिखर, कल्क, नाट, मस्तक, वलय कुसुम, तृण, पङ्क, कुण्डल, किरीट, कुमुद, अर्बुद, अङ्कुश, तिमिर, आश्रम, भूषण, इक स, मुकुल, वसन्त तटाक, तडाग, पिटक, विटङ्क, विडङ्ग, पिण्याक, माष, कोश, फलक, दिन, दैवत, पिनाक, समर, स्थाणु अनीक, उपवास, शाक, कर्पास, विशाल, चषाल, खण्ड, दर, विटप, रण, बल, मृणाल, हस्त, आर्द्र, हल, सूत्र, ताण्डव, गाण्डिव, मण्डप, पटह, सौध, योध, पार्श्व, शरीर, देह, फल, छल, पुर, राष्ट्र, बिम्ब, अम्बर, कुट्टिम मण्डल, कुक्कुट, कुडव, ककुद, खण्डल, तोमर, तोरण, मञ्चक, पञ्चक, पुँख, मध्य, वाल, बाल, वल्मीक वर्ष, वस्त्र, वसु, उद्यान, उद्योग, स्नेह, स्तन, स्तेन, स्वर, सङ्गम, निष्क, क्षेम, शूक, छत्र, क्षत्र, पवित्र, यौवन, मालक, पालक, मूषिक, मण्डल, वल्कल, कुञ्ज, विहार, लोहित, विषाण, भवन, अरण्य, पुलिन, दृढ, आसन, ऐरावत, शूर्प, तीर्थ, लोम, तमाल, लोह, दण्डक, शपथ, प्रतिसर, दारु, धनुस्, मान, वर्चस्क, कूच, तण्डक, मठ सहस्र, ओदन, प्रवाल, शकट, अपराह्ण, नीड, शकल, तण्डुल, मुस्तक ॥ इत्यर्धर्चादिः ॥ सि० कौ० पृ० ८१ पं० ३ ।

ब्रह्मा, ब्रह्म=द्विज. ब्राह्मण', अब्जज कमलोद्भव, वेधाश्च। 'ब्रह्म तत्त्वतपोवेदे न द्वयो', पुसि वेधसि।' इति––(मे० पृ० ८६ श्लोक ९६)। एते क्ष्वेडादयो दो.पर्य्यन्ता शब्दा' पुन्नपुसकलिङ्गा स्यु । कन्दल, कन्दलम्=कलाप, उपराग, नवाङ्कुरः, कलह, युद्धम्, भूमिकन्दलीपुष्पं च। 'कन्दल कलहे शब्दे न्यङ्कुभेदोपरागयो. । कलापेऽपि नवाङ्कूरे' इति— (अने० ति० पृ० ४३ श्लोक ५४)। परीतत्, परीतत्=आत्रम्। 'अस्त्री परीतदांत्र स्यात्' इति––(वै० पृ० १८२ श्लोक ११३)। पर्वा, पर्व=दर्शप्रतिपत्सन्धि, उत्सवम्, ग्रन्थिश्च। 'पर्व क्लीब महे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदो सन्धौ विषुवत्प्रभृतिष्वपि।' इति––(मे० पृ० ८९ श्लोक. ८८)। शेषशब्दाना व्याख्या प्रागुक्ता।

इति पुन्नपुसकलिङ्गानुशासनम्।

## अथ स्त्रीनपुंसकलिङ्गानुशासनम् ।

अथेदानी नखादीन् मनोज्ञान्तान् स्त्रीनपुसकलिङ्ग वाचकशब्दानाह हेम —(अभि० सं० लि० पृ० ९ श्लोक १२२ त० १२७ या०) ।

स्त्रीक्लीबयो–र्नख शुक्तौ विश्वं मधुक–मौषधे ।
माने लक्ष मधौ कल्यं क्रोडा–ऽङ्के तिन्दुक फले ।।१।।
तरल यवाग्वां पुष्पे पाटलं पटलं चये ।
वसन्ततिलकं वृत्ते कपालं भिक्षुभाजने ।।२।।
अर्द्धपूर्वपदो नावो ङ्यकर्त्तृल्युटौ क्वचित् ।
चौराद्य—मनोज्ञाद्य—कञ्'…… ॥ इति ॥

एषा व्याख्या—

स्त्रीति । तरलमिति । अर्द्धेति च । शुक्तौ नखम् । औषधे विश्वम्, मधुक च । माने लक्षम् । मधौ कल्यम् । अङ्के क्रोडा । फले तिन्दुकम् । यवाग्वाम् तरलम् । पुष्पे पाटलम् । चये पटलम् । वृत्ते वसन्ततिलकम् । भिक्षुभाजने कपालम् । अर्द्धपूर्वपदः नाव । क्वचित् ङ्यकर्तृल्युटौ । अकञ् चौराद्यमनोज्ञादि चैते स्त्रीक्लीबयो स्त्रीक्लीबलिङ्गा भवन्तीत्यर्थः । यथा—इय नखी, इद नखम्=शुक्ति. । "सीप" इति लोके । 'नखी स्त्रीक्लीबयो' शुक्तौ, नखरे पुन्नपुसकम् ।' इति—(मे० पृ० २० श्लोक २) । इयं विश्वा, इदं विश्वम्=औषधविशेष', शुण्ठी । "सूंठ" इति लोके । 'विश्वा त्वतिविषाया स्त्री, जगति स्यान्नपुसकम् । न ना शुण्ठ्यां, पुसि देवप्रभेदेष्व,–(त्व) खिले त्रिषु ।' इति—(मे० पृ० १५९ श्लोक. २३) । इय मधुका, इद मधुकम्=औषधिविशेष । 'श्यामकङ्गुस्तु मधुका' इति । 'मधूल तु मधुर्न स्त्री, मधुक तत्पुरातनम् ।' इति च यादव' इति—(वै० पृ० १३४ श्लोक १३४) । 'मधुकं क्लीतके, कृष्णकङ्गुकाश्मर्ययोः स्त्रियाम् ।' इति च—(शि० को० पृ० ४ श्लोकः ४०) । इयं लक्षा. इद लक्षम्=मानविशेष', शतसहस्रम्, सहस्राणा शतम् । "लाख" इति लोके । 'लक्षा न पुसि सख्याया, क्लीब (बे) व्याजशरव्ययोः ।' इति—(मे० पृ० १६७ श्लोकः २३) । इयं कल्या, इदं कल्यम्=मधु, कल्याणवाक् च । 'कल्य प्रभाते

मधुनि सज्जे दक्षे निरामये । कल्या कल्याणवाचि स्यात्' इति––(अने० स० पृ० २९ श्लोक ३५०-१) । इय क्रोडा, इद क्रोडम्=अङ्क, उत्सङ्ग, रक्षश्च । 'क्रोड शनौ सू(शू)करे ना, न पुमानङ्करक्षसो ।' इति––(मे० पृ० ४० श्लोक ३) । इय तिन्दुकी, इद तिन्दुकम्=फलम्, तिण्डिशम्, लोमशफलम् । "ढीढस" इति लोके । 'तिन्दुकी स्याद् द्वयो कालस्कन्धे, क्लीबं तु तिण्डिशे ।' इति––(शि० को० पृ० ३ श्लोक २९) । 'तिण्डिश लोमशफल फलशाकेषु सिद्धकम् ।' इति च कोशान्तरम्' इति–(शि० को० टी० पृ० ६३ प० १४) । तरला, तरलम्=यवागू, परिसिक्था, श्राणा, षड्गुणजल-पक्वघनद्रवद्रव्यविशेष । "माड की काँजी" । इति लोके । 'तरल. पुसि धत्तूरे, यवागूसुरयो स्त्रियाम् ।' इति––(शि० को० पृ० ४२ श्लोक ४५९) । 'तरल चञ्चले षिङ्गे भास्वरेऽपि नपुसकम् । हारमध्यमणौ पुसि, यवागूसुरयो स्त्रियाम् ।' इति च–(मे० पृ० १५२ श्लोक ९५-६) । इय पाटला, इद पाटलम्=पुष्पम्, पाटलापुष्पम् । 'पाटला पाटलौ स्त्री, स्यादस्य पुष्पे पुनर्न ना । आशुधान्ये पुमान्, श्वेतरक्तवर्णेऽपि वाच्यवत् ।' इति––(मे० पृ० १५३ श्लोक १०९) । इय पटली, इद पटलम्=चय, समूह । 'पटल्यपु सुश्लिष्टानां सजातीयगणे कुलम् ।' इति––(वै० पृ० १८६ श्लोक ६) । 'अथ पटल पिटके च परिच्छदे । छदिर्दृग्रोगतिलके क्लीब, वृन्दे पुनर्न ना ।' इति–(मे० पृ० १५२ श्लोक १०५) । इय वसन्ततिलका, इद वसन्ततिलकम्=वृत्त-विशेष:, चतुर्दशाक्षरच्छन्दः । तथा च 'कान्ते ! वसन्ततिलका किल ता वदन्ति ।' इति कालिदासः–– (श्रु० बो० पृ० २७ श्लोक ३७) । इय कपाली, इद कपालम्=भिक्षुभाजनम्, यतीनां मृत्मय-कर्परादिभिक्षापात्रम् । इय अर्द्धनावी, इद अर्द्धनावम्=नावोऽर्द्धम्, नौकाया अर्द्धम् । "आधी नाव" इति लोके । ङ्यकर्तृल्युटौ तु यथा––इय––वैदग्धी, इद–वैदग्ध्यम्=चातुर्य्यम्[1] । "चतुराई" इति लोके । विदग्धस्य भाव कर्म वा । इय राजधानी, इद राजधानम्=कोट्ट, स्कन्धावार, राजपुरम् । इय–आस्थानी, इद–आस्थानम्=सभा । चौराद्यमनोज्ञाद्यकन्–मनोज्ञाद्यन्तर्गणवर्जितेभ्यश्चौरादि-भ्यो योऽकञ्प्रत्ययस्तदन्त तु यथा––इयं चौरिका, इद चौरकम्=चौर्य्यम्, चोरस्य भावः कर्म वा । इय मनोज्ञिका, इदं मनोज्ञकम्=मनोज्ञता, मनोज्ञस्य भावः ।

अथेदानी क्रमसहितान् कान्तादीन् शान्तपर्यन्तान् स्त्रीनपुसकलिङ्गवाचकशब्दानाह हेमः–– (अभि० स० लि० पृ० ९ श्लोक १२२-३-४) ।

... ... कथानक––कशेरुके ।।३।।
वंशिक–वर्कोष्ठिक–कन्यान्याकुब्ज–पीठानि नक्त–मवहित्थम् ।
रशनं रसना–ऽऽच्छोटन–शुल्बं तुम्बं महोदयं कांस्यम् ।।४।।

---

(१) (स्त्रिया तु चातुरी) ।। तथा च प्रयोग––'या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी ।' इति––(श० चिं० पृ० ११५ स्त० १ पं० २०) ।

मृगव्य–चव्ये च वणिज्य–वीर्य्यं—
नासीर–मात्रा–ऽपर–मन्दिराणि ।
तमिस्र—शस्त्रे नगरं मसूर—
त्वक्क्षीर—कादम्बर–काहलानि ॥५॥
स्थाली–कदल्यौ स्थल–जाल–पित्तला— •
गोला—युगल्यौ बडिशं च'···इति ॥

अनयोर्व्याख्या—

कथानकेति । वशिकेति । मृगव्येति । स्थालीति च । कथानकादौ, वंशिकादौ चेतरेतर-योगो द्वन्द्वः । रसनादौ समाहारो द्वन्द्व । मृगव्यादौ, वणिज्यादौ, तमिस्रादौ, मसूरादौ, स्थाल्यादौ चेतरेतरयोगो द्वन्द्व. । एते कथानकादयो बडिशान्ताः शब्दा स्त्रीनपुसकलिङ्गा भवन्ति । इयं कथानकी, इद कथानकम् = लघुकथा, स्वल्पकथा । "गल्प" इति । "छोटा किस्सा" इति च लोके । इयं कशेरुका, इदं कशेरुकम् = पृष्ठस्यास्थि । "मेरुदण्ड" इति । "पीठ के पीछे की हड्डी" इति च लोके । 'पृष्ठस्यास्थि, कशेर्वना ।' इति—(वै० पृ० १८२ श्लोकः ११५) । इयं वंशिका, इदं वशिकम् = वंशी, वेणु, मुरली, अगुरु च । 'वंशक वशिक शीर्ष प्रकर मृदुलं लघु ।' इति । 'वंशे तु वंशिका पूरी मुरली वेणुका च सा ।' इति च—(वै० पृ० १४६ श्लोक १२५) । इयं वक्रोष्ठिका, इद वक्रोष्ठिकम् = स्मितम्, अदृष्टरदहास्यम्, इषद्धास्यम् । 'स्मितं त्वदृष्टदशने हासो वक्रोष्ठिका न ना ।' इति—(वै० पृ० १४२ श्लोक ८३) । इय कन्याकुब्जा, इदं कन्याकुब्जम् = पुरविशेष., कुशस्थलम्, महोदयम्, गाधिपुरम् । "कन्नौज" इति । "महोबा" इति च लोके । "कान्यकुब्जम्" इत्यपि । 'कुशस्थलं कान्यकुब्जम्' इति—(त्रि० शे० पृ० २७९ श्लोकः १३) । 'कान्यकुब्जम् महोदयम् । कन्याकुब्जं गाधिपुर कौश कुशस्थलं च तत् ।' इति—(अभि० सं० अभि० चि० पृ० ३८ श्लोक ९७३-४) । कन्या कुब्जा यत्र, तत्र हि वायुना कन्याशतस्य कुब्जत्व कृतमिति अथवा महानुदयो वैभव यस्य, यत्र वा । इयं पीठी, इद पीठम् = दारुजमासनम् । "काठ की चौकी" इति लोके । 'विष्टर त्वासन पीठ दारुजम्' इति—(वै० पृ० १७२ श्लोकः १६४) । पुरुषोत्तमदेवस्त्वस्त्रियामित्याह—'विष्टर पीठमस्त्रियाम् ।' इति—(त्रि० शे० पृ० २९३ श्लोक. ४१) । इय नक्ता, इदं नक्तम् = कलिकारी, रात्रिश्च । 'दीप्ता विशल्याऽग्रिमुखी हली नक्तेन्दुपुष्पिका ।' इति—(रा० नि० पृ० १३६ श्लोक ७) । 'नक्तं निशीथिनी दोषा तारा-भूषा विभावरी ।' इति च-(रा० नि० पृ० ४१६ श्लोक ३३) । इयं–अवहित्था, इद–अवहित्थम् = आकारगुप्तिः, आकारगोपनम् । 'अवहित्थाकारगुप्ति.' इति—(अम० ना० लि० पृ० ८४ श्लोकः

३४)। 'आकारगोपनायामपटीकाप्यवकटापि स्त्री। न पुमानवहित्था, स्यादक्ली गृहजालिका-ऽप्यस्याम्।' इति—(वै० पृ० १४३ श्लोक. ८६)। 'अवहित्थमथोग्रता' इति भरतोक्ते. क्लीबमपि—इति च मुकुटपीयूषबुधमनोहरा' इति—(अम० सु० व्या० टि० पृ० ८४ पं० ४०)। इयं रशना, इद रशनम्। इय रसना, इद रसनम्=काञ्ची, जिह्वा च। 'तालव्या अपि दन्त्याश्च शम्बशम्बल-शूकरा। रशनाऽपि च जिह्वायाम्' इति। 'जिह्वायां रशना तथा।' इत्युक्तेर्दन्त्यतालव्यमध्योऽयम्। 'रसन स्वदने ध्वनौ। जिह्वाया तु न पुसि स्यात्,' इति—(मे० पृ० ९१ श्लोक: १२)। 'रसन तु ध्वनौ स्वादे, रसज्ञारास्नयो· स्त्रियाम्।' इति रभस.'—(अम० सु० व्या० पृ० २३४ स्तं० २ प० १०-१)। 'रसन निस्वने स्वादे, रसना काञ्चिजिह्वयोः।' इत्यजयधरणी' इति—(अम० सु० व्या० पृ० २४० स्तं० २ प० १५)। 'रसनं स्वदने ध्वाने, रसना काञ्चिजिह्वयो.। रसन चापि रास्नायाम्' इति च—(वि० प्र० पृ० ८७ श्लोक: ३०)। इयं—आच्छोटनी, इद—आच्छोटनम्=अङ्गुलीना शब्द। "उँगलिया चटकाना" इति। "चुटकी बजाना" इति च लोके। इय शुल्बा, इद शुल्बम्=रज्जु, वराट.। 'गुणो वराटो रज्जुः स्त्री, न ना शुल्बा, वटी त्रयी।' इति—(वै० पृ० १३८ श्लोक: ३०)। इयं तुम्बा, इद तुम्बम्=रथनाभिका, तुम्बी, अलाबू च। 'तुम्बा तु नाभिका' इति—(वै० पृ० ११५ श्लोक १३५)। इयं महोदया, इदं महोदयम्=पुरविशेष., कान्यकुब्जम्। इयं कांस्या, इद कांस्यम्=सौराष्ट्रम्, घण्टास्वनम्, प्रभासम्, असुराह्वयम्। "काँसा" इति लोके। 'कास्य तु कृत्रिमं नाट्यं प्रभासमसुराह्वयम्। घण्टास्वन भूरिलोहम्' इति—(वै० पृ० ४३ श्लोक: २८)। इय मृगव्या, इदं मृगव्यम्=आखेट., मृगया। "शिकार" इति लोके। 'आच्छोदन मृगव्या स्यादाखेटो मृगया स्त्रियाम्।' इति—(अम० ना० लि० पृ० ३४५ श्लोक २३)। 'आच्छोटन खेटन च मृगव्यं मृगयाऽपि च।' इति च—(वै० पृ० १३९ श्लोक: ३८)। इयं चव्या, इदं चव्यम्=औषधिविशेष·, चविका। "चाव" इति लोके। 'चव्य तु चविकम्' इति—(अम० ना० लि० पृ० १६१ श्लोक. ९८)। 'चव्यं तु चविके क्लीबं, वचायामपि योषिति।' इति—(मे० पृ० ११४ श्लोक: २१)। 'स्त्रियामपि'। 'चव्या कोलाऽथ चविका, चव्य कुञ्जरपिप्पली।' इति हट्टचन्द्र। केचित्तु पूर्वान्वयमाहुः। यदाह चन्द्रनन्दनः—'चव्या कोलाऽथ चविका श्रेयसी गजपिप्पली। च्यवना कोलवल्ली तु चव्य कुञ्जरपिप्पली'। अत्र पक्षे तु स्थाने च पाठ्यः।' इति—(अम० सु० व्या० पृ० १६१ स्तं० २ प० २२ त. २७ या०)। इय वणिज्या, इदं वणिज्यम्=वणिग्भावः। "व्यापार" "सौदागरी" "तिजारत" इति च लोके। 'सत्यानृतं तु वाणिज्य वणिज्या वणिजा स्त्रियौ।' इति—(वै० पृ० १२३ श्लोक· ३)। इयं वीर्या, इदं वीर्यम्=अतिशयशक्तिः। 'वीर्यं शुक्रे प्रभावे च तेजः सामर्थ्ययोरपि।' इति—(मे० पृ० ११५ श्लोक: ४१)। इय

नासीरा, इदं नासीरम् = सेनामुखम्, नायकाग्र्यकम् । 'स्यान्नायकाग्रेसरिकौ नासीरं दर्प ऊष्मणि ।' इति—(त्रि० शे० पृ० ३०० श्लोक. ५०) । यादवस्तु नृक्लीबलिङ्गमाचष्टे । 'नासीरोऽस्त्र्यग्रयानम्' इति—(वै० पृ० १२० श्लोक २०३) । इय मात्रा, इद मात्रम् = स्वल्पम्, कार्त्स्न्यम् अवधारणं च । 'मात्रा परिच्छदेऽर्थेऽग्रे प्रवृत्तौ कर्णभूषणे । अक्षरावयवे माने, मात्रं कार्त्स्न्येऽवधारणे ।' इति—(वै० पृ० २३५ श्लोकः ६२-३) । इयं–अपरा, इद–अपरम् = जरायु., गजपश्चार्द्धं च । 'अपरं गजपश्चार्द्धे स्या,–ज्जरायौ तु योषिति । इतरस्मिन्नपि तथा,–ऽर्वाचीनेऽप्यन्यलिङ्गकम् ।' इति—(मे० पृ० १३० श्लोक· १०४) । इय मन्दिरा, इद मन्दिरम् = देवतागृहम्, सदन च । 'मन्दिर द्रेहपुर्य्योश्च सम्बन्धे' इति—(वै० पृ० २५२ श्लोकः २७) । 'मन्दिरो मकरावासे, मन्दिर नगरे गृहे ।' इति च—(अने० स० पृ० ९७ श्लोक· ६२४) । इय तमिस्रा, इद तमिस्रम् = तमस्तति·, तमसां समूह·, तिमिरम्, अन्धकारम्, अन्धतमसम् । 'तमिस्त्रा स्त्री ध्वान्तनिशि निश्य–न्धतमसे न ना ।' इति—(वै० पृ० २६० श्लोक ४३) । इय शस्त्री, इद शस्त्रम् = छुरिका, अस्त्रम्, लोहं च । 'शस्त्र लोहास्त्रयो क्लीब, छुरिकाया तु योषिति ।' इति—(मे० पृ० १२९ श्लोकः ८७) । इय नगरी, इद नगरम् = पुरी, पू, पत्तनम्, राजस्थितिस्थानम् । 'नगरी नगरे पुर्य्याम्' इति—(श० र० स० पृ० २७३ प० १५) । इयं मसूरा, इद मसूरम् = धान्यविशेष·, मङ्गल्य:, त्रिवृत्, सुषेणा । 'मसूरा मसुरा चापि त्रिवृद्धान्यविशेषयो । मसूरमसुरौ पुसि द्वावेतावपि चैतयोः ।' इति—(शि० को० पृ० ३७ श्लोक. ४०६-७) । 'वेसवार· परिसरो मसूरः कुसुमासन. ।' इति सभेदान्मध्यदन्त्यः । 'मसूरा चापि मसुरा मङ्गल्यत्रिवृतोर्मता ।' इति लोचनः' इति—(शि० को० टी० पृ० १४३ प० ८-९) । 'मसूरा त्रिवृताया च प्रोक्ता धान्यविशेषके ।' इति । 'त्रिवृद्धान्यविशेषयो· । मसूरोऽपि' इति च—(रा० नि० पृ० ४२४ श्लोकः २८) । 'वेश्याया व्रीहिभेदे च मसूरा मसुरा स्त्रियाम् । मसूरमसुरौ पुसि द्वावेतावऽपि चैतयोः ।' इति च रसभः' इति—(अम० सु० व्या० पृ० ३०७ स्त० १ प० १६) । 'रोपधत्वान्नपुसकेऽपि ।' इय त्वक्क्षीरी, इदं त्वक्क्षीरम् = वेणुजन्यौषधविशेष, वशरोचना । "बंसलोचन" इति लोके । 'स्याद्वशरोचना वाशी तुकाक्षीरी तुकाशुभा । त्वक्क्षीरी वंशजा शुभ्रा वशक्षीरी तु वैणवी ।' इति शाश्वत ।' इति—(अम० सु० व्या० पृ० ३३८ प० २४-५) । 'वशलोचना' इत्यपि । 'त्वक्क्षीरी वंशलोचना ।' इति—(श० र० स० पृ० २८८ प० ३) । यादवस्त्वाबन्तत्वमाचष्टे— 'त्वक्क्षीरा वशरोचना ।' इति—(वै० १३० श्लोक ६०) । इय कादम्बरी, इद कादम्बरम् = मदिरा, मद्यप्रभेदश्च । 'कादम्बरस्तु दध्यग्रे, मद्यभेदे नपुंसकम् । स्त्री वारुणीपरभृताभारतीसारिकासु च ।' इति–(मे० पृ० १४१ श्लोकः २५७) । इय काहली, इदं काहलम् = वाद्यभाण्डम्, तरुणी, भृशम्, शुष्क च । 'काहली तु तरुण्या, स्यात्काहल भृशशुष्कयो । वाद्यभाण्डे विशेषे तु, काहला काहले

खले ।' इति—(वि० प्र० पृ० १६० श्लोक १३५) । 'काहलो [दुर्जनेऽपि च । काहली वाद्य-भाण्डे, स्यान्न पुंसि भृशशुष्कयो· ।' इति च—(ना० म० पृ० ९३ प० ७) । इय स्थाली, इदं स्थालम् = पिठरः, उखा । "हाडी" इति लोके। पाटलवृक्ष, स्वर्णादिनिर्मितभोजनपात्र च। "थाल" इति लोके। 'स्थाल भाजनभेदेऽपि स्थाली स्यात्पाटलोखयो.।' इति—(मे० पृ० १४९ श्लोक ५५) । इय कदली, इद कदलम् = रम्भा, वारणवुसा, मोचा । "केला" इति लोके । कदलीफलं च । 'कदला कदलौ पृश्न्या, कदली कदली पुन । रम्भावृक्षेऽथ कदली पताका-मृगभेदयोः । कदला डिम्बिकायां च शाल्मलीभूरुहेऽपि च ।' इति—( मे० पृ० १५० श्लोक ७०, ७१)। 'कदलश्च कदल्यसौ ।' इति च व्याडि' इति--(अम० सु० व्या० पृ० १६६ स्तं० २ प० ३५) । इय स्थली, इद स्थलम् = अकृत्रिमस्थानम् । "कडी जमीन" इति लोके। 'स्थलं स्थली। समानौ' इति—(अम० ना० लि० पृ० १११ श्लोक ५)। 'आसारी तु स्थली स्थलम् ।' इति च-(वै० पृ० ३८ श्लोक ४२) । इयं जाली, इद जालम् = पटोलिकौषधि, गवाक्षश्च । 'जाल गवाक्ष आनाये क्षारके दम्भवृन्दयो । जालो नीपद्रुमे, जाली पटोलिकौषधौ स्त्रियाम् ।' इति--(वै० पृ० २२४ श्लोक ९) । इय पित्तला, इद पित्तलम् = जलपिप्पली, तैजसद्रव्य च । 'पित्तला तोयपिप्पल्या स्त्र्य,–न्यवत्पित्तसंयुते । क्लीब तु तैजसद्रव्ये' इति--(मे० पृ० १५३ श्लोक: ११४) । 'पित्तल त्वारमस्त्रियाम् ।' इति च—(वै० पृ० ४३ श्लोक २६) । इय गोला, इद गोलम् = मन.शिला, कुनटी, अवन्तिसोमम्, सन्धानम्, मण्डल च । 'अथो गोला नैपाली कुनटीति च ।' इति । 'गोलकुलमाषसन्धानानि' इति च—(वै० पृ० १६५ श्लोक: ८२) । 'गोला गोदावरीसख्यो कुनटीदुर्गयो स्त्रियाम् ॥ प(पा)त्राञ्जने मण्डले चालिञ्जरे बालखेलने ।' इति--(मे० पृ० १४६ श्लोक १४) । 'गोल: स्यात्सर्ववर्त्तुले । गोला पत्राञ्जने गोदावर्य्यां सख्यामलिञ्जिरे ॥ मण्डले च कुनट्या च बालक्रीडनकाष्ठके ।' इति—(अने० स० पृ० ४० श्लोक ४९६-७) । 'क्लीबेऽपि' । 'मण्डले मणिके गोल, गोला गोदावरी सखी ।' इति च--(त्रि० शे० पृ० ३७१ श्लोक ३९१) । इय युगली, इद युगलम् = युग्मम् । "जोडा" जोडी" इति च लोके । 'यमल युगल युग्म युतक च द्वयोर्गणे ।' इति—( वै० पृ० १८७ श्लोक १५ ) । 'यमल युगले प्राहु,–र्यमली चो(शा)टिकाद्वये ।' इति च—( श० र० स० पृ० ३०९ प० २ ) । इय बडि (लि)शा, इद बडि(लि)शम् = मत्स्यबन्धनोपायविशेष., मत्स्यबन्धनम् । "वंशी" वलशी" इति च लोके । 'बलिश मत्स्यवेधनम् ।' इति--(अम० ना० लिं० पृ० ९९ श्लोक १६) । डलयोरैक्यात् 'बडिशम्' अपि । स्त्रियां बडिशापचये तु बडिशी ।

अथ साम्प्रतमिकारान्तोकारान्तव्यञ्जनान्तान् स्त्रीनपुंसकलिङ्गवाचकशब्दानाह हेम·— (अभि० सं० लिं० पृ० ९ श्लोक: १२७) ।

... ... ... छर्दि च ॥
अलाबु—जम्बु—डु—रुषः सरः सदो
रोदो-र्चिषी दाम गुणे त्वयट्-तयट् ॥६॥ इति ॥

अनयोर्व्याख्या—

छर्दीति । अलाब्वादौ, रोद आदौ चेतरेतरयोगो द्वन्द्वः । त्वयडादौ तु समाहारो द्वन्द्वः । एते छर्द्यादय शब्दा स्त्रीनपुसकलिङ्गा भवन्ति । इयं छर्दि, इदं छर्दि=वान्तिः, वमनरोग । "वमन" "कै" इति च लोके । 'छर्दिरुद्वान्तिरेतसो ।' इति—(वै० पृ० २२१ श्लोक १३) । इयं-अलाबु, इदं-अलाबु=तुम्बी । "लौकी" इति लोके । 'अलाबुश्चाप्यलाबूश्चाप्यालाबुस्तुम्बिकौषधौ ।' इति—(श० र० स० पृ० २१६ प० १४) । इयं जम्बु, इदं जम्बु=जम्बुफलम् । "जामुन" इति लोके । 'फले जम्ब्वा जम्बू स्त्री, जम्बु जाम्बवम् ।' इति—(अम० ना० लि० पृ० १३४ श्लोक १९) । 'जम्बू. स्यात्पादपान्तरे । तथा सुमेरुसरिति द्वीपभेदेऽपि च स्त्रियाम् ।' इति च—(मे० पृ० १०५ श्लोक ४) । 'परिणतजम्बुफलोपभोगहृष्टा' इति किराते ह्रस्वान्तप्रयोग. ।' इति—(अम० सु० व्या० टि० पृ० १३४ स्त० १ पं० ३४) । इय—उडु., इदं—उडु=नक्षत्रम् । 'नक्षत्रमृक्ष भ, तारा तारकाऽप्युडु वा स्त्रियाम् ।' इति—(अम० ना० लि० पृ० ३७ श्लोक. २१) । 'सन्नक्षत्रमुडुर्न ना ।' इति च—(वै० पृ० २० श्लोक ३८) । इयं रुट्, इदं रुट्=रोष, क्रोध । "गुस्सा" इति लोके । 'रुषा रुट्क्रुत्क्रुधा· स्त्रिय ।' इति—(वै० पृ० ९८ श्लोक १८३) । इयं सरसी, इदं सर·=कासार, सरोवर । "तालाब" "तलैया" "झील" इति च लोके । 'कासारः सरसी सर. ।' इति—(वै० पृ० १५४ श्लोक ६) । इयं सद, इदं सद·=सभा । 'ससद् घटा स्थान सदऽप्यना ।' इति—(वै० पृ० १२४ श्लोक· १४) । इय रोदसी, इदं रोद=भूद्यावौ, भूद्युलोकौ । 'भूद्यावौ रोदस्यौ रोदसी च ते ॥' इति—(अम० ना० लि० पृ० ४३८ श्लोक २२६) । 'द्यावापृथिव्यावेकोक्तौ रोदस्यौ रोदसी इति ।' इति—(वै० पृ० ३५ श्लोक· ५) । 'द्यावापृथिव्यौ रोदस्यौ रोदसौ रोदसीति च ।' विगृहीतयोदप्येते नामनी । 'रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सह प्रयोगोऽप्यनयो रोद स्यादपि रोदसी ।' इति च—(वि० प्र० पृ० १७६ श्लोक: २६) । इय-अर्चि, इदं-अर्चि=अग्निशिखा, दीप्ति, रश्मिश्च । 'शिखा जिह्वार्ऽचिरपुमान् ।' इति । 'अर्चिर्भाज्वालयोर्न ना ।' इति च—(वै० पृ० २३० श्लोक ६) । गुणे रज्जौ दामशब्दः स्त्रीक्लीबलिङ्ग स्यात् । इय दामा, इदं दाम=सन्दानम्, दोहनकाले पशुपादबन्धनरज्जु· ।

---

पाणिनीयेऽपि—(१) (अर्चिः स्त्रिया च) ॥ इसन्तत्वेऽपि अर्चिः—स्त्रियां, नपुसके च,—स्यात् । इयमिद वा—अर्चिः=ज्वाला । सि० कौ० पृ० ४०२ सू० १३६ ।

'सन्दान दामनी दामा न ना, दाम पशोस्तु या । रज्जु. सा बन्धनी' इति—(वै० पृ० १३८ श्लोक. २६, ३०) । दो अवखण्डने । दीङ् क्षये वा । मनिन् । मन इति न ङीप् । दामानौ, दामान· इत्यादि । 'डाबुभाभ्यामन्यतरस्याम्' इति डापि तु । दामा, दामे, दामा इत्यादि बोध्यम् । 'दामनी' इत्यपि । अयट्–तयट्-प्रत्ययान्तौ शब्दावपि स्त्रीक्लीबलिङ्गौ स्याताम् । यथा—इय द्वयी, इद द्वयम् = द्वितयम्, युग्मम् । "जोड़ा" "जुट्ट" इति च लोके । 'मिथुन द्वितय द्वैतं द्वयं द्वन्द्व युगं यमम् ।' इति--(वै० पृ० १८७ श्लोक १५) । इय चतुष्टयी, इद चतुष्टयम् = चतुरवयवसमुदाय· । "चार का समूह" इति लोके । चत्वारोऽवयवा यस्य ।

अथाधुना सक्षेपत. क्रमरहितानुड्वादीन् स्त्रीक्लीबलिङ्गवाचकशब्दानाह पुरुषोत्तम देव -- (त्रि० शे० पृ० ३९४ श्लोक· १६, २०) ।

स्त्रीक्लीबयो–रुडु–र्दामा छदि–र्ज्योतिः–सदो–ऽर्चिष: ।
सुखं (अथ) लक्षं वणिज्यं च बडिश–क्रोड–पाटलम् ॥
तारकं रसनं नीड—मेते टाबन्तका: स्त्रियाम् ।
ङ्यन्ता–स्तु नगरा–ऽऽस्थान–स्थलानि पाटलं पुरम् ॥ इति ॥

अनयोर्व्याख्या—

स्त्रीति । तारकमिति च । छदिरादावितरेतरयोगो द्वन्द्व: । बडिशादौ समाहारो द्वन्द्व । नगरादौ त्वितरेतरयोगो द्वन्द्व· । एते उड्वादय· शब्दा स्त्रीक्लीबयोर्भवन्ति । इयं छदि., इदं छदि: = पटलम् । "छान" "छप्पर" इति च लोके । 'चोलोऽस्त्री पटल छदि· ।' इति—(वै० पृ० १६२ श्लोक. ३७) । इयं ज्योतिषी, इद ज्योति = तारा, नक्षत्रम्, दृष्टि., नेत्रकनीनिकामध्यम् । 'ज्योतिर्भद्योतदृष्टिषु ।' इति--(अम० ना० लिं० पृ० ४३८ श्लोक: २३०) । 'ज्योतिरग्नौ दिवाकरे । पुमान्, नपुसक दृष्टौ स्यान्नक्षत्रप्रकाशयो: ।' इति च—(मे० पृ० १७१ श्लोक: २२) । इयं सुखा, इदं सुखम् = वरुणपुरी, कल्याणं च । 'सुखं शर्मणि नाके च, सुखा पुर्या प्रचेतस. ।' इति—(मे० पृ० २० श्लोक: ८) । इय क्रोडा, इदं क्रोडम् = भुजान्तरम्, रक्षश्च । 'न ना क्रोडं भुजान्तरम् ॥' इति—(अम० ना० लिं० पृ० २२९ श्लोक: ७७) । 'क्रोड: शनौ सूकरे ना, न पुमानङ्करक्षसो: ।' इति च—(मे० पृ० ४१ श्लोक: ७) । इयं पाटला, इदं पाटलम् = पाटलापुष्पम् । 'पाटला पाटलौ स्त्री स्यादस्य पुष्पे पुनर्न ना ।' इति---(मे० पृ० १५३ श्लोक· १०६) । इयं तारका, इद तारकम् = नक्षत्रम्, दृष्टि:, नेत्रकनीनिकामध्यम् । 'तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि । कनीनिकायामृक्षे च न पुमां,–स्त्रातरि त्रिषु ।' इति—(मे० पृ० ९ श्लोक. ९९) । इय नीडा, इदं नीडम् = स्थानम्,

कुलायश्च । 'नीड स्थानकुलाययोः ।' इति—(मे० पृ० ४१ श्लोक १७) । यादवामरौ तु न स्त्रियामित्याहतु —'कुलायस्तु पञ्जर नीडमस्त्रियाम् ।।' इति—(वै० पृ० ३० श्लोकः ४९) । 'कुलायो नीडमस्त्रियाम् ।।' इति च—(अम० ना० लिं० पृ० २०० श्लोकः ३७) । एते सुखादय शब्दा स्त्रियां वनितालिङ्गे टाबन्तका टाप्प्रत्ययान्ता भवन्ति, न तु ङयन्ताः । इय पुरी, इद पुरम्=नगरम् । "शहर" इति लोके । 'पूः स्त्री, पुरीनगर्य्यौ वा पत्तन पुटभेदनम् ।' इति—(अम० ना० लि० पृ० ११६ श्लोक. १) । पक्षे पुरम् । इमे नगरादयः शब्दा अपि स्त्रीलिङ्गे ङयन्ता भवन्ति । न तु टाबन्ता । शेषशब्दाना व्याख्यादयः पूर्ववद् बोध्याः ।

तथा च दुर्गसिंहोऽप्याह—(दु० लिं० पृ० ४० श्लोक ८३) ।

अर्चि–र्नगरं वृत्ताख्या बहुलं भाव-कर्म्मणो–रकणा ।
यण् स्त्रीनपुंसकाख्या, ... ... ।। इति ।।

अस्य व्याख्या—

अर्चिरिति । वृत्तानामक्षरविन्यासानां आख्या नाम । अर्चिः नगर वृत्ताख्या पुनर्बहुलमेते स्त्रीलिङ्गाख्या नपुसकलिङ्गाख्या भवन्ति । यणन्तं च भावकर्मणोर्विहितेन अकणा अकणन्तेन सह बहुल स्त्रीनपुसकलिङ्गं भवति । हरीतकादि तु सर्वलिङ्ग भवति । वक्ष्यति—"एते च सर्वलिङ्गा" इति, तेन सहास्य सम्बन्ध इष्यते । इयं—अर्चिः, इदं—अर्चि. = ज्वाला । अर्चिः सान्तः 'ज्वालाभासोर्न पुस्यर्चिः' इति—(अम० ना० लिं० पृ० ४३८ श्लोकः २३०) । 'अथार्चिर्मयूखशिखयोर्न ना ।' इति च-(मे० पृ० ७१ श्लोक. १५) । इयं नगरी, इद नगरम्=पुरम् । "शहर" इति लोके । 'पूः स्त्री, पूरीनगर्य्यौ वा' इति—(अम० ना० लि० पृ० ११६ श्लोकः १) । पक्षे नगरम् । वृत्ताख्या यणन्तं च द्विलिङ्गमुक्तम् । तथापि केचित् स्त्रिया, केचिन्नपुसके, केचित् पुंसि, केचित् स्त्रीनपुसकयोः, बहुलग्रहणात्प्रयोगत इति । वृत्तनाम यथा—समानी, प्रमाणी, कलिका इत्येवमादि स्त्रियाम्, वक्त्रं, पथ्यावक्त्रं इत्यादि नपुंसके, पुटः, पणवः, कापीड इत्यादि पुसि । इति—(दु० लिं० टी० पृ० ४० श्लोकः ८३ प० ८तः १५या०) ।

अमरसिंहस्त्विह विशेषमाह—(अम० ना० लिं० पृ० ४६२ श्लोक ३९, ४०, ४१) ।

स्त्रीनपुंसकयो–र्भाव–क्रिययोः ष्यञ् क्वचि–च्च वुञ् ।
औचित्य–मौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः ।।

पाणिनीयेपि—(१) (त्वष्यञौ तद्धितौ) ।। ष्यञः षित्त्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्य्यम्, चातुरी=चतुरस्य भावः कर्म वा । सामग्र्यम्, सामग्री=समग्रस्य भाव. कर्म वा । औचित्यम्, औचिती=उचितस्य भाव कर्म वा । सि० कौ० पृ० ४०१ सू० १२० ।

अस्य व्याख्या—

स्त्रीति। 'स्त्रीनपुसकयो' इत्यधिकार । भावश्च क्रिया च भावक्रिये तयो: भावे कर्मणि च विहित ष्यञ् वुञ् च क्वचित् योषित्क्लीबयो स्याताम् । तत्र ष्यञ् प्रत्ययमुदाहरति । उचितस्य भाव कर्म वा औचित्यम्, औचिती च। मित्रस्य भाव कर्म वा मैत्र्यम्, मैत्री वा। समग्रस्य भाव. सामग्र्यं सामग्री वा। यथाकामस्य भाव यथाकाम्यम्, यथाकामी वा । अर्हतो भाव: आर्हन्त्यम्, आर्हन्ती वा । वुञ् प्रत्ययस्तु वैरमैथुनिकादिवुन् । इत्थ प्रागुदाहृत: । तथा मिथुनस्य भाव कर्म वा मैथुनकम्, मैथुनिका वा। इत्यादय स्त्रीनपुसका । शुक्लस्य भाव: शौक्ल्यम्, दीर्घस्य भाव दैर्घ्यम्, दृढस्य भाव. दाढर्यम्, जडस्य भाव कर्म वा जाड्यम् । एव ब्राह्मण्य माणव्य वाडव्यमित्यादयो नपुसके। मनोज्ञादित्वाद् वुञ् । अहोपुरुषस्य भाव. आहोपुरुषिका। शिष्यश्चोपाध्यायश्च शिष्योपाध्यायौ, तयोर्भावि कर्म वा शैष्योपाध्यायिका। एव कुत्सकुशिकिका। गार्ग्यस्य भाव कर्म वा गार्गिका। एव काठिका इत्येवमादय. स्त्रियाम्। क्वचिन्नस्त्रीलिङ्गम्। रमणीयस्य भाव कर्म वा रामणीयकम् । मनोज्ञस्य भावो मानोज्ञकम् । एवं साहाय्यक इत्यादयो नपुसके। भावे इति किम्? चातुर्वर्ण्यम्। इह स्वार्थे ष्यञ् क्लीबे, न तु योषिति।

षष्ठ्यन्तप्राक्पदा: सेना[1]–छाया–शाला–सुरा–निशा: ।
स्याद्वा नृसेनं श्वनिशं गोशाल–मितरे च दिक् ॥

अस्य व्याख्या—

षष्ठ्यन्तेति। तत्पुरुषे तत्पुरुषसमासे षष्ठ्यन्त षष्ठीविभक्त्यन्तं प्राक्पद पूर्वपद यासा ता: षष्ठ्यन्तप्राक्पदा: सेनादय: शब्दा:। अथवा। षष्ठ्यन्तात्परा सेनादयस्तत्पुरुषे योषिति

---

पाणिनीयेऽपि—(१) (सुरासेनाच्छायाशालानिशा स्त्रियां च)॥ एता: स्त्रिया चात्क्लीबे स्यु । यवसुरा, यवसुरम्। नृसेना, नृसेनम्। कुड्यच्छाया, कुड्यच्छायम्। गोशाला, गोशालम् । श्वनिशा, श्वनिशम् । सि० कौ० पृ० ४०२ सू० १२९ ।

तत्र विशेष —(शिष्ट परवत्)। अन्यस्तत्पुरुष. परवल्लिङ्ग: स्यात्। सि० कौ० पृ० ४०२ सू० १३०। (लक्षा कोटि स्त्रियाम्)। "वा लक्षा नियुत च तत्" इत्यमरात् क्लीबेऽपि । इय लक्षा, इद लक्षम् = शतसहस्रम्। सि० कौ० पृ० ४०२ सू० १४७।

(स्थूणोर्णे नपुसके च) एते—स्त्रियां, क्लीबे च—स्त. । स्थूणा, स्थूणम्=काष्ठमयी द्विकर्णिका । ऊर्णा, ऊर्णम्=मेषादिलोम। सि० कौ० पृ० ३९७, ८ सू० २१ ।

(द्विगु: स्त्रियां च व्यवस्थया) व्यवस्थया द्विगु: स्त्रिया, क्लीबे च स्यात्। पञ्चमूली=पञ्चानां मूलाना. समाहार:। त्रिभुवनम्=त्रयाणा भुवनाना समाहार:। सि० कौ० पृ० ४०२ सू० १३४।

नपुंसके च भवन्ति । उक्तशब्दानामुदाहरण प्रसगत प्राक्प्रदर्शितम् । इहानुषङ्गत उदाहरणं प्रदर्श्यते । नृणां सेना = नृसेना । वृक्षस्य च्छाया = वृक्षच्छाया । गवां शाला = गोशाला । यवानां सुरा = यवसुरा । शुना निशा = श्वनिशा । कुड्यस्य च्छाया = कुड्यच्छाया । वेति । पक्षे—'विषाभा सेनासुराच्छायाशालानिशानाम्' (२।४।२५) इति नपुसकता । नृसेनम् । यवसुरम् । कुड्यच्छायम् । गोशालम् । श्वनिशम् । एवमितरेऽपि बोध्याः । दिक् = उदाहरणमिदम् । षष्ठी-बहुवचनान्तप्राक्पदा चेच्छाया नपुसक एवेति प्राग्दर्शितम् । क्वचिद् व्यभिचारोऽपि दृश्यते—इक्षूणां छाया = इक्षुच्छ''''' ।

आब–न्नन्तो–त्तरपदो द्विगु–श्चा–ऽपुंसि न–श्च लुप् ।
त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्य–ऽपि ।।इति ।।

अस्य व्याख्या—

आबिति । आबन्तोत्तरपदोऽन्नन्तोत्तरपदश्च यो द्विगु द्विगुसमास. स. पुसि पुलिङ्गे न भवति । परन्तु योषित्क्लीबयो· । अन्नन्तोत्तरपदस्य योऽन्त्यनकारस्तस्य लुप् लोपश्च स्यात् । तत्रादावाबन्तान्त्यपदस्योदाहरणं प्रदर्श्यते—त्रिखट्वमिति । तिस्र· खट्वा· समाहृता अथवा तिसृणां खट्वानां समाहार· त्रिखट्वम् । त्रिखट्वी च । अन्नन्तोत्तरपदो यथा—त्रयस्तक्षाण· समाहृता अथवा त्रयाणां तक्ष्णां समाहार. त्रितक्षम्, त्रितक्षी च । 'अनो नलोपश्च' (वा० २।४।३०) । इति तक्षन्-शब्दस्यान्त्यनकारो लुप्त. ।

एवमेव यादवोऽप्याह—(वै० पृ० २९२ श्लोक ३२ त· ३६ यावत्) ।

अपुंसि चालनी दाम वणिज्या–ऽश्मन्तिका स्थली ।
शरव्या–ऽर्चि–र्गुडा पत्री स्यात् कुथे वर्णतर्णका ।।

अस्य व्याख्या—

अपुसीति । 'अपुसि' इत्यधिकारः । एते चालन्यादय. पत्र्यन्ताः शब्दाः, कुथे कुथार्थे वर्ण-तर्णका च अपुसि स्त्रिया क्लीबे च स्युः । इय चालनी, इदं चालनम् = तितउ· । "चलनी" इति लोके । 'चालनी तितउ· प्रोक्ता' इति–(श० र० स० पृ० १९३ प० ११) इयं–अश्मन्तिका, इद—अश्मन्तकम् = चुल्ली । "चूल्हा" इति लोके । मल्लिकाच्छादन च । 'स्यादश्मन्तकमुद्धाने मल्लिका-च्छादनेऽपि च ।' इति—(त्रि० शे० पृ० ३१३ श्लोक. ४) । इयं शरव्या, इद शरव्यम् = वेध्यम्, लक्ष्यम् । "निसाना" इति लोके । 'वेध्य शरव्य न नरि' इति—(वै० पृ० १२० श्लोकः १९४) । 'लक्षं लक्ष्यं शरव्यं च' इति—(अम० ना० लि० पृ० २९२ श्लोक. ८६) । इय—गुडा, इदं—गुडम् = इय पत्री, इदं पत्रम् = पर्णम्, दलम् । "पत्ता" इति लोके । यानं, पक्ष च ।

'पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणो ।' इति—(मे० पृ० १२६ श्लोक ५५)। इय वर्णतर्णिका, इद वर्णतर्णकम्=कुथ, गजोपर्य्यास्तरणचित्रकम्बल । 'वर्णस्तु परिस्तोम, कुथा त्रयी।' इति—(वै० पृ० १७२ श्लोक: १६६)।

सगरी नटने कृत्या त्व—ऽभिचारजदैवते ।
मद्ये मधूलकं चे–ति क्वा–ऽप्य–ऽथा–ऽकर्मधारये ॥
अनञ्‌तत्पुरुषे सेनाच्छाया शाला निशा सुरा ।
नृसेनं पादपच्छायं गोशालं श्वनिशं यथा ॥
नृसेने–त्यादयो–ऽप्ये–वं कुत्रचिद् भाव–कर्मणोः ।
साहायकं साहायिका मैत्र्यं मैत्री च वुञ्‌–ष्यञोः ॥
द्विगु–रन्नन्त आबन्तो–ऽप्ये–वं–न–श्चा–ऽत्र लुप्यते ।
यथा त्रितक्षं त्रितक्षी त्रिखट्वं च त्रिखट्व्य–ऽपि ॥ इति ॥

एषा व्याख्या—

सगरीति । नटने नृत्ये सगरी, अभिचारदैवते कृत्या, मद्ये मदिराया मधूलकं चेति क्वापि कुत्रापि स्त्रीक्लीबयो स्यु । इय सगरी, इद सगरम्=नृत्यम्, नाट्यम् । "नाच" इति लोके । इयं कृत्या, इदं कृत्यम्=अभिचारजदैवतम्, अभिचारोत्पन्नदेवता, देवतानाम-सद्दैवतविशेष. । 'कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ।' इति—(अम० ना० लि० पृ० ४२४ श्लोक १५८) । 'कृत्यो विद्विषि कार्ये च, कृत्या क्रियादिवौकसोः ।' इति च रभसः' इति—(अम० सु० व्या० पृ० ४२४ स्त० १ प० ३७-८) । इय मधूलिका, इदं मधूलकम्=मद्यम्, मदिरा, सुरा । "शराब" इति लोके । 'मधूलकोऽजातमद्ये दीर्घपत्रे, मधूलिका । नि.शूकदीर्घगोधूमाम्भोजामधुरसासु च ॥' इति—(शि० को० पृ० ७ श्लोकः ६७) । अथेति । अकर्मधारये कर्मधारयसमासवर्जिते, अनञ्‌ तत्पुरुषे नञ्‌ रहिततत्पुरुषसमासे च सेनादयः शब्दा स्त्रीक्लीबयोः स्युः । यथा नृसेनम् । पादपच्छायम् । गोशालम् । श्वनिशम् । एवं नृसेनेत्यादयोऽपि बोध्याः । कुत्रचित् क्वापि, भावकर्मणो भावे कर्मणि च वुञ्‌ष्यञोः अर्थाद् वुञ्‌ ष्यञ्‌ प्रत्ययान्ता. शब्दा अपि स्त्रीनपुसकयो. स्यु । यथा—साहायक साहायिका, मैत्र्यं मैत्री च । योऽन्नन्तोऽन्प्रत्ययान्तो द्विगुः द्विगुसमास., एवं आबन्त आप्प्रत्ययान्तश्च स्त्रीनपुंसकयोर्भवत । अत्र न. लुप्यते। यथा—त्रितक्षम् त्रितक्षी । एवम्—त्रिखट्वम्, त्रिखट्वी इत्यादि ।

इति स्त्रीक्लीबलिङ्गानुशासनम् ।

## अथ त्रिलिङ्गानुशासनम् ।

अथाधुना सरकादीनाभरणाभिधान्तान् स्वतस्त्रिलिङ्गवाचकशब्दानाह हेम—(अभि० सं० लि० पृ० ९ श्लोक. १२८-९) ।

स्वत–स्त्रिलिङ्गः, सरको—ऽनुतष, शललः शले ।
करको–ऽब्दोपले, कोशः शिम्बाखड्गपिधानयोः ।।१।।
जीव प्राणेषु, केदारे वलजः, पवने खलः ।
बहुलं वृत्त–नक्षत्र–पुरा–ऽऽद्या–ऽऽभरणा—ऽभिधा ।।२।।

अनयोर्व्याख्या—

स्वत इति । जीव इति च । 'स्वतस्त्रिलिङ्ग' इत्यधिकार । अनुतर्षे सरक, शले शलल, अब्दोपले करक, शिम्बाखड्गपिधानयोः कोश, प्राणेषु जीव, केदारे वलज, पवने खलश्चैते शब्दा उक्तार्थेषु स्वतस्त्रिलिङ्गा भवन्ति । यथा—सरकः, सरका, सरकम्=अनुतर्षः, शीधुपानम् । 'सरको मदिरापात्रे मदिरापानमद्ययो ।' इति—(अने० स० पृ० ५७ श्लोक. १०५)। 'सरक चषक चास्त्री' इति । 'मणौ शीधौ(थौ) शीधु(थु) पाने सरक मद्यभाजने ।' इति च— (वै० पृ० २५३ श्लोक ३८) ।'सरकोऽस्त्री शीधुपाने शीधुपात्रेक्षुशीधुनो । अच्छिन्नाध्वगपक्तौ च' इति च—(मे० पृ० १४ श्लोक. १६८) ।। शलल, शलली, शललम्=श्वाविल्लोम । "साही रोम" "सेही रोम" इति च लोके। 'अथ शल्ये शललशल्यकौ । श्वाविच्च तच्छलाकाया शलल शलमित्यपि ।' इति—(अभि० स० अभि० चिं० पृ० ४९ श्लोक १२६६) । करक, करका, करकम्=अब्दोपल, मेघोपल । 'करको दाडिमे पक्षिभेदे हस्ते कमण्डलौ । लट्वाकरञ्जयोर्मेघोपले च' इति—(अने० स० पृ० ५० श्लोकः १४) । 'वर्षोपलस्तु करका' इति—(अम० ना० लि० पृ० ३४ श्लोकः १२) । 'पुस्यपि ।' 'वर्षोपलस्तु करका करकोऽपि च दृश्यते ।' इति—(अ० व्या० पृ० ३४ श्लोकः १२)। करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले, न स्त्री करङ्के च कमण्डलौ ।' इति च—(मे० पृ० ५ श्लोक ५४-५) । कोश., कोशी, कोशम्=शिम्बा, खड्गपिधानं च। 'कोश. कोष

---

पाणिनीयेऽपि—(१) (अवशिष्टलिङ्गम्) ।। सि० कौ० पृ० ४०४ सू० १८४।

इवाण्डके । कुड्मले चषके दिव्येऽर्थचये योनिशिम्बयो । जातीकोशेऽसिपिधाने' इति (अने० स० पृ० ४४-५ श्लोक ५५९, ५६०) । जीव, जीवा, जीवम् = प्राणा । 'जीव स्यात्त्रि-दशाचार्य्ये द्रुमभेदे शरीरिणि । जीवितेऽपि च, जीवा तु वचाया धनुषो गुणे । शिञ्जिते क्षितिजीवन्त्योर्वृत्तौ' इति--(अने० स० पृ० ४३ श्लोक ५३४) । वलज, वलजा, वलजम् = केदारः, क्षेत्रम् । "खेत" इति लोके । 'वलज गोपुरे सस्ये क्षेत्रसङ्गरयोरपि । सदाकारे, वलजा तु पृथिव्यां वरयोषिति ।' इति--(अने० स० पृ० ६० श्लोकः १४७) । खल., खला, खलम् = पवनम् । "पछोरना" "फटकना" इति च लोके । 'खल कल्के भुवि स्थाने क्रूरे कर्णजपेऽधमे ।' इति--(अने० स० पृ० ४० श्लोक ४६४) । 'खल भूस्थान-कल्केषु, नीचक्रूराधमे त्रिषु ।' इति--( मे० पृ० १४५ श्लोक ११ ) । 'अथ खलं सस्यस्थाने, शठे त्रिषु ।' इति च--(त्रि० शे० पृ० ३७१ श्लोक ३६०) । बहुल, बहुला, बहुलम् = प्राज्यम्, कृष्णवर्णश्च । 'बहुला नीलिकाया स्यादेलाया गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि, विहायसि नपुंसकम् । पुस्यग्नौ कृष्णपक्षे, व वाच्यवत्प्राज्यकृष्णयो ।' इति--(मे० पृ० १५३ श्लोक ११७) । 'अथवा' बहुल' लक्ष्यानुसारेण शब्दाना प्रयोग कार्यः । वृत्त च नक्षत्रं च पुरं च आद्य च आभरण च वृत्तनक्षत्रपुराद्याभरणानि, तेषां अभिधा सञ्ज्ञा त्रिषु स्यात् । वृत्त, वृत्ता, वृत्तम् = अधीतम्, अतीत च । 'वृत्तोऽधीतेऽप्यतीतेऽति (पि) वर्त्तुलेऽपि वृते मृते(मृते वृते) । दृढेऽन्यलिङ्ग, वा क्लीब छन्दश्चारित्रवृत्तिषु ।' इति--(मे० पृ० ५८ श्लोकः ६१) । नक्षत्र , नक्षत्रा, नक्षत्रम् =
पुरः, पुरी, पुरम् = शरीरम्, गृहम्, पुर च । 'पुर नपुसक गेहे देहपाटीलपुत्रयो ॥ पुष्पादीना दलावृत्तौ, ना गुग्गुलौ, न ना पुरि ।' इति--(मे० पृ० १२७ श्लोक. ५८, ५९) । आद्य, आद्या, आद्यम् = आदिभवम्, प्रथमम्, अदनीय च । 'आद्य आदिभवे मुख्ये भक्ष्ये चापि त्रिलिङ्गकः । पूर्वेऽप्या--ऽऽद्या विधात्राद्या, उत्तरे वाच्यलिङ्गक ।' इति-(ना० र० मा० पृ० ४५ प० १०-१)। 'पुंस्यादिः पूर्वयौरस्त्यप्रथमाद्या ' इति च-(अम० ना० लिं० पृ० ३७५ श्लोक ८०) । आभरणः, आभरणाः, आभरणम् = । 'अलङ्कारस्तु भूषणम् । परिष्काराभरणे च' इति--(अभि० सं० अभि० चि० पृ० २८ श्लोक ६४९, ६५०) । 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ।।' इति च--(अम० ना० लि० पृ० २३८ श्लोकः १०१) ।

अथ सम्प्रति कान्तादीन् हान्तान्तानिकारान्तमुकारान्तौ च क्रमसहितान् स्वतस्त्रिलिङ्ग-वाचकशब्दानाह हेमः--(अभि० सं० लि० पृ० ६१ श्लोक १३०त १३३ या०) ।

भल्लातक आमलको हरीतक--विभीतकौ ।
तारका--ऽऽढक--पिटक--स्फुलिङ्गा विडङ्ग--तटौ ॥३॥

सु० व्या० पृ० २२० स्त० १ प० १२) । स्फुलिङ्ग, स्फुलिङ्गा, स्फुलिङ्गम् = अग्निकण: । "अँगारी" "शोला" इति वा लोके। 'त्रिषु स्फुलिङ्गोऽग्निकण.' इति--(अम० ना० लिं० पृ०.२४ श्लोक ५७)। विडङ्ग, विडङ्गा, विडङ्गम् = अभिज्ञ । 'विडङ्गस्त्रिष्वभिज्ञे, स्यात्क्रमिघ्ने पुन्नपुसकम् ।' इति---(मे० पृ० २५ श्लोक ४७)। तट, तटी, तटम् = कूल, प्रतीरम्, नद्यादेस्तीरम्। 'तट नपुसक क्षेत्रे, प्रतीरे तु तटी त्रिषु ।' इति—(मे० पृ० ३४ श्लोक १५)। पट, पटी, पटम् = तिरस्करिणी, यवनिका, वस्त्रविशेषश्च। 'प्रियालुवसने पटौ ।' इति—(ना० र० मा० पृ० १६ प० ५) । 'पट पियालवृक्षे स्यात्पटे चित्रपटेऽपि च ।' इति च—(श० र० स० पृ० ८५ प० १०) । पुट, पुटी, पुटम् = करण्डी, पत्रादिनिर्मितपुष्पाद्याधार "पुडिया" "पुड़ी" इति च लोके। 'करण्डी तु पुटी त्रयी ।' इति--(वै० पृ० १३८ श्लोक ३३) । वट, वटी, वटम् = रज्जु, गुण । शणनिर्मिततन्तुश्च। 'न ना शुल्बा, वटी त्रयी ।' इति—(वै० पृ० १३८ श्लोक: ३०) । वाट, वाटी, वाटम् = आवरणम्, वेष्टितस्थलम्। 'वाटो मार्गे वृतिस्थले। वाटी वनविशेषे स्यात्,' इति--(श० र० स० पृ० ८६ प० १०) । 'वाट', पथि वृतौ, वाट वरण्डेऽङ्गान्तभेदयो: । वाटी वास्तौ गृहोद्यानकट्यौ' इति च--(अने० स० पृ० १० श्लोक ९९) । कपाट, कवाट, कपाटी, कवाटी, कपाटम्, कवाटम् = द्वारपिधानम्, द्वाररोधक, काष्ठखण्ड । 'कवाट द्वारबन्ध' इति--(वै० पृ० १६२ श्लोक ४३) । 'कवाट च कुवाट च कपाटे कथित बुधै. ।' इति--(श० र० स० पृ० ८८ प० ६) । 'कवाटश्च कपाटश्च त्रिषु, स्यादरर न ना ।' इति च वाचस्पति' इति--(अम० सु० व्या० पृ० १२२ स्त० १ प० १९) । कट, कटी, कटम् = क्रियाकार: । 'कट: श्रोणौ क्रियाकारे कलिञ्जेऽतिशये शवे । समये गजगण्डेऽपि, पिप्पल्या च कटी मता ।' इति--(वि० प्र० पृ० ३६ श्लोक १) । 'श्रोण्या भृशे कलिञ्जे गजगण्डे शवरथे शवे च कट ।' इति—(वै० पृ० २३१ श्लोक: १८) । 'अथ कटो गजगण्डे कटौ भृशे। शवे शवरथौपध्यो क्रियाकारश्मशानयो । किलिञ्जे समये चापि' इति च— (अने० स० पृ० ८, ६ श्लोक ८२-३) । पेट:, पेटी, पेटम् = सघातक:, कदम्बक:, समूह. । 'पेटी पुटी पटी, वाटी' इति--(वै० पृ० २९२ श्लोक ३७) । 'पेटक पुस्तकादीना मञ्जूषाया कदम्बके ।' इति च—(मे० पृ० ११ श्लोक: १२७) । मठ:, मठी, मठम् = आश्रमविशेष., तपस्विना स्थानम् । 'मठी स्थाने तपस्विनाम् ।' इति–(वै० पृ० २९२ श्लोक. ३६) । कुण्ड., कुण्डी, कुण्डम् = जारात्पतिवत्नीसुत, कमण्डलु, अग्न्यालय, मानभेद:, देवजलाधारश्च। 'कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्। पिठरे तु न ना' इति--(मे० पृ० ४० श्लोक ४) । नीड, नीडा, नीडम् = खगालय, स्थान च । 'नीड स्थाने खगालये ।' इति—(अने० सं० पृ० १२ श्लोक १२३) । विषाण, विषाणी, विषाणम् = पश्वङ्गविशेष., शृङ्गम् । 'सींग' इति लोके। गजदन्तश्च । "हाथी दाँत" इति लोके। 'विषाणस्त्रिषु लिङ्गेषु पश्वङ्गगजदन्तयो. ।' इति-- (वै० पृ० १६३ श्लोक ८२) । 'विषाणी क्षीरकाकोल्यामजशृग्यां

च योषिति। कुष्ठनामौषधे क्लीब, त्रिषु शृङ्गे मदन्तयो ।' इति च--(मे० पृ० ५० श्लोक ७७)। तूण, तूणी, तूणम्=निषङ्ग, तूणीर, इषुधि. । "तरकस" इति लोके। 'तूणी नीलि-निषङ्गयो.।' इति--(अने० स० पृ० १३ श्लोक १४५)। 'तूणी निल्या निषङ्गे वा' इति च--(मे० पृ० ४६ श्लोक १६)। कङ्कत, कङ्कती, कङ्कतम्=प्रसाधनी, कङ्कतिका। "कंघी" इति लोके। 'केशप्रसाधनद्रव्ये कङ्कती समुदाहृता।' इति— (श०. र० स० पृ० १४० प० १०)। मुस्त, मुस्ता, मुस्तम्=ओषधिविशेष· । "मोथा" इति लोके। 'कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ।।' इति--(अम० ना० लि० पृ० १८२ श्लोक· १५९)। 'कुथ, कुथा, कुथम् =गजोपर्य्यास्तिरणचित्रकम्बल । "गलीचा" "दुलीचा" इति च लोके। 'वर्णस्तु परिस्तोमः कुथा त्रयी।' इति--(वै० पृ० १७२ श्लोक १६६)। 'कुथ त्रिषु।' इति च बोपालित·' इति--(अम० सु० व्या० पृ० २७९ स्त० २ प० २४)। इङ्गुद, इङ्गुदी, इङ्गुदम्=तापसतरु, मुनि-द्रुम. । "हिङ्गोटा" "इङ्गुआ" इति च लोके। 'अथ द्वयो ।। इङ्गुदी तापसतरु' इति—(अम० ना० लि० पृ० १४४ श्लोक ४५-६)। जृम्भ, जृम्भा, जृम्भम्=जृम्भणम्। "जँभुआना" इति लोके। 'जृम्भस्तु त्रिषु, जृम्भणम् ।' इति— (अम० ना० लि० पृ० ८५ श्लोकः ३५)। 'जृम्भा विकासजृम्भणयोस्त्रिषु।' इति च-- (मे० पृ० १०६ श्लोक ४)। दाडिमः, दाडिमी, दाडिमम्=दाडिमवृक्षः। 'दाडिमस्तु त्रिलिङ्ग स्या,-देलाया, करके त्रिषु।'· इति—(मे० पृ० १११ श्लोक ४४)। 'पिठर स्थाल्या ना, क्लीब मुस्तामन्थानदण्डयोः ।।' इति--(मे० पृ० १३६ श्लोक १८४)। प्रतिसर, प्रतिसरा, प्रतिसरम्=नियोज्य·, प्रेष्य, भृत्यः। "नौकर" इति लोके। 'भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे। व्रणशुद्धौ चमूपृष्ठे पुंसि, न स्त्री तु मण्डले। आरक्षे करसूत्रे च, नियोज्ये त्वन्यलिङ्गक ।' इति—(मे० पृ० १४२ श्लोक २७६)। पात्र, पात्री, पात्रम्=भाजनम् । "वर्तन" इति लोके। 'पात्रं स्रुवादौ पर्णे च भाजने राज-मन्त्रिणि ।' इति। 'पात्र तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि।' इति पाठान्तरम् ।' इति—(मे० पृ० १२६ श्लोक ५७)। 'योग्यभाजनयोः पात्रम्' इति च--(अम० ना० लिं० पृ० ४२८ श्लोकः १७९)। कन्दर, कन्दरा, कन्दरम्=गुहाकारो गिरिनितम्बदेशः, गुहा, आर्द्रक च। 'कन्दरस्त्वङ्कुशे पुंसि, गुहाया च नपुंसकम् ।' इति--(मे० पृ० १३२ श्लोकः १३२)। 'दरी तु कन्दरो वा स्त्री' इति च--(अम० ना० लि० पृ० १२६ श्लोकः ६)। स्त्रिया टाप्। तथा च प्रयोग —'कन्दरासु तरुणीरिह नयति रवि ' इति माघ.' इति—(अम० सु० व्या० टि० पृ० १२६ स्त० १ प० ४१)। 'कन्दर्य्यपि'। 'दरी' गुहा कन्दरोऽक्ली' इति। 'कलशी कन्दरी दरी।' इति च--(वै० पृ० ४१ श्लोकः ६)। नखर, नखरा, नखरम्= नखः। "नाखून" इति लोके। 'नखर त्रिषु।' इत्यमरमाला' इति--(अम० सु० व्या० पृ० २३१ स्त० २ प० २४)। वल्लूर, वल्लूरा, वल्लूरम्=शुष्कमांसम्, सूकरमांसं च।

'विदण्डस्त्वर्गला त्रयी ।' इति च—(वै० पृ० १६३ श्लोक ५०)। शृङ्खल, शृङ्खला, शृङ्खलम् = निगडम्, बन्धनम्। 'शृङ्खला पुस्कटीवस्त्रबन्धे च, निगडे त्रिषु ।' इति—(मे० पृ० १५५ श्लोकः १४१)। कन्दल , कन्दली, कन्दलम् = कपालः, उपराग, नवाङ्कुरः, कलध्वनिश्च। 'कन्दल त्रिषु कपालेऽप्युपरागे नवाकुरे। कलध्वनौ, कन्दली तु मृगगुल्मप्रभेदयो ।' इति—(मे० पृ० १५० श्लोक ६९, ७०) । पूल, पूली, पूलम् = बद्धतृणसञ्चयविशेष, तृणपञ्चिका । "गट्ठा" "मुट्ठा" "बण्डल" इति च लोके। 'पूलोऽस्त्री तृणपञ्चिका ।' इति—(वै० पृ० १२८ श्लोक ६४)। अवहेल, अवहेला, अवहेलम् = अनादर । 'रीढावमाननावज्ञाप्यवहेलमसूर्क्षणम् ।' इति—(वै० पृ० ९७ श्लोक १७२) । कलश , कलशी, कलशम् = जलाधारविशेष, घट । "घडा" "कलसा" इति च लोके। निपो घट कुट कुम्भः करीर कलशी त्रयी ।' इति—(वै० पृ० १६३ श्लोक ५८) । 'कलस' इति दन्त्यसकारान्तोऽपि । 'कलस कलशोऽपि च ।।' इति—(श० भे० प्र० पृ० ४ श्लोक १८) । एव गौडोऽपि । 'कटाह , कटाही, कटाहम् = कर्पर, महिषी-शिशु, द्वीपभेदश्च । 'कटाहो दशलालिक. ।' इति । 'कटाह कर्परो लट्व' इति च—(वै० पृ० १६३ श्लोक ५६) । 'सूपे च पाकपात्रे च कटाहो महिषीशिशौ ।' इति—(त्रि० शे० पृ० ३८१ श्लोक ४५८)। 'जायमानविषाणाग्रे कटाहो महिषीशिशौ ।' इति । 'कटाहो निरयेऽपि च ।' इति च—(हा० व० पृ० ४०८ श्लोक २६१) । 'कटाहो घृततैलादिपाकपात्रेऽपि कर्परे । स्तूपे कटाह. कूर्मपृष्ठे च महिषीशिशौ ।' इति—(वि० प्र० पृ० १८० श्लोक १६) । 'कटाह कूर्मकर्परे। द्वीपस्य प्रभेदे स्यात्तैलादे पाकभाजने ॥ जायमानविषाणाग्रमहिषीशावकेऽपि च ।' इति च—(मे० पृ० १७६ श्लोक १५) । अय षष्ठ, इय षष्ठी, इद षष्ठि = षण्णा पूरणी । "छठवाँ" इति लोके । 'षष्ठी कात्यायनीतिथ्यो, स्त्रिषु षण्णां च पूरणे ।' इति—(मे० पृ० ३९ श्लोक ९) । अयं रेणु , इय रेणु , इद रेणु = धूलि । "धूल" इति लोके। 'रेणु स्त्रीपुसयोर्धूलौ पुलिङ्ग पर्पटे पुनः ।' इति—(मे० पृ० ४६ श्लोक २५) । 'रेणुस्तु पर्पटे । धूलो पुष्परागे च' इति च—(श० र० स० पृ० १०७ प० ४, ५) । अय इषु , इय इषु, इद इषु = बाण । "तीर" इति लोके। 'पत्री रोप इषुर्द्वयो ।' इति—(अम० ना० लिं० पृ० २६२ श्लोकः ८७) ।

अथाधुना सक्षेपतः कान्तादीन् क्रमरहितान् स्वतस्त्रिलिङ्गवाचकशब्दानाह दुर्ग—(दु० लिं० पृ० ४०-१-२ श्लोक. ८३-४-५) ।

... ... हरीतक–विभीतक–तट–पुटम् ।।
पेट–कवाट–वट–मठं दर–भल्लातक–विषाण–वल्लूरम् ।
शृङ्खल–पुरा–ऽऽमलक–वाट–मण्डल-कलश-कुवल-पात्रम् ।।
एते च सर्वलिङ्गाः' — — — ।।इति।।

अस्य व्याख्या—

हरीतकेति। पेटेति । एत इति च। हरीतकादौ, पेटादौ, दरादौ, शृखलादौ च समाहारो द्वन्द्व । 'सर्वलिङ्गा.' इत्यधिकार । एते हरीतकादयः पात्रपर्य्यान्ता शब्दा सर्वलिङ्गा त्रिलिङ्गा भवन्ति। एषां व्याख्यादयस्तु प्राग्वद् बोध्या।

अथ सम्प्रति सक्षेपत क्रमरहितान् प्रतिसरादीन् दाडिमान्तान् स्वतस्त्रिलिङ्गवाचकशब्दा-नाह पुरुषोत्तमदेव—(त्रि० शे० पृ० ३९४-५ श्लोक २१ तः २४ या०)।

त्रिलिङ्ग्यां तु प्रतिसर—स्फुलिङ्ग–नखरा–ऽर्गलाः।
कन्दरं शृङ्खलं नालं वल्लूर–फल—मुस्तकाः॥
जृम्भ–श्च टाम्बन्ता एते स्त्रिया–मथ विभीतकः।
हरीतका–ऽऽढक–तट–कवाटा–श्च गुणो वटः॥
मण्डलं शलभं भल्लातकं कलश—कन्दलौ।
मृणाला–ऽऽमलकौ दाडिम–श्च ङ्यन्ताः स्त्रिया–मिमे॥

एषा व्याख्या—

त्रिलिङ्ग्यामिति। जृम्भ इति। मण्डलमिति च। 'त्रिलिङ्ग्याम्' इत्यधिकार ॥ प्रतिसरादौ, वल्लूरादौ, हरीतकादौ, कलशादौ, मृणालादौ चेतरेतरयोगो द्वन्द्वः। एते प्रतिस-रादयो दाडिमान्ता शब्दा. त्रिलिङ्ग्यां नृस्त्रीक्लीबलिङ्गेषु भवन्ति। फल., फली, फलम्= अस्थिखण्ड., नागकेसरः, प्रयोजनम्, फलवान्, कुसुमादिसम्भवश्च । "फलवाला" इति लोके। फलान्यस्य सन्ति। 'फल फले धने बीजे निष्पत्तौ भोगलाभयो.। सस्य' इति केशव' इति–– (श० चिं० पृ० ३३२ स्त० १ पं० ८,९)। "लाभनिष्पत्तिभोगेषु बीजे फाले धने फलम्। फली ताम्रादिफलके' इति––(वै० पृ० २३४ श्लोक. ५२)। 'फल हेतुसमुत्थे स्यात्फलके व्युष्टलाभयो। जातीफले च कङ्कोले सस्यबाणाग्रयोरपि। फलिन्या तु फली योषा त्रिफला-यामपीष्यते।' इति च––(श० र० स० पृ० २९८ प० १७)। मुस्तक, मुस्तका, मुस्तकम् =ओषधिविशेष., मुस्ता। "मोथा" इति लोके। 'मुस्तायां मुस्तक न स्त्री' इति––(वै० पृ० ६१ श्लोकः २००)। 'कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्।' इति च––(अम० ना० लिं० पृ० १८२ श्लोकः १५९)। एते प्रतिसरादयः शब्दाः स्त्रिया टाप्प्रत्ययान्ता भवन्ति, न तु ङीबन्ता इत्यर्थ.। गुणः, गुणी, गुणम्=गुणविशिष्ट., गुणवान्। 'गुणो मौर्व्यामप्रधाने रूपाद्यौ सूद इन्द्रिये। त्यागशौर्य्यादिसन्ध्यादिसत्त्वाद्यावृत्तिरज्जुषु। शुक्लादावपि बृद्धयां (वट्यां) च' इति—(मे० पृ० ४५ श्लोकः १०)। 'मौर्वीसूदवृकोदरतन्त्वावृत्तीन्द्रियेषु रूपादौ।

सत्त्वादौ सन्ध्यादौ त्यागादावप्रधानके च गुण ।' इति च--(ना० र० मा० पृ० २४ प० ५,६) । शलभ , शलभी, शलभम् = कीटभेद, पतङ्गश्च । 'पतङ्ग. शलभ समौ ।' इति--(वै० पृ० २६ श्लोकः ४३) । शेषशब्दाना व्याख्या प्राक्कथिता । इमे विभीतकादय शब्दा स्त्रिया स्त्रीलिङ्गे ङ्यन्ता ङीप्प्रत्ययान्ता भवन्ति ।

करणे ल्युट् त्रिषु, यथा तस्य व्याख्यान इत्य-ऽद: ।
सूत्रकृद् भाष्यकृत् को-ऽसा-वनुमान इती-च्छति ।।" इति ।।

अस्य व्याख्या—

करण इति । करणे करणकारके ल्युट् ल्युट्प्रत्ययान्तं पद त्रिषु स्त्रीपुन्नपुसकलिङ्गेषु । स्यादिति शेष । यथा—तस्य व्याख्यान इति "तस्य व्याख्यान इति च व्याख्यातव्यनाम्न (४।३।६६)" इति अद पाणिनीयसूत्रमुदाहरणं भवति । सूत्रकृत् सूत्रकारक पाणिनि । भाष्यकृत् भाष्यकारक पतञ्जलिश्च "कोऽसावनुमान" "इति" "भूवादयो धातव । १।३।१" इति सूत्रे भाष्ये अनुमानशब्द पुल्लिङ्ग प्रायुङ्क्त' इति—(त्रि० शे० टी० पृ० ३९५ प० ३२त: ३६या०) ।

तथा च यादव —(वै० पृ० २९२ श्लोक ३७-८-९) ।

त्रिलिङ्ग्यां तु क्वचि-च्छुङ्गा कलशी कन्दरी दरी ।
पेटी पुटी पटी वाटी कवाटी पिटका वटी ।।
अर्गला दाडिमी पात्री विडङ्गा कुवली तटी ।
मृणाली कन्दली नाली मुस्ता जृम्भा हरीतकी ।।
त्रिजातकी गन्धिधना मठी स्थाने तपस्विनाम् ।।" इति ।।

एषा व्याख्या—

त्रिलिङ्ग्यामिति । अर्गलेति । त्रिजातकीति च । 'त्रिलिङ्ग्याम्' इत्यधिकार । एते शुङ्गादयो मठचन्ता आबन्ता ङीबन्ता स्त्रीलिङ्गा शब्दा. क्वचित् त्रिलिङ्ग्या पुस्त्रीनपुसकलिङ्गेषु भवन्ति । यथा—शुङ्ग , शुङ्गा, शुङ्गम् = पत्रकोसिका । "कली का कोष" इति लोके । 'पर्णं बर्हं पतत्र च, त्रयी शुङ्गाऽस्य (पत्रस्य) कोसिका ।' इति-(वै० पृ० ४६ श्लोक. १७) । त्रिजातकः, त्रिजातकी, त्रिजातकम् = गन्धधना, गन्धसमूह , त्रिसुगन्धिः, तुल्यानि त्वगेलापत्रकाणि । 'त्रिगन्ध-मेलात्वक्पत्रैस्त्रिसुगन्ध त्रिजातकम् ।' इति--(वै० पृ० १७१ श्लोक. १५०) । मठ, मठी, मठम् = तपस्विना स्थानम् । इहान्येषां शब्दाना व्याख्या प्राग्वद् बोध्या ।

अमरोऽपि—(अम० ना० लि० पृ० ४६२ श्लोक ४२) ।

'त्रिषु पात्री पुटी वाटी, पेटी कुवल–दाडिमौ ॥' इति ॥

अस्य व्याख्या—

त्रिष्विति । कुवलादौ चेतरेतरयोगो द्वन्द्वः । 'त्रिषु' इत्यधिकार । एते पात्र्यादय शब्दाः स्वतस्त्रिलिङ्गा स्यु । एषा शब्दानां व्याख्या तु प्राग्वद् बोध्या ।

इति स्वतस्त्रिलिङ्गानुशासनम् ।

## अथाभिधेयवल्लिङ्गानुशासनम्

अथाधुनाऽभिधेयवल्लिङ्गज्ञानमाह यादव —(वै० पृ० २९२-२ श्लोक ३९त. ४९या०)।

गुण–द्रव्य–क्रिया–युक्तं ब्रुवन्तो वाच्यलिङ्गकाः ॥
येना–ऽर्थः प्रस्तुतो नाम्ना तल्लिङ्गं वाच्यलिङ्गकम् ।

अस्य व्याख्या—

गुणेति । गुणश्च द्रव्य च क्रिया च गुणद्रव्यक्रियास्ताभिर्यद् युक्त तद् वाच्यलिङ्गका अभिधेयलिङ्गा ब्रुवन्त कथयन्त । येन नाम्ना सज्ञया अर्थ. प्रस्तुतो भवति तल्लिङ्ग वाच्यलिङ्गकं अभिधेयलिङ्ग स्यात् । उदाहरणानि तु लिङ्गानुशासनपरिशिष्टेऽमरोक्तौ वक्ष्यति ।

न त्रिषु स्यु–र्विशिष्टार्थस्पर्शिनः पङ्कजादयः ।
भेद्यनिष्ठत्व——मेकार्थवृत्तिमात्रैककारणम् ॥

अस्य व्याख्या—

नेति । ये पङ्कजादय पद्मप्रभृतयो विशिष्टार्थस्पर्शिनः प्रसिद्धार्थवाचिन , ते त्रिषु नृस्त्रीक्लीबलिङ्गेषु न स्यु. । इहैकार्थवृत्तिमात्रैककारण भेद्यनिष्ठत्वं विशेष्यनिष्ठता स्यात् ।

अतंत्रीकृत्य भेदोक्तिः कैश्चि–दाश्रीयते पुनः ।
ते स्यु–रर्थसमा यद्वत् सत्त्वाद्या वाक्यगोचराः ।

अस्य व्याख्या—

– अतंत्रीकृत्येति ।॰ या भेदोक्ति. विशेषव्याहार अतत्रीकृत्य पुन. कैश्चिद् आश्रीयते, यद्वद् वाक्यगोचराः सत्त्वाद्या तद्वत्तेऽर्थसमा. स्यु. ।

मर्चचिका मतल्लिका प्रकाण्ड–मुद्घ–तल्लजौ ॥
अमीषु ना–ऽर्थलिङ्गता प्रशस्तवाचकेष्व–ऽपि ॥

अस्य व्याख्या—

मर्चचिकेति । मर्चचिका, मतल्लिका, प्रकाण्डम्, उद्घ, तल्लजश्चामीषु पञ्चसु प्रशस्त-वाचकेषु कल्याणवाचकेष्वपि अर्थलिङ्गता न स्यात्, अर्थादेते तु पञ्च नित्य द्रव्ये एव लिङ्गान्तरेण सामानाधिकरण्येऽपि स्वलिङ्ग न जहति (प्रशसावचनैश्च ॥ २।१।६६ ॥) इति समास । कृष्ण-सर्पवाप्यश्वादिवदेते नित्यसमासा । यथा—प्रशस्त पुरुष = पुरुषमतल्लिका । प्रशस्तो ब्राह्मणः = ब्राह्मणमचर्चिका । प्रशस्ता गौ = गोप्रकाण्डम् । प्रशस्तो मनुष्य = मनुष्योद्घ । प्रशस्ता कुमारी = कुमारीतल्लज । प्रकाण्ड पुस्यपि । 'प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तरो । शस्त' इति–(मे० पृ० ४२ श्लोक ३१) । 'अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयो ।' इति च रसभ' इति—(अम० सु० व्या० पृ० ५३ स्तं० २ प० २०-१)

योनिसम्बन्धवाचिन्यः पुत्राद्याः पुगिरो नरि ॥
मात्राद्याः स्त्रीगिरः स्त्रीत्वे विद्यासम्बन्धगोचराः ।
आचार्य्य-त्वि-गुपाध्याय-शिष्या याज्यार्थिका-स्तथा ॥
शास्त्रार्था वैदिकार्था–श्च स्थपति–श्रोत्रियादयः ।
अधिकारकृता मंत्रि–स्थापत्याद्यभिधा–स्तथा ॥
भट्टारको भट्टरकः भट्ट–स्तत्रभवान् भवान् ।
भगवान् पूज्यपाद–श्च देवा–श्चा–ऽर्चार्थिका-स्तथा ॥
शत्रु-मित्र-ज्ञ-शिल्प्यर्थाः प्राय–स्तद्व–न्न तु त्रिषु ।

एषा व्याख्या—

योनीति । या योनिसम्बन्धवाचिन्य पुगिर पुत्राद्याः सुताद्यास्ते नरि पुसि स्युः । एव या योनिसम्बन्धवाचिन्य' स्त्रीगिर मात्राद्या जनन्याद्यास्ता स्त्रीत्वे स्त्रिया स्यु. । ये विद्यासम्बन्धगोचरा आचार्य्या = मंत्रव्याख्याकृतः । ऋत्विजः = याजका', पुरोहिताः । उपा-ध्याया. = अध्यापका । शिष्या = अन्तेवासिन., शासनयोग्या. । तथा याज्यार्थिकाः = यजमान-वाचकाः । शास्त्रार्थ' = शास्त्रवाचका' । वैदिकार्थाः = वैदिकवाचकाः । स्थपतय = बृहस्पतिसव-कर्त्तारः, जीवेष्टियाजकाश्च । श्रोत्रिया. = छान्दसा', अधीतवेदा । ये अधिकारकृता मंत्रिणः = धीसचिवा', अमात्याः । स्थापत्याः = राज्ञां स्त्र्यागारे बहीरक्षाकृताः । भट्टारकः, भट्टरकः, भट्ट, तत्रभवान्, भवान्, भगवान्, पूज्यपादश्चैते मान्यव्यक्तिवाचकाः । देवाः = सुरा. । अर्चा-र्थिका. = पूजावाचका । तथा शत्रुवाचका., मित्रवाचका पण्डितवाचका, शिल्पिवाचका-श्चैते त्रिषु त्रिलिङ्गेषु न स्युः । ते तु प्रायो बहुधा तद्वत् प्रागुक्तवद् बोध्याः ।

वाच्यव–त्स्या–द्बहुव्रीहि–र्दिङ्नामसु तु स स्त्रियाम् ।।' इति ।।

अस्य व्याख्या

वाच्यवदिति । बहुव्रीहिर्बहुव्रीहिसमासो वाच्यवदभिधेयवत्स्यात् यथा—वृद्धा भार्या यस्य स वृद्धभार्य्यं । बहुधन यस्य स बहुधन । बहुधन यस्या सा बहुधना । बहुधनं यस्मिँस्तद् बहुधन गृहम् । स बहुव्रीहिसमासो दिङ्नामसु दिशासञ्ज्ञासु तु स्त्रियां स्यात् । यथा—उत्तरस्या पूर्वस्याश्च दिशोरन्तरालं दिक् उत्तरपूर्वा—ईशानी । दक्षिणस्या पूर्वस्याश्च दिशोरन्तरालं दिक् दक्षिणपूर्वा-आग्नेयी । 'दिङ्नामान्यन्तराले' इत्यनेन बहुव्रीहिसमास ।

अभिधेयलिङ्गमाह तथा चामर—(अम० ना० लि० पृ० ४६३ श्लोकः ४४-५-६) ।

बहुव्रीहि–रदिङ्नाम्ना–मुन्नेयं त–दुदाहृतम् ।।' इति ।।

अस्य व्याख्या—

बह्विति । अदिङ्नाम्ना दिग्भिन्नाभिधेयाना, बहुव्रीहिसमास', अन्यलिङ्गभाक् अर्थाद् वाच्यलिङ्ग: स्यात् । तदुदाहृत तदुदाहरण तु स्वय उन्नेयम् । 'अदिङ्नाम्नाम्' इति किम् । दक्षिणपूर्वा ।

स एवेह विशेषमाह—

कृतः कर्त्तर्य्य–ऽसंज्ञायां कृत्याः–कर्त्तरि–कर्म्मणि ।
अणाद्यन्ता–स्तेन रक्ताद्यर्थे नानार्थभेदकाः ।।

अस्य व्याख्या—

कृत इति । असञ्ज्ञायां अनभिधायां, कर्त्तरि कर्त्तृकारके, (कर्त्तरि कृत् ।) (३।४।३७) इत्यादिना विहिता विधेया । कृत. कृत्प्रत्यया कृत्प्रत्ययान्तशब्दा इत्यर्थ । परोपगा' वाच्यलिङ्गा स्यु । यथा—करोतीति कर्त्ता पुमान्, कर्त्री स्त्री, कर्त्तृ कलत्रम् । कुम्भकार: पुमान्, कुम्भकारी स्त्री, कुम्भकार कुलम् । असंज्ञाया किम् । 'सञ्ज्ञायां भृतृ–' (३।२।४६) इत्यादिना विहिता वाच्यलिङ्गा न स्यु: । यथा—प्रजा = जन, सन्ततिश्च । धनञ्जय. = अग्नि:, अर्जुनश्च । हरि. = विष्णु: । विश्वम्भर.—अच्युत., इन्द्रश्च । विश्वम्भरा = भूमि । कर्त्तरि किम् कृति. । कर्त्तरि कर्मणि च कृत्या कृत्यप्रत्यया: कृत्यप्रत्ययान्तशब्दा इत्यर्थ. । उक्तं च—सुपद्मसम्मतकारिकायाम्—'कृत्या: षट् ते समाख्याता. क्यप्ण्यतौ भावकर्मणो । तव्यानीयावनन्ताद् यत्केलिम कर्मकर्त्तरि ।' इति—(श० चि० पृ० ६६२ स्तं २ पं० १५-६-७) । परगामिनो वाच्यलिङ्गा' स्यु । कर्त्तरि यथा—भव्यस्तरु., भव्या वराङ्गना, भव्यं कलेवरम् । "भव्यगेय—

(३।४।६८)" इति कर्तरि यत् । वसतीति वास्तव्योऽयम्, वास्तव्या सा, वास्तव्यं तत् । "वसेस्तव्यत्कर्त्तरि णिच्च" इति । कर्मणि यथा—कर्त्तव्यो धर्मस्त्वया, कर्त्तव्या भक्तिः । कार्यो घट , कार्या सृष्टि., कार्य्यं जगत् । 'कर्मणि ण्यत् ।' कर्त्तरि कर्मणीति किम् । भावे तु एधितव्य त्वया । भवितव्यम् । असञ्ज्ञायामित्येव । भिद्यो नद । उज्झत्युदकमिति उद्ध्यो नद । "भिद्योद्ध्यौ नदे" इत्यनेन सञ्ज्ञाया क्यप् । अतस्तौ वाच्यलिङ्गौ न स्याताम् । "तेन रक्त रागात् (४।२।१)" इत्याद्यर्थे विहिता ये अणादितद्धितप्रत्ययास्तदन्ता शब्दा नानार्थानामनेकार्थाना भेदका विशेषणानि अनेकार्थविशेषणभूता. विशिष्टत्वाद्वाच्यलिङ्गा । अथ वा । नानार्थभेदका विशेष्या येषा ते वाच्य-लिङ्गा स्युः । यथा—कुङ्कुमेन रक्त कौङ्कुम पट, कौङ्कुमी शाटी, कौङ्कुम वस्त्रम् । एव कुसुम्भेन रक्त कौसुम्भ पट, कौसुम्भी शाटी, कौसुम्भ वास. । "तेन रक्त रागादि" इत्यण् । लाक्षया रक्तो लाक्षिक. पट, लाक्षिकी शाटी, लाक्षिकं वसनम् । "लाक्षारोचनात् ठक्" इत्यनेन ठक् । कृत्तिकाभिर्युक्ता, कार्त्तिकी = रात्रिः पौर्णमासी वा । "नक्षत्रेण युक्त काल" इत्यनेनाण् । "टिड्ढेति" ङीप् । वसिष्ठेन दृष्ट वासिष्ठ साम । "दृष्ट साम" इत्यनेनाण् । वसिष्ठेन दृष्टो मत्र वासिष्ठ, वसिष्ठेन दृष्टा ऋक् वासिष्ठी । इति । प्रजापतिना प्रोक्त प्राजापत्य. । "तेन प्रोक्तम्" इत्यनेन ण्यप्रत्यय । अणाद्यन्ता इत्यादिशब्दाद् ग्रामे भवो ग्राम्य पुरुष, ग्राम्या स्त्री, ग्राम्यं वस्त्रम् । "ग्रामाद्यखञौ" इत्यनेन यत्प्रत्यय । रक्ताद्यर्थे इत्यादिशब्दान्मथुराया आगतो माथुरोऽयं पुरुषः । "तत आगत" इय माथुरी स्त्री । "टिड्ढेति ङीप्" "यस्येति च" इत्यनेनालोपः । मथ्यन्ते रिपवो यस्यां सा मथुरा । तथा च प्रयोगः—'मथुरा भगवान्यत्र नित्य संनिहितो हरिः'—इति भागवतम् ।

षट्सञ्ज्ञका–स्त्रिषु समा युष्म–दस्य–त्तिङ्–ऽव्ययम् ।।" इति ।।

अस्य व्याख्या—

षडिति । "ष्णान्ता षट्—(१।१।२४)" इति च (१।१।२५)" इति सूत्राभ्या कृतषट्सञ्ज्ञा षान्त—नान्तसख्या कतिशब्दश्च त्रिषु त्रिलिङ्ग्यां सर्वेषु लिङ्गेषु समाः सरूपा. तुल्यरूपा नित्य बहुषु वर्त्तमाना अतो बहुवचनान्ताश्चेत्यर्थ । यथा—षडिमे नराः, षडिमा स्त्रियः, षडिमानि कुलानि । पञ्चैते नरा, पञ्चैताः स्त्रियाः, पञ्चैतानि फलानि । कति पुमांस, कति पुरुषाः, कति घटा, कति स्त्रियः, कति घट्य., कति कुलानि, कति गृहाणि । कतिशब्द स्वभावाद् बहुवचनवाची । 'पत्न्य. कत्यभ-वन्प्रभोः' इति भागवतम् । युष्मदस्मच्छब्दौ तिङन्तपदान्यव्ययानि च त्रिषु त्रिलिङ्गेषु समानि लिङ्गकृतविशेषरहितानीत्यर्थः । युष्मच्छब्दो यथा—त्व पुमान् देव, त्व स्त्री देवी, त्व फल ब्रह्म । अस्मच्छब्दो यथा—अहं पुमान्, आवा पुमांसौ, वय पुमासः, अहं स्त्री, आवा स्त्रियौ,

वयं स्त्रियः, अहं कलत्र, आवां कलत्रे, वयं कलत्राणि । तिङ् यथा—पुरुष. पचति, स्त्री पचति, कुल पचति । घटो भवति, स्थाली भवति, पात्र भवति, एव दारा भवन्तीत्यादि । अव्यय यथा—उच्चै तरु., उच्चै दारा । उच्चै स्त्री, उच्चै शाला, उच्चैः कलत्रम्, उच्चैर्गृहम् । तत्र ग्रामे, तत्र शालायाम्, तत्र नगरे ।

अत्र विशेषमाह यादव—(वै० पृ० २९३ श्लोक ४८-९) ।

कृतः कर्त्तर्य्य–ऽसंज्ञायां कृत्या[1]द्या ल्युट्[2] च कारके ।
सर्वनामा[3]न्य–ऽणाद्या–श्च तद्धिताः सञ्ज्ञया विना ॥
तद्धिता–श्चतुरर्थ्या ये सङ्केता–त्कृतकाह्वयाः ।
षट्सञ्ज्ञा युष्म–दस्म–च्च त्रिषु लिङ्गेष्व–ऽभेदवत् '॥ इति ॥

अनयोर्व्याख्या—

कृत इति । तद्धिता इति च । असञ्ज्ञाया अनभिधायां कर्त्तरि कर्त्तृकारके कृत. कृत्प्रत्ययान्तशब्दा कृत्याद्या शब्दा कारके करणकारके ल्युट् ल्युट्प्रत्ययान्तशब्दाश्चैते वाच्यलिङ्गा. स्यु । ल्युट्प्रत्ययान्ता यथा—व्याख्यान, अनुमान । सर्वनामानि सर्वादीनि सर्वनामसंज्ञकानि । सञ्ज्ञया विना ये अणाद्या अण्प्रत्ययाद्यास्तद्धिता, ये चतुरर्थ्या चतुरर्थिकाः तद्धिताः, ये सङ्केतात्कृतकाह्वयाश्चैते वाच्यलिङ्गा स्यु । षट्सञ्ज्ञा षान्तनान्तसख्या, युष्मदस्मच्चैते त्रिषु लिङ्गेषु पुस्त्रीनपुसकलिङ्गेषु अभेदवत् समानरूपवत् भवन्ति ।

दुर्गसिंहोऽपि—(दु० लि० पृ० ४२ श्लोक ८५) ।

ष्णान्ता[4] संख्या–ऽलिङ्गा कत्य[5]–ऽव्यय[6]–युष्म–दस्म–च्च ॥' इति ॥

---

पाणिनीयेऽपि—(१) (कृत्याश्च) ॥ कृत्यप्रत्ययान्तास्त्रिषु स्यु । सि० कौ० पृ० ४०४ सू० १९० ।

(२) (करणाधिकरणयोर्ल्युट् च) ॥ करणाधिकरणयोर्ल्युट्प्रत्ययान्तस्त्रिषु स्यात् । सि० कौ० पृ० ४०४ सू० १९१ ।

(३) (सर्वादीनि सर्वनामानि) एतानि त्रिषु स्यु । सि० कौ० पृ० ४०४ सू० १९२ ।

पाणिनीयेऽपि—(४) (ष्णान्ता सख्या) ॥ षान्ता नान्ता च सख्ये त्रिषु लिङ्गेषु अभेदवत्समानरूपवत्स्तः । सि० कौ० पृ० ४०४ सू० १८७ । (शिष्टा परवत्) ॥ एक पुरुष, एका स्त्री, एक कुलम् । सि० कौ० पृ० ४०४ सू० १८८ ।

(५) (कतियुष्मदस्मद) एतेऽलिङ्गकाः स्युः, लिङ्गरहिता समानरूपा इत्यर्थः । सि० कौ० पृ० ०४४ सू० १८६ ।

(६) (अव्ययम्) । (स्वरादिनिपातमव्ययम्) ॥ स्वरादयो निपाताश्चाव्ययसञ्ज्ञा स्यु । एतेऽपि

अस्य व्याख्या—

ष्णान्तेति । कति च अव्यय च युष्मच्च अस्मच्चेति समाहारो द्वन्द्व । ष्णान्ता षान्त-नकारान्ता सख्या, कति, अव्ययानि युष्मदस्मच्छब्दौ च अलिङ्गा पुस्त्रीक्लीबलिङ्गरहिता अर्थात् समानरूपा भवन्ति ।

हेमोऽपि—(अभि० स० लि० पृ० १० श्लोक १३७) ।

ष्णान्ता संख्या डति युष्म–दस्म–च्च स्यु–रलिङ्गकाः ।
पदं वाक्य–मव्ययं चे–त्य–ऽसंख्यं च तद् बहुलम् ॥ १॥' इति ॥

अस्य व्याख्या—

ष्णान्तेति । सुगममिदं पद्यम् ।

इत्यभिधेयवल्लिङ्गानुशासन समाप्तम् ।

---

अलिङ्गकाः स्यु । सि० कौ० पृ० ४०४ सू० १८५ । तत्र विशेषः—(गुणवचन) । शुक्ल पट, शुक्ला पटी, शुक्लं वस्त्रम् । (गुणवचनमुकारान्तं नपुसके च) ॥ त्रिलिङ्गमित्यर्थ । पटु, पट्वी, पटुः । सि० कौ० पृ० ४०४ सू० १८९ ।

# अथ लिङ्गानुशासनपरिशिष्टम् ।

तत्र विशेषमाह यादव —(वै० पृ० २९३ श्लोक ५०) ।

कृ–त्तद्धित–समासाख्या प्रसिद्धाख्ये च लिङ्गिनि ।
तद्यथा चक्रभृद् विष्णु–र्लताभेदा–ऽभिधा यथा ॥" इति ॥

अस्य व्याख्या—

कृदिति । कृदाख्या च तद्धिताख्या च समासाख्या च कृत्तद्धितसमासाख्या । "द्वन्द्वान्ते श्रूयमाणपद प्रत्येकमभिसम्बध्यते" इति । या कृत्तद्धितसमासाख्या सा प्रसिद्धाख्ये ख्यातसञ्ज्ञके लिङ्गिनि लिङ्गवति भवति । तद्यथा—लताना वल्लीना भेदास्तेषामभिधा सज्ञा लताभेदाभिधा । इति ।

अथेदानीमितरेतरयोगद्वन्द्वसमासे तत्पुरुषसमासे च लिङ्गज्ञानमाहामर —(अम० ना० लि० पृ० ४६२ श्लोक ४२) ।

परलिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ॥" इति ॥

अस्य व्याख्या—

परेति । द्वन्द्वैकत्वस्याव्ययीभावस्य च लिङ्ग प्रागुक्तम् । स्वप्रधाने उभयपदप्रधाने इतरेतराख्ये द्वन्द्वसमासे च तत्पुरुषे तत्पुरुषसमासे च यत्परलिङ्गमग्रिमपदस्थ लिङ्ग तदेव लिङ्गं भवति । अथ वा । स्वे समस्यमाना पदार्था. प्रधान यत्र तस्मिन्नितरेतरयोगद्वन्द्वे परपदस्य यल्लिङ्ग तदेव लिङ्ग स्यात् । तत्र "परवल्लिङ्ग द्वन्द्वतत्पुरुषयो (२।४।२६)" इति पाणिनिसूत्रम् । तत्र द्वन्द्वे यथा—कुकुटश्च मयूरी च कुकुटमयूर्याविमे । मयूरी च कुकुटश्च मयूरीकुक्कुटाविमौ । तत्पुरुषे यथा—धान्येनार्थो धान्यार्थ । सर्पाद्भीति सर्पभीति । सर्पाद्भय सर्पभयम् । वाप्या अश्व. वाप्यश्व । कुलस्य ब्राह्मण कुलब्राह्मण. । ब्राह्मणस्य कुलम् ब्राह्मणकुलम् । राज्ञः पुत्री राजपुत्री । द्वितीयस्य भिक्षा द्वितीयभिक्षा । अर्द्धं पिप्पल्या अर्द्धपिप्पली । "अर्द्धं नपुसकम्" इति । क्लीबे किम् । ग्रामस्य अर्द्धः, ग्रामार्द्ध ।

तथा च हेमचन्द्र —(अभि० स० लि० पृ० ९ श्लोक: १३४) ।

परलिङ्गो द्वन्द्वों–ऽशी' इति ।

अस्य व्याख्या—

परेति । द्वन्द्वो द्वन्द्वसमास, अशी तत्पुरुषसमासश्च तयो. परलिङ्ग परपदस्थलिङ्ग-मित्यर्थ । उदाहरण तु प्रागुक्तम् ।

यादवस्त्विह विशेषमाह—(वै० पृ० २९३ श्लोक: ५१-२) ।

द्वन्द्व–स्तत्पुरुषो–ऽप्य–ऽन्त्यलिङ्गो–ऽश्वबडवौ नरि ।
तथै–वो–क्षवशा–वह्नरात्राहा–श्च टजन्तका: ।।
क्लीबे संख्यापरं रात्र–मर्धा–न्ना पञ्चखार्य्यं–ऽना ।।"इति।।

अस्य व्याख्या—

द्वन्द्व इति । क्लीब इति च । द्वन्द्वो द्वन्द्वसमास. तत्पुरुष तत्पुरुषसमासोऽपि अन्त्यलिङ्ग परपदस्थलिङ्ग स्यात् । यथा—अश्वश्च बडवा च अश्वबडवौ नरि पुलिङ्गे स्याताम् । तथव उक्षावशौ । टजन्तका· टच्प्रत्ययान्ता अह्नरात्राहाश्च पुसि स्यु· । सख्यापर रात्र क्लीबे स्यात् । अर्धात्पर रात्र ना पुमान् पुलिङ्ग स्यादित्यर्थ । पञ्चखारी अना अपुमान् स्त्रीक्लीबयो स्यादित्याशय: । यथा—पञ्चखारी, पञ्चखारि । शेषोदाहरणानि प्रागुक्तानि ।

अथेदानीमिहोक्तस्यापवादमाहामर.––(अम० ना० लिं० पृ० ४६३ श्लोक. ४३) ।

अर्थान्ताः प्राद्यऽलं–प्राप्ता–ऽऽपन्नपूर्वाः परोपगाः ।
तद्धितार्थे द्विगुः संख्या––सर्वनाम––तदन्तकाः ।।

अस्य व्याख्या—

अर्थान्ता इति—अर्थोऽन्ते येषा ते अर्थान्तशब्दा. । प्रादय उपसर्गा. पूर्वे आदौ येषा ते प्रादिपूर्वाश्च अलपूर्वाश्च प्राप्तपूर्वाश्च आपन्नपूर्वाश्चेति प्राद्यलप्राप्तापन्नपूर्वा· शब्दाश्च परोपगा परगामिन. वाच्यलिङ्गा इत्यर्थ । यथा–द्विजाय–अयम्, द्विजार्थ सूप । द्विजाय–इयम्, द्विजार्था यवागू । द्विजाय–इदम्, द्विजार्थ पय एव विप्राय–अयम्, विप्रार्थो वेद. । विप्राय–इदम्, विप्रार्थं वस्त्रम् ।" अर्थेन नित्यसमास. सर्व (विशेष्य) लिङ्गता च" (वा० २।१।३६)' इति । प्रादिपूर्वो यथा—आचार्य्यं प्रगत· = प्राचार्य्य । वरं प्रगत = प्रवर । 'प्रादयो गताद्यर्थे प्रथमया' (वा० ) इति समास । 'अत्यादय. क्रान्ताद्यर्थे द्वितीयया' (वा २।२।१८) इति समास. । अतिक्रान्तो मालामतिमालोऽय हार । अतिक्रान्ता मालामतिमालेयम् । अतिक्रान्त मालामतिमालमिदम् । खट्वामतिक्रान्तोऽतिखट्व । 'अवादय क्रुष्टाद्यर्थे तृतीयया' (वा० ) इति समास· । अवक्रुष्ट कोकिलया–अवकोकिल । 'पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या' (वा० )

इति समास । परिग्लानोऽध्ययनाय- पर्य्यध्ययन । 'निरादय क्रान्ताद्यर्थे पञ्चम्या' (वा० इति समास । निष्क्रान्त कौशाम्ब्या –निष्कौशाम्बि । अल पूर्वो यथा—'अलङ्कुमार्य्यै इत्यलङ्कुमारिरयम् । अलङ्कुमारिरियम् । अलङ्कुमारि इदम् । अलजीविकायै अलजीविक । अलजीविका स्त्री । अलञ्जीविकमिदम् । प्राप्तपूर्वो यथा—प्राप्तो जीविकाम्, प्राप्तजीविको द्विज । प्राप्तजीविका स्त्री । प्राप्तजीविकमिदम् । आपन्नपूर्वो यथा—आपन्नो जीविका आपन्नजीविको विप्र । आपन्नजीविका विप्रा । आपन्नजीविक कुलम् । ''द्विगुप्राप्तापन्नालपूर्वगतिसमासेषु प्रतिषेधो वाच्य ।'' इत्यनेन परलिङ्गताप्रतिषेधः समासश्च । तद्धितार्थो यो द्विगु स वाच्यलिङ्ग. । यथा—पञ्चसु कपालेषु सस्कृत. पुरोडाश (हविर्विशेष) पञ्चकपाल, पञ्चकपाला, पञ्चकपालं हवि । ''सख्यापूर्वो द्विगु (२।१।५२) ।'' ''सस्कृत भक्षा. (४।२।१६)'' इत्यण् । ''द्विगोर्लुगनपत्ये (४।१।८८)'' इत्यणो लुक् । सख्या सख्याशब्दा, सर्वनामानि सर्वनामसज्ञका, तदन्तकाश्च परलिङ्गभाज वाच्यलिङ्गा स्युरित्यर्थ । सख्या यथा—एक. पुमान्, एका स्त्री, एक कुलम् । द्वौ पुमासौ, द्वे स्त्रियौ, द्वे कुले । त्रय पुमास, तिस्र स्त्रिय, त्रीणि कुलानि । चत्वारो ब्राह्मण, चतस्रो ब्राह्मण्य, चत्वारि मित्राणि, चत्वारि वस्त्राणि । बहवो जना., बह्वयो रमण्यः, बहूनि धनानि । षट्सज्ञका प्रागुक्ता,। विशत्यादीना लिङ्गमपि प्रागुक्तम् । शतादिकाना लिङ्ग तु नपुसकलिङ्गानुशासन एवोक्तम् । सर्वनाम यथा—सर्वो देश, सर्वा नदी, सर्वं जलम् । सर्वे पुरुषा, सर्वा स्त्रिय, सर्वाणि कुलानि । एव परः पुमान्, परा स्त्री, पर कुलम् । देवदत्तो नाम कश्चित्, देवदत्ता नाम काचित्, देवदत्त नाम किञ्चित् । एवमन्येऽपि ये यस्मिन्नभिधेयेऽभिधीयन्ते ते तद्वद्वाच्यलिङ्गा एव सिद्धा । सख्यान्तको यथा—ऊनत्रय, ऊनतिस्र, ऊनत्रीणि । सर्वनामान्तको यथा—परमसर्व परमसर्वा, परमसर्वम् । इति ।

तथा च यादव—(वै० पृ० २६३-४ श्लोक: ५२-३) ।

त्रिष्व–ऽर्थः प्राक्चतुर्थ्यन्त–स्तद्धितार्थो द्विगु–स्त्रिषु ।
प्रादि–प्राप्ता–ल–मापन्ना–त्परं च प्रवरो यथा ॥
प्राप्तार्थो–ऽलङ्कुमारिश्च' ... ... ॥ इति ॥

अस्य व्याख्या—

त्रिष्विति । प्राक्चतुर्थ्यन्तो योऽर्थ अर्थशब्द. स त्रिषु पुंस्त्रीक्लीबलिङ्गेषु स्यात् । तद्धितार्थो यो द्विगुर्द्विगुसमास सोऽपि त्रिषु पुंस्त्रीक्लीबलिङ्गेषु स्यात् । प्रादयश्च प्राप्त च अल च आपन्नं चैषां समाहार. प्रादिप्राप्तालमापन्न तस्मात्परं विशेष्यमुपगच्छन्ति विशेष्यलिङ्गा इत्यर्थ. । यथा—प्रवर, प्राप्तार्थ, अलङ्कुमारिश्चेति ।

हेमचन्द्रोऽपि––(अभि० स० लि० पृ० ६ श्लोक १३४)।

ङे–ऽर्थो वाच्यवत्' ॥ इति॥

अस्य व्याख्या—

ङ इति। ङेऽर्थश्चतुर्थ्यर्थकोऽर्थशब्दोऽन्ते यस्य स वाच्यवत् वाच्यलिङ्ग स्यादित्यर्थ। ङेग्रहणाद् धान्येनार्थो धान्यार्थ इत्येव। अर्थग्रहणात्कुण्डलहिरण्यमित्येव।

स एवापत्यादीन्नियतलिङ्गवाचकशब्दानाह– (अभि० स० लि० पृ० ९ श्लोक १३४)।

अपत्य–मिति नियता: ॥' इति ॥

अस्य व्याख्या—

अपत्यमिति। अपत्यादयो नियता निश्चितलिङ्गा अव्युत्पन्ना स्युरित्यर्थ। यथा–– अपत्य दुहिता पुत्रश्च। रक्ष पुमान् स्त्री च। वेदा प्रमाणम्, स्मृतयः प्रमाणम्। विद्या गुणः, शौर्यं गुण।

अमरोऽपि––(अम० ना० लि० पृ० ५३ श्लोक २७)।

मतल्लिका मर्चचिका प्रकाण्ड–मुद्घ–तल्लजौ।
प्रशस्तवाचकान्य–ऽमूनि' ··· ··· ॥ इति॥

अस्य व्याख्या—

मतल्लिकेति। एते मतल्लिकादयः शब्दा नियतलिङ्गाः, न तु विशेष्यनिघ्नाः। अव्युत्पन्नाश्चेति प्राञ्च.। एषां व्याख्योदाहरणानि प्रागुक्तानि।

स एव गुणादियोगोपाधिवशतः परगामिनो ये शब्दास्तेषा लिङ्गज्ञानमाह—(अम० ना० पृ० ४६३ श्लोकः ४४)।

गुण–द्रव्य–क्रिया–योगो–पाधयः परगामिनः ॥' इति॥

अस्य व्याख्या

गुणेति। गुणद्रव्यक्रियाणा योग उपाधिर्निमित्तं येषां ते परगामिन। अथ वा गुणयोगेन द्रव्ययोगेन क्रियायोगेन च य उपाधिर्विशेषण तेन धर्मिणिप्रवृत्तास्ते धर्मिलिङ्गभाजः परगामिनः स्युरित्यर्थः। गुणयोगेन (गुणवाची) यथा––गन्धवानश्मा, गन्धवती पृथिवी, गन्धवत्कुसुमम्। शुक्ल पट., शुक्ला शाटी, शुक्लं वस्त्रम्। एव विद्वान्, विदुषी, विद्वत्। द्रव्ययोगेन (द्रव्योपाधिः) यथा—दण्डी पुमान्, दण्डिनी स्त्री, दण्डि गृहम्। क्रियायोगेन (क्रियोपाधिः) यथा–– पाचकः पुमान्, पाचिका स्त्री, पाचक गृहम्।

तथा च हेमचन्द्र —(अभि० स० लि० पृ० ९ श्लोक १३४) ।

अस्त्र्या–ऽऽरोपाभावे गुणवृत्ते–राश्रया–द्वचन–लिङ्गाः ।।१।। इति ।

अस्य व्याख्या

अस्त्रीति । आरोपस्याभाव आरोपाभाव स्त्रिया वर्जितारोपाभावस्तस्मिन्, गुणो विशेषण प्रवृत्तिनिमित्त तदाश्रया वृत्तिर्यस्य तस्य विशेषणवशाद्वचन लिङ्ग च भवत । प्रवृत्तिनिमित्तास्य गुणद्रव्यक्रियाभेदात् त्रैविध्यम् । गुणवाची, द्रव्यवाची, क्रियावाची चेति । अस्त्रीति किम् । धवनाम्नो योगात्तद्भार्यायामध्यारोपेऽप्याश्रयलिङ्गतैव प्रष्ठस्य भार्या स एवायमित्यभेदोपचारेऽपि प्रष्ठी । एव वरुणानि इन्द्राणी इत्यादय. ।

दुर्गोऽपि—(दु० लि० पृ० ४२ श्लोक. ८५) ।

...              ...        गुणादयो वाच्यलिङ्गकाः शेषाः ।।' इति ।।

अस्य व्याख्या—

गुणेति । गुणादयो गुणवचनप्रभृतयो वाच्यमभिधेय तस्यैव लिङ्गं येषामिति । शेषाः परिशिष्टा गुणादयो गुणप्रभृतयो वाच्यलिङ्गका अभिधेयलिङ्गका स्यु । आदिग्रहणात् सख्या सर्वनामसञ्ज्ञाकृताश्चेत्यर्थ· ।

इह प्रसङ्गवशत क्रियाणा विशेषणान्तराण्याहामर––(अम० ना० लि० पृ० ३२२ श्लोक ५७) ।

कामं प्रकामं पर्य्याप्तं निकामे–ष्टं यथेप्सितम् ।।" इति ।।

अस्य व्याख्या—

काममिति । निकामं च इष्टं चैतयोः समाहारो निकामेष्टम् । कामम्, प्रकामम्, पर्य्याप्तम्, निकामम्, इष्टम्, यथेप्सितं चैतानि षट् क्रियाविशेषणानि स्यु । यथा––'कामं रामो भुङ्क्ते स्म ।'

अथेदानीमिह विशेषमाह हेमचन्द्रः––(अभि० स० लि० पृ० १० श्लोक १३५-६) ।

प्रकृते–र्लिङ्गं–वचने बाधन्ते स्वार्थिकाः क्वचित् ।
प्रकृति––र्हरीतक्यादिर्न लिङ्ग––मतिवर्त्तते ।। २ ।।

अस्य व्याख्या—

प्रकृतेरिति । लिङ्ग च वचनं च लिङ्गवचने ते प्रकृते· प्रकृतित क्वचित्स्वार्थिका बाधन्ते ।

यथा—द्रखा कुटी कुटीर । हरीतकया फल हरीतकी, हरीतक्यौ, हरीतक्य. । प्रकृतिर्हरीतक्यादि-लिङ्ग न अतिवर्तते । तथा चामर—'द्विहीन प्रसवे सर्व, हरीतक्यादय स्त्रियाम् ।' इति—(अम० ना० लि० पृ० १३४ श्लोक १८) । आदिना कोशातकी कर्कटी द्राक्षेत्यादि ।

वचनं तु खलतिकादि-र्बह्वर्था ना-त्येति पूर्वपदभूता ।

अस्य व्याख्या—

वचनमिति । खलतिकस्यादूरभवानि वनानि खलितक वनानि प्रकृतिर्वचनं नात्येति । एव बह्वर्था पूर्वपदभूता प्रकृतिर्वचन नात्येति । यथा—पञ्चाला कुरव ।

स्त्रीपुन्नपुंसकानां सह वचने स्या-त्परं लिङ्गम् ॥३॥ इति ॥

अस्य व्याख्या—

स्त्रीति । स्त्री च पुमाश्च नपुसक चेति स्त्रीपुन्नपुसकानि तेषा सह वचने सति तदा पर लिङ्ग स्यात् । स्त्रीपुसयो पुलिङ्गम् । यथा—शाटी च स च तौ । स्त्रीनपुसकयो नपुसकम् । यथा—लता च फल च ते । पुन्नपुसकयो. नपुसकम् । यथा—वृक्षश्च फल च ते । स्त्रीपुन्नपुंसकाना नपुसकम् । लता च वृक्षश्च फल च तानि ।

तथा च यादव.—(वै० पृ० २९४ श्लोक: ५३ त ५८ या०)

... ... पुमान् स्त्रीपुंसयो-र्युतौ ॥
ग्राम्या-ऽनेकशफा-ऽऽबाल-बहुपश्व-ऽन्वये स्त्रियः ।
क्ल्यक्लीयुतौ षण्णैक्यं वा व्यक्त्यादिलुपि युक्तवत् ॥

अस्य व्याख्या—

पुमानिति । स्त्रीपुसयोः योषित्पुरुषयोर्युतौ योगे पुमान् पुलिङ्गः स्यात् । ग्राम्याश्च अनेकशफाश्च आबालाश्च बहुपशवश्चेति ग्राम्यानेकशफाबालबहुपशवस्तेषा अन्वये सन्ततौ स्त्रिय· स्त्रीलिङ्गा स्यु । क्ल्यक्लीयुतौ नपुसकस्य अनपुसकयो पुस्त्रियोश्च युतौ योगे अथवा षण्णैक्य नपुसकानामैक्य यदि तदा नपुसकलिङ्ग स्यात् । उदाहरण तु प्रागुक्तम् । व्यक्त्यादिलुपि एकशेषसमासे युक्तवल्लिङ्गं बोध्यम् । यथा—माता च पिता च पितरौ इत्यादि ।

परव-द्वा-ऽनुवादेषु तिङ-ऽव्यय-मलिङ्गकम् ।

अस्य व्याख्या—

परेति । वा अथवा अनुवादेषु ज्ञातार्थप्रतिपादनेषु परवत् यत्परपदस्थ लिङ्गं तदेव लिङ्ग

स्यात् । तिङ् तिङ्प्रत्ययः, अव्यय स्वरादिनिपातश्च अलिङ्गक निर्लिङ्गक अर्थात्समानलिङ्ग स्यात् ।

अचः पुंसि, हलो दीर्घाः स्त्रियां, लोपध–न–त्र–साः ।
षण्डे सर्वे, गुण––द्रव्य––क्रियायुक्तार्थका–स्त्रिषु ॥

अस्य व्याख्या

अच इति । अच. अजन्तशब्दा पुसि पुलिङ्गे स्यु । हलं व्यञ्जनान्ता शब्दाः, दीर्घा दीर्घस्वरान्तशब्दाश्च स्त्रिया स्त्रीलिङ्गे स्युः । लोपधश्च नश्च त्रश्च सश्चेति लोपधनत्रसाः अर्थाल्लिकारोपधो नान्तस्त्रान्त. सान्तश्चैते सर्वे शब्दा षण्डे नपुसकलिङ्गे स्यु । गुणश्च द्रव्य च क्रिया चेति गुणद्रव्यक्रियास्ताभिर्युक्तार्थका ये शब्दास्ते त्रिषु स्त्रीपुनपुसकलिङ्गेषु भवन्ति ।

बहुत्व–मेकता च स्या–ज्जात्याख्यायां यथा यवाः ॥
यव–श्च व्रीहयो व्रीहि–रित्य–थ स्या–द्विशाखयोः ।
द्वित्वं बहुवच–श्चै–वं द्वयं प्रोष्ठपदास्व–ऽपि ॥

अस्य व्याख्या—

बहुत्वमिति । यव इति च । जात्याख्याया जातिसंज्ञाया, बहुत्वं बहुवचनं, एकता एकवचन च स्यात् । यवा यव । व्रीहय व्रीहि ।' इति । अथ विशाखयोर्नक्षत्रविशेषयोः, द्वित्व द्विवचन, बहुवचः बहुवचनं च स्यात् । यथा––विशाखयो विशाखासु । एवं प्रोष्ठपदासु पूर्वाभाद्रपदासु अपि द्वय द्वित्व बहुत्व च स्यात् । यथा––प्रोष्ठपदयो प्रोष्ठपदासु । इति ।

अनेक––मिति शब्दस्य तद्विशेष्यस्य चै––कता ।
संख्यार्थस्या–ऽबहुव्रीहे–र्यथा–ऽनेका वधू–रिति ॥इति॥

अस्य व्याख्या—

अनेकमिति । अबहुव्रीहेर्बहुव्रीहिसमासवर्जितस्य संख्यार्थस्य संख्यावाचकस्य अनेक इति शब्दस्य तस्य विशेष्यस्य भेद्यस्य च एकता लिङ्गवचनयोरैक्यं स्यात् । यथा––अनेका वधूः । इति ।

अमरस्तु शूद्रवर्गे सर्वलिङ्गासग्रहादसम्पूर्णता परिहरति—(अम० ना० पृ० ३५ श्लोक. ४६-७) ।

उक्ता भूरिप्रयोगत्वा–देकस्मि–न्ये–ऽत्र यौगिकाः ॥
ताद्धर्म्या–दन्यतो वृत्ता–वूह्या लिङ्गान्तरे–ऽपि–ते ।

अस्य व्याख्या—

उक्ता इति । अत्र शूद्रवर्गे ये यौगिका शब्दा कुम्भकार–मालाकार–मार्दङ्गिक–वैणविकप्रभृतय. काव्यनाटकपुराणप्रभृतिषु पुलिङ्ग एव भूरिप्रयोगत्वातप्रचुरप्रयोगदर्शनादेकस्मिन्नेव लिङ्गे नृलिङ्गे ये यौगिका उक्ता निर्दिष्टास्तेऽन्यतोऽन्यत्र स्त्रीत्वादिविशिष्टे विशिष्यवृत्तौ सत्यां ताद्धर्म्यात् विशिष्टाना विशेष्यधर्मत्वाल्लिङ्गान्तरे योषिति नपुसके चोह्या ऊहनीया । अपिशब्दात् येऽयौगिका रूढा अपि मालिककरणकुलालप्रभृतयो, जातिवचनत्वाच्छूद्रादिवत् 'जाते.' (४।१।६३) ङीषि लिङ्गान्तरे स्त्रीलिङ्गे नपुसकत्वेऽपि बोद्धव्या । यस्यावयवशक्त्य एवार्थो बुध्यते स यौगिक । यस्यावयवशक्तिमनपेक्ष्य समुदायशक्तिमात्रेणार्थो बुध्यते स रूढ । तत्र यौगिको लिङ्गान्तरे । । यथा—मालाकारी स्त्री, मालाकार कुलम् । एव कुम्भकारी स्त्री, कुम्भकार कुलम् । अण्णन्तत्वात्स्त्रिया ङीप् । अयौगिको यथा—करणी, कुलाली । इति—(अम० ना० अम० टी० पृ० २५० श्लोक ४७ प० १३त) ।

अथेदानी लिङ्गविधायकवचनविरोधे सति तदा लिङ्गनिर्णयमाह यादव—(वै० लि० पृ० २९४ श्लोक. ५९) ।

**विरोधे[1] पूर्वदौर्बल्यं लोकतः शेष–मुन्नयेत् ॥'इति॥**

अस्य व्याख्या—

विरोध इति । विरोधे विप्रतिषेधे सति तदा पूर्वदौर्बल्य स्यात् । तथा च कातन्त्रे—'पूर्वपरयोः परो विधिर्बलीयान्' इति । परस्येष्टवाचित्वात्' इति—(दु० लि० पृ० १० प० ८) । इह शेषमनुक्त लोकतो लोकव्यवहारात् लिङ्गमुन्नयेत् कल्पयेत् ।

तथा चामर—(अम० ना० लि० पृ० ४६३ श्लोक. ४६) ।

**परं विरोधे शेषं तु ज्ञेयं शिष्ट–प्रयोगतः ॥'इति॥**

अस्य व्याख्या—

परमिति । विरोधे (विप्रतिषेधे) लिङ्गविधायकवचनविरोधे सति पर वचन ग्राह्यम्, परं लिङ्गानुशासनं प्रवर्त्तत इत्यर्थ । यथा—मानुषशब्दस्य कषणभमरोपान्ता इति प्रागुक्तविधिना पुंस्त्वे एव प्राप्ते सति द्विचतु.षट्पदेत्यनेनोत्तरत्रोक्तेन स्त्रीपुसविधिनिश्चेयः । यथा—मानुषोऽयम् । मानुषीयमिति । यद्वा 'स्त्रियामीदूद्विरामैकाच्' इत्यस्यावकाशः—धी. भ्रूः । 'कृतः कर्त्तर्य्यसज्ञायाम्' इत्यस्यावकाशः—करोतीति कर्त्ता, पचतीति पाचक । नयतीति

---

पाणिनीयेऽपि—(१) विप्रतिषेधे पर कार्यम् ॥ (१।४।२) तुल्यबलविरोधे पर कार्यं स्यात्' इति । सि० कौ० पृ० १५ पं० ५ ।

नौ , लुनातीति लू , इत्यादावुभयप्रसङ्गे परत्वात्त्रिलिङ्गता भवति । शेषमिति । शेषमिहानुक्त अभिधानादिक शिष्टाना महाकवीना भाष्यकारादीनां च प्रयोगतो ज्ञेयम् । यद्वा अनुक्त शब्दलिङ्ग शिष्टप्रयोगतो बोद्धव्यम् । "लिङ्गमशिष्य लोकाश्रयत्वाल्लिङ्गस्य" इति भाष्योक्तेरित्यर्थ. । तद्शिष्य सज्ञाप्रमाणत्वादित्यादिसूत्रप्रत्याख्यानावसरे भाष्यकारेणोक्तम् । यथा—'चलनी तितउ पुमान् ।' इत्युक्तम् । इह तितउ परिपवन भवति' इति (पस्पशा) भाष्यप्रयोगान्नपुसकमपि बोध्यम् । 'ताटङ्कस्ते' इत्याचार्य्यप्रयोगात्ताटङ्कशब्दस्य पुस्त्वम् । यथा वा । 'कलिका कोरक पुमान्' इतीहोक्तम् । 'कोरकाणि' माघप्रयोगान्नपुसकत्वमिति । (अम० सु० व्या० पृ० ४६३ स्त० २त', अम० अम० वि० व्या० पृ० ३७५-६ त) ।

अथेदानी ग्रन्थकार पद्यद्वयेन ग्रन्थमिममुपसहरति—

वामे तटे निर्जरनिम्नगायाः खण्डाभिधः संवसथोऽस्ति तत्र ।
श्रीकीर्तिदेव्यास्तनया अभूवँस्त्रयोऽग्रजस्तेषु मुकुन्दनामा ॥१॥
तेनाश्विकुञ्जरभुजङ्गशशाङ्कतुल्ये, वर्षे शके तपसि मासि सितान्यपक्षे ।
भास्वत्तिथौ शशिनि लिङ्गविदां हिताय, लिगानुशासनमिदं रचितं सुरम्यम् ॥२॥

इति श्रीमद्गढवालदेशान्तर्गतदेवप्रयागसमीपवर्तिखण्डग्रामनिवासिना श्रीमत्पण्डित
रघुवरदत्ततनूजनुषा मुकुन्ददैवज्ञेन विरचितं लिङ्गानुशासन तच्च स्वरचितया
विमलाख्यया सस्कृतव्याख्यया संस्कृतटिप्पण्या च
समलङ्कृत समाप्तिमगमत् ।

# समुदाहृत ग्रन्थानां सूचिपत्रम्

| ग्रन्थनाम | सङ्केतनाम | ग्रन्थकारनाम | सङ्केतनाम | आवृति एवं सन्, सम्वत् | प्रकाशक |
|---|---|---|---|---|---|
| वेजयती | वै० | यादव प्रकाश | या०प्र० | प्रथमावृति, सन् १८९२ | मद्रास सस्कृत ऐण्ड वर्नाक्यूलरटेक्स्ट पब्लिकेशन सोसायटी, मद्रास |
| त्रिकाण्डशेष | त्रि० शे० | पुरुषोत्तम दव | पु० दे० | प्रथमावृति, सन् १९२९ | खेमराज श्रीकृष्णदास, श्री वेक्टेश्वर प्रेस, बम्बई |
| हारावली | हा० व० | ,, | ,, ,, | ,, | ,, ,, ,, |
| शब्दभेद प्रकाश (द्विरूपकोष) | स० भे० प्र० | ,, | ,, ,, | ,, | ,, ,, ,, |
| अष्टाध्यायी (सिद्धान्त कौमुदी) | (सि० कौ०) | पाणिनि | पा० नि० | प्रथमावृति, सम्वत् १९५७ | ,, ,, ,, |
| नामलिङ्गानुशासन् (अमरकोश) | अम०ना०लि० | अमर सिह | अमर | चनुर्थावृति सम्वत् १९१५ | तुकाराम जावजी, निर्णय सागर प्रेस, मुम्बई |
| अभिधान संग्रह (अभिधान चिन्तामणि) | अभि०चि० | हेमचन्द्र | हैम | प्रथमावृति सन् १८९६ | ,, ,, ,, |
| शब्दभेद प्रकाश (शब्द द्वैध कोश) | स० भे० प्र० | पुरुषोत्तम देव | पु० द० | तृतीयावृति सन् १९२९ | ,, ,, ,, |
| | | | | | ,, ,, ,, |
| एकाक्षर कोष | ए० को० | ,, | ,, ,, | ,, | |
| अभिधान संग्रह (हेमलिङ्गानुशासन) | अभि० स० हे० लि० शा० | हेमचन्द्र | हम | प्रथमावृति सन् १८९६ | ,, ,, ,, |
| दुर्गलिङ्गानुशासन | दु० लि० | दुर्गसिह | दु० सि० | प्रथमावृति सन् १९५२ | डा० कतरे, दक्खन कालेज, आर्य सस्कृत प्रेस, पूना |
| नानार्थ रत्नमाला | ना० र० मा० | इरुगपादडाधिनाथ | इ० द० | प्रथमावृति सन् १९५४ | ,, ,, ,, |
| शिवकोश | शि० को० | शिवदत्त मिश्र | शि० मि० | प्रथमावृति सन् १९५२ | ,, ,, ,, |
| अनेकार्थतिलक | अने० ति० | महीप | म० प० | प्रथमावृति सन् १९४७ | ,, ,, ,, |
| नानार्थमञ्जरी | नाना० मं० | राघव | रा० व० | प्रथमावृति सन् १९५४ | ,, ,, ,, |
| एकार्थनाममाला | एक०ना०मा० | सौभरि | सौ० रि० | प्रथमावृति सन् १९५५ | ,, ,, ,, |
| द्वयक्षरीनाममाला | द्वय०ना०मा० | ,, | ,, | ,, | ,, ,, ,, |

| ग्रन्थ नाम | संकेतनाम | ग्रन्थकारनाम | संकेतनाम | आवृति एवं सन्, सम्वत् | प्रकाशक |
|---|---|---|---|---|---|
| शब्दरत्नसमन्वय | श० र० स० | शाहजी महाराज | शा० म० | प्रथमावृति सन् १९३२ | डा० कतरे, दक्खन कालेज, आर्य सस्कृत प्रेस, पूना |
| पर्य्याय-रत्न-माला | प० र० मा० | माधवकर | मा० क० | प्रथमावृति सन् १९४६ | पटना |
| पर्य्यायमुक्तावली | प० मु० व० | हरिचरण सेन | ह०च०से० | प्रथमावृति सन् १९४७ | ,, |
| राजनिघण्टु (अभिधान चूड़ामणि) | रा० नि० | नरहरि पण्डित | न०ह० | द्वितीयावृति सन् १९२७ | विनायक गणेश आप्टे, आनन्दाश्रम, पूना |
| अनेकार्थध्वनिमञ्जरी | अने०ध्व०म० | महा क्षपणक | म०क्ष०ण० | प्रथमावृति ई सन् १९३४ | जयकृष्णदास हरिदास गुप्त, विद्याविलास प्रेस, बनारस |
| अनेकार्थसग्रह | अने० स० | हेमचन्द्र | हैम | ,, ,, १९२९ | ,, ,, |
| मेदिनीकोष | मे० को० | मेदिनीकर: | मे० क० | ,, ,, १९४० | ,, ,, |
| विश्वप्रकाशकोष | वि० प्र० | महेश्वर | म० श्व० | ,, ,, ,, | ,, ,, |
| शब्दार्थचिन्तामणि | श० चि० | सुखानन्दनाथ | सु०न०ना० | प्रथमखण्ड, प्रथम भा द्वितीय खण्ड प्र.भा, ई स १८६४ | घासीराम कन्हैयालाल, सस्कृत यत्रालय, आगरा |
| ,, | ,, | ,, | ,, | तृ प्र भा ई स. १८८३ चतु, प्र भा सन् १८८५ | वशीधर उदयपुर, राजकीय पत्रालय, बडोदा |
| वामनीय लिङ्गानुशासन | वा० लिं० | वामन | वा० न० | ,, ,, | गवर्मेन्ट औफिस हावन्स् दि महाराजा गायकवाड, (बडौदा) |
| अभिधानरत्नमाला (हलायुध कोष) | ह० यु० | हलायुध | ह० वु० | ,, १९५९ | भार्गवभूषण प्रेस, बनारस |
| सस्कृतशब्दार्थ कौस्तुभ | स० श० कौ० | द्वारिका प्र. शर्मा एम.आर.ए.एस | द्वा० प्र० | ,, १९३८ | रामनारायण बुकसेलर, इलाहाबाद |

| टीकानाम | सकेतनाम | टीकाकारनाम | संकेतनाम | ई. सन् तथा आवृति | प्रकाशक |
|---|---|---|---|---|---|
| अमरस्य व्याख्यासुधा (अमरस्य) | व्या० सु० | भानूजी दीक्षित | भा० दी० | चतुर्थावृति ई सन् १६१५ | निर्णयसागर प्रेस, बम्बई |
| अमरविवेकटीका (त्रिकाण्डशेषस्य) | अ० वि० | महेश्वर | म० श्व० | प्रथमावृति सन् १८९० | ,, ,, |
| नाम चन्द्रिका | ना० चं० | विष्णुदत्त | वि० द० | ,, १९२९ | श्री वेङ्कटेश्वर प्रेस, बम्बई |

# शब्दानुक्रमणिका

## मुकुन्दकोषस्थ लिङ्गानुशासनस्यास्य



॥ सूचना—अनुक्रमणिकायामस्या शब्दा. पृष्ठपक्तिक्रमेण सन्यस्ता. ॥

### इ



### ई



### उ

## ख



## ग

### घ



### च

## श

ह



==

# टिप्पणिस्थ-शब्दानुक्रमणिका

## मुकुन्दकोशस्थ लिङ्गानुशासनवर्गस्यास्य

# शुद्धिपत्रम्

## मुकुन्दकोषान्तर्गतलिङ्गानुशासनवर्गस्य

| पृष्ठे | पक्तौ | अशुद्धशब्दा | शुद्धशब्दा |
|---|---|---|---|
| ४ | ४ | गुणादय | घुणादय |
| ,, | ५ | स्वयथु– | श्वयथु– |
| ,, | ९ | अ ङ्कर–– | अङकुर– |
| ५ | ३ | (अच्) | (अप्) |
| ,, | २८ | सेशेवधि'। | शेवधि |
| ६ | १० | न्यादनम्= | न्यदनम्= |
| ७ | १० | न-यौ | न-यौ च |
| ,, | १४ | सान्ता कस-मास-<br>दास-चास– | सान्ता अनेहो-वेध-<br>ञ्चन्द्रम – |
| ८ | २३ | इद= | इद वय= |
| १० | २९ | गरुल= | गरुत्= |
| ११ | २० | त्यादय। | इत्यादय । |
| १२ | २८ | ॠतु | ऋतु |
| १३ | २२ | द्व्य'। | द्व्यह । |
| १४ | ४ | ताल | स्ताल |
| ,, | १२ | व्रीहग्न्यो | व्रीह्यग्न्यो |
| ,, | ,, | अनातोधे आतोध | अनातोद्ये आतोद्य |
| १५ | २८ | धर्म्म । | घर्म्म । |
| १६ | १५ | गुच्छस्तवके | गुच्छ स्तवके |
| १७ | १९ | इद्रिये। | इन्द्रिये । |
| १८ | ६ | बुद्वूद = | बुद्बुद = |
| ,, | १७ | पूर्वाह्व | पूर्वाह्ण |
| १९ | २१ | ओसन | आसन |
| २० | ४ | माध्ये | माघ्ये |
| ,, | ११ | ऽमित्रौ'— | ऽमित्रौ |
| ,, | १४ | व्यज्जनम्। | व्यञ्जनम् । |
| ,, | २२ | पुष्प = | पुष्य'= |
| ,, | २५ | पूर्वाह्व ।अपराह्न | पूर्वाह्ण ।अपराह्ण । |
| २२ | १३ | ल्लोलोवैरि | ल्लोलवैरि |
| २३ | २५ | योगषु | योगेषु |
| २४ | १३ | शाह प्रभृतय | शाहप्रभृतयः। |
| २५ | ५ | काफादि | कफादि |
| ,, | २६ | मुज्जा | मुञ्जा |
| २६ | २ | योऽङ्ग | योऽङगु |
| ,, | २७ | वेंदि. । समह | वेंदि' समूह |
| २९ | १८ | भूसौ | भूमौ |
| ,, | २१ | पुँस्त्वरसूचना | पुँस्त्वसूचना |
| ३० | १२ | विटप | विटपे |
| ,, | १८ | शराजि | शूराजि |
| ३१ | २ | योषिती | योषिति |
| ,, | १९ | वराश्यृ-र्षि | वराश्यृ-र्षि |
| ,, | २१ | अञ्जलि-घृणि । | अञ्जलि-घृँणि । |
| ,, | २३ | जन्त । | जन्तु । |
| ३२ | १८ | प्रकारोभासु | प्रकारभास्सु |
| ,, | ,, | पृ० ३३० | पृ० २३० |
| ३२ | २१ | वह्निर्वेश्वा | वह्निर्वैश्वा |
| ३३ | १९ | श्लोष्मो | श्लेष्मो |
| ३५ | ५ | वसन्मञ्चल | वसनाञ्चल । |
| ,, | ८ | वर्त्यो,=वस्त्रान्ते | वर्त्योर्वस्त्रान्ते |
| ३६ | ४ | जीह्वा | जिह्वा |
| ,, | १९ | अमरोस्त्वाह्–– | अमरस्त्वाह्– |
| ,, | ,, | तिथयोर्द्वयो" | तिथयो द्वयो।" |
| ३७ | ३ | स्पृक्वा | स्पृक्का |
| ,, | २० | विद्युति | विद्युति |
| ,, | २९ | गीवा | ग्रीवा= |
| ३९ | १६ | सरत्लद्रुमे | सरलद्रुमे |
| ४० | २३ | मुष्टितला | मुष्टितता |
| ,, | २९ | पुमान्यार्ष्णि | पुमान्पार्ष्णि |
| ४१ | ८ | स्त्र्यस्त्र्यरु– | स्त्र्यस्त्र्यरु– |
| ,, | ९ | पृ० १३१ | पृ० ४३१ |
| ,, | १२ | लताग्रेऽस्त्रौ | लताग्रेऽस्त्रौ |
| ,, | १८ | ह्री–– = | ह्री = |
| ,, | २१ | स्रु = | स्रू = |
| ,, | २४ | रूपणि | रूपिणि |
| ४२ | ३ | नी, लुनाति | नी , लुनाति |
| ,, | २८ | एवानस्तु | एवान्यस्तु |
| ४३ | ९ | मेययो | मेतयो |
| ,, | १२ | काकणि– | काकिणि– |
| ४५ | १२ | =सग्रणी | =सग्रहणी |
| ,, | १४ | परम्परा– | परस्परा– |
| ,, | १५ | यात्युक्षी= | व्यात्युक्षी= |
| ,, | २८ | पृ० ३५ | पृ० ३५७ |
| ४७ | ६ | प्रहृण | प्रहरण |
| ४७ | ९,१० | प्रहृणमस्या | प्रहरणमस्या |
| ४८ | १५ | रक्षाबन्दुषु | रक्षबिन्दुषु |
| ,, | १७ | गज्जा | गञ्जा |
| ४९ | ७ | मूर्वाऽऽड्यो | मूर्वाऽऽढ्यो |

सूचना—इहास्य ग्रन्थस्याध्ययनात्प्रागभीष्टपाठस्य शुद्धिपत्रतः संशोधनं परमावश्यकमस्ति ।

| पृष्ठे | पक्तौ | अशुद्धशब्दा | शुद्धशब्दा | पृष्ठे | पक्तौ | अशुद्धशब्दा | शुद्धशब्दाः |
|---|---|---|---|---|---|---|---|
| ८९ | ११ | शल्पम् | शल्यम् | ९८ | ५ | र-रु याऽन्त | र-रु-या-न्त |
| , | १५ | गृद्या= | गृह्या= | १०० | २८ | अयोधनम् | आयोधनम् । |
| ९० | २६ | सर्व साधु | सर्व सम साधु | १०३ | ४ | क्रमो-यज्ञे | क्रमो-पज्ञे |
| ५१ | ४ | ङ्याबूङन | ङ्याबूङन्त | १०४ | ८ | प्रयय | प्रत्यय |
| ५६ | ४ | हिक्त्रा | हिक्का | १०५ | ३ | कालधिकार | कालाधिकार |
| ,, | ,, | उर्व्वे | ऊर्ध्वे | १०६ | ६ | भरणदिग्रह । | भरणादिग्रह । |
| ,, | ५ | चेटि | चेटी • | १०७ | २३ | पर्याया | पर्य्यायो |
| ,, | ,, | हिक्त्रा | हिक्का | १०९ | १२ | पष्ठा-श्छाया | पष्ठ्या-श्छाया |
| ,, | ९ | क्षरिस्वामी— | क्षोरस्वामी-- | ११० | ८ | समहेऽर्थे | समूहेऽर्थे |
| ,, | २१ | भिरुकेति। | झिरुकेति । | १११ | २ | यना समूह । | यूना समूह । |
| ६१ | १५ | नाम , | नाभ , | ,, | ९ | औग्दात्र =उग्दातु भवि | औद्गात्रम् = उद्-गातुर्भवि |
| ६२ | १६ | माडिका | माढिका | | | | |
| ,, | २४ | काकिणी | काकिनी | ,, | २० | रवेनाह हेम — | रवेणाह हेम — |
| ६३ | २१ | प्रियङ्गु-- | प्रियङ्गु— | ११२ | ९ | मार्दीकिति | मार्द्वीकिति |
| ६४ | ७ | किङ्किण्या | किङ्किण्या | ११६ | १६ | मिथुनस्मशान | मिथुनश्मशान |
| ६७ | १४ | भत्रा | भस्त्रा | ११८ | १६ | ममासाङ्ग, | समासाङ्ग, |
| ६९ | १३ | काच्या | काञ्च्या | ११९ | ५ | वृत्तिमन्तीरुजो | वृत्तिमन्नीरुजो |
| ७० | १७ | घमनि | धमनि | १२० | ५ | निकुरम्बकम्= | निकुरम्बम्= |
| ७२ | २५ | त्रिशन्तु ता | त्रिशत्तु ता | ,, | १५ | क्षेत्र-सन्त्रम् ।। | क्षेत्र–सत्त्रम् ।। |
| ,, | ,, | काला | कला | ,, | २७ | वक्त्रम्= | वक्रम्= |
| ७६ | २७ | मांसो । | मर्मी । | १२२ | १४ | २२२ प०५ | २२२ प० ६ |
| ७७ | २५ | दन्त्याञ्च | दन्त्याश्च | १२३ | ५ | प्राह्वापरा | प्राह्लापरा |
| ७८ | ५ | त्रिस्वल्पे | त्रिष्वल्पे | ,, | ११ | नपुंसकलिङ्ग वा | नपुँसकलिङ्ग वा |
| ,, | १० | 'वापि ' | वापी' | ,, | २० | क्षोणिभाय्ययो ।" | श्रोणिभार्य्ययो ।।' |
| ७९ | २८ | ६५) । | ६५) । आर्द्रा=नक्षत्रम् | ,, | २१ | युगान्तर | युगानन्तर |
| ८० | १५ | श्लेष्मादिस्त्रव , | श्लेष्मादिस्राव , | ,, | २६ | आर्दकम् | आर्द्रकम्, |
| ८३ | ६ | मालिनाम्बु | मलिनाम्बु | १२४ | ८ | आगारम्= | अगारम्= |
| ८४ | ६ | शाटि-भार्चति । | शाटि-भाती (टी) । | ,, | २० | सहनम्, | सहननम्, |
| ,, | १७ | विदी विदि. | त्रिटी विटि = पीतचन्दनम् | १२५ | १६ | कडुबादिभि । | कुडुबादिभि. । |
| ,, | १९ | व्राहिर्यवादि । | व्रीहिर्यवादि । | १२६ | २४ | जातू— | जानू— |
| ८५ | ९ | विद्रिधि– | विद्रधि– | १२७ | २५ | पुण्ड्राश्चभूषा | पुण्ड्राश्वभूषा |
| ,, | १० | कोर्ति, इति । | कोर्ति., इति । | १२८ | १६ | मणिक्यम्= | माणिक्यम् = |
| ,, | २२ | सम्बन्ध्या.) ।। | सम्बर्य्य ) ।। | १३० | ४ | शुभाभुभकर्म | शुभाशुभकर्म |
| ,, | ,, | सम्बध्या - सि० | सम्बरी = शतमूली । सि. | ,, | २८ | शालुक— | शालूक— |
| ८९ | १० | तारिर्दशाया | तरिर्दशाया | १३१ | ११ | कोरीट | किरीटं |
| ९० | २ | ह्रदिनी | ह्लादिनी. | ,, | २० | दारुणी | दारुणि |
| ९२ | १७ | कच्छु = | कच्छू = | १३२ | १५ | मङ्कुदे-ङ्गुद | मङ्गुदे-ङ्गुद |
| ,, | २५ | पूर्गीद्वार ) ।। | धूर्गीर्द्वार') ।। | १३४ | २ | स्त्रीपस | स्त्रीपुस |
| ९३ | ९ | वान्ति | वान्ति. | ,, | १२ | युद्ध च | युद्ध च |
| ,, | ,, | सूचित-स्नाश्च | सूचित-स्ताश्च | ,, | १९ | स्यात्महा | स्यान्महा |
| ,, | १७ | गो-दृषद् | गोर्दृ-षद् | ,, | २६ | रङ्ग च | रङ्गं च |
| ९४ | २७ | विप्रट्= | विप्रुट्= | १३५ | ६ | कौशल्यादि | कौशलादि |

| पृष्ठे | पंक्तौ | अशुद्धशब्दा | शुद्धशब्दा |
|---|---|---|---|
| १३६ | २ | बुक्वो | बुक्को |
| १३७ | १ | नान्ततद्धि भेदता | नान्तर्द्धिभेदता |
| १४२ | ७ | तक्र ह्यदश्चि | तक्र ह्युदश्वि |
| १३८ | १४ | दश्चिता | दश्विता |
| १४० | १८ | विप—— | चिय—— |
| १४१ | ११ | रूप्य । | रूप्यम् । |
| १४४ | ११ | जहादि | जाहादि |
| १४५ | ६ | शाश | शशा |
| ,, | ९ | विशेषम् ॥ | विशेषणम् ॥ |
| १४७ | १ | आकार | आकर |
| ,, | २० | बोलेऽङ्गह्लियो । | बोलेऽङ्गसिह्लयो । |
| १४८ | १० | अल्पादेव्या | अल्याख्या |
| १४९ | १ | हारा । | हारा । |
| ,, | १७ | क्षुद्रु | क्षुद्र |
| १५१ | १० | सन्नाह, | सन्नाह, |
| १५२ | ४ | मुद्गर | मुद्गर, |
| ,, | २३ | ना समी | ना स्यात्समी |
| ,, | २६ | नवोद्विद् । | नवोद्भिद् । |
| १५३ | ३ | शङ्कषु । | शङकुषु । |
| ,, | १७ | तखी । | तकी । |
| ,, | ,, | शास्त्र | शस्त्र |
| ,, | २३ | वेलस | वेतस |
| १५४ | १३ | उर्मि | ऊर्मि |
| ,, | २४ | पञ्चना | पञ्चता |
| १५५ | २३ | मुष्टनो | मुष्टिनो |
| ,, | २६ | कफोणावापि | कफोणावपि |
| १५८ | १९ | तद्गाद्वान | तद्वानगुणा |
| १६० | ३ | आरण्य | अरण्य |
| ,, | ,, | मुत्पन्नम् | मुन्यन्नम् । |
| ,, | ५ | घनम् | धनम् |
| १६१ | ६ | वचार | बिचार |
| ,, | १२ | जागरा, | जागर, |
| ,, | १८ | वीड, | व्रीड, |
| १६४ | २५ | वितस्ति | वितस्ती |
| १६५ | ५ | तिलान्ते | तिलान्ने |
| ,, | २६ | सि० कौ० | शि० को० |
| १६६ | ३ | अन्नन् | अन्नम् |
| ,, | ४ | प्रसृति, | प्रसृती |
| ,, | ५ | त्रिका = | त्रिका= |
| ,, | १६ | वाह्व— | बाह्व— |
| १६७ | ३ | रेणि्श्च | रेणुश्च |
| ,, | १४ | भ्रमदीना | भ्रमरादीना |

| पृष्ठे | पक्तौ | अशुद्धशब्दा | शुद्धशब्दाः |
|---|---|---|---|
| १६७ | १७ | कुम्भकार | कुम्भकार कसकारः |
| ,, | २९ | चर्म्मकर | चर्म्मकार |
| १६८ | ३ | तज्जातिरुया | तज्जातिरल्पा |
| १६९ | ५ | बर्हि-बालो | बर्हि-,बर्ली |
| ,, | ,, | क्लीबरार्थे | क्लीबे रार्थे |
| १७० | १८ | धर्म—- | घर्म—— |
| १७१ | २ | धर्मे | घर्मे |
| ,, | १३ | विधुतुन्दे । | विधुन्तुदे । |
| १७२ | २ | वर्द्ध । | वद्ध्र । |
| ,, | २१ | न द्ृयो | न द्वयो |
| १७३ | १५ | कूलकौ | कूलकौ |
| १७३ | २४ | अनार्द | अनार्द्र |
| ,, | २६ | पेटकम्= | पिटकम्= |
| ,, | २७ | तालुकम्= | तालकम्= |
| १७४ | २ | मिष्क—— | निष्क—— |
| ,, | १३ | अस्य व्याख्या | एषा व्याख्या |
| ,, | १६ | | सूतक सूतकम्=पारद 'सूतकोऽस्त्री पारदे न द्वयोर्जनौ ॥ इति मेदिनी । |
| ,, | २१ | करकम्= | मरकम्= |
| ,, | २७ | निदाघोघम | निदाघोद्यम |
| १७५ | ६ | तलयोरभेद । | रलयोरभेद । |
| १७६ | ३ | स्यादङ्गरीयकम् ।' | स्यादङगुरीयकम् ।' |
| ,, | २१ | मेंघो(वर्षो)त्पले, | मेंघो(वर्षो)पले, |
| ,, | २६ | सैन्य च | सैन्य च |
| १७८ | १८ | कुल्मास, | कुल्माष । |
| १७९ | ३ | अनुतर्षो ना | अनुतर्षोऽना |
| ,, | ९ | हिङ्गबाह्लीक | हिङगुबाह्लीक |
| ,, | ११ | स्त० प० १० | स्त० २ प० १० |
| ,, | १६ | नरे पुखन्न | नखरे पुन्न |
| ,, | २० | सारसतम् | सारसनम् |
| १८० | २४ | (टोप) | (टोपध) |
| ,, | २६ | काशकुकाशङ्कुश | काशकुशकाशङकुश |
| १८३ | २७ | उटस्तृण | उटजस्तृण |
| १८४ | २० | वासांसि | वाससि |
| ,, | २१ | ब्राढक, | आढक, |
| ,, | २३ | ब्राढको | आढको, |
| १८५ | १६ | घौताञ्जन्या | धौताञ्जन्या |
| १८५ | १८ | दिभिदुर्गम | दिभिर्दुर्गम |
| १८७ | २० | अप —, | अप—— |
| १८८ | ११ | मित्येतदका | मित्येतदेका |
| १८९ | १ | शस्त्राभद्य | शस्त्राभेद्य |

| पृष्ठे | पङ्क्तौ | अशुद्धशब्दा | शुद्धशब्दा |
|---|---|---|---|
| १८९ | ६ | जद्यन्य | जघन्य |
| ,, | १० | निपुत | नियुत |
| १९१ | ५ | श्लोक' ११) । . | श्लोक ११)। वियूथ वियूथम्=पक्षिवृन्दम् । |
| १९२ | ५ | पलकेऽपि | फलकेऽपि |
| १९६ | १ | ज्ञेययाक्रीड | ज्ञेयमाक्रीड |
| ,, | ८ | द्विपि, | द्वीपि, |
| २०० | ३ | चक्र-चेक्र— | चक्र-चुक्र— |
| ,, | १७ | कङ्गाल | कङ्काल |
| ,, | २८ | सूत्र तु | सूत्रे तु |
| २०१ | १६ | आलिञ्जर | अलिञ्जर |
| ,, | २८ | पटाहाष्टा | पटाट्टाष्टा |
| २०३ | २१ | सङ्गग , | सङ्गम , |
| २०४ | १५ | ऋतुराज । | ऋतुराज । |
| २०५ | १३ | पारिहार्य्य | पारिहार्य्य |
| ,, | १५ | करण्टक , | करकण्टक , |
| २०६ | ८ | सहस्त्रयुतम् | सहस्त्रायुतम् |
| ,, | १० | शेफकेशो' | शेफकोशो' |
| ,, | १७ | स्यात्काक्षयाढक्यो | स्यात्काक्ष्याढक्यो |
| २०७ | ४ | मथो गुणो ।' | मथो गुणे ।' |
| २०९ | ५ | नुपुर, नुपूरम्= | नूपुर, नूपुरम्= |
| ,, | ६ | नुपूरो | नूपुरो |
| २०९ | १६ | परिपाटी , | परिपाटि , |
| २११ | ५ | ललाटायो' ।' | ललाटयो ।' |
| २१२ | १५ | कवल कबलो | कबल कबतो |
| २१६ | ३० | जपान्तरे | झषान्तरे |
| २१९ | २९ | वनरान्तरे | वानरान्तरे |
| २२० | १५ | बर्ह | बर्ह |
| २२१ | १४ | जीवात्वादो दार्वादो | जीवात्वादौ दार्वादौ |
| २२२ | १९ | (समस्त्वात्) | (समस्तत्वात्) |
| २२८ | ६ | नालकाण्डे मृणाल च | नाल काण्डे मृणाले च |
| ,, | १३ | बिम्बोऽत्री | बिम्बोऽस्त्री |
| २२९ | १ | ऽधर्य | ऽधमे |
| २३४ | ७ | विदुर्मलतायावक | विदुर्लतायावक |

| पृष्ठे | पङ्क्तौ | अशुद्धशब्दा | शुद्धशब्दाः |
|---|---|---|---|
| २२२ | ३५ | अपराद्ध तु | अपराद्धे तु |
| २३७ | ४ | अर्धचेति । | अर्धर्चेति । |
| २३७ | २६ | मण्डल, | मण्डन |
| ,, | २७ | कूच, | कूर्च, |
| २४० | १७ | मृत्मय— | मृन्मय— |
| ,, | २७ | कन्यान्याकुब्ज | कन्याकुब्ज |
| २४१ | १६ | इषद्धास्यम् | ईषद्धास्यम् |
| २४५ | २ | अलाबु-जम्बु— | अलाबु-जम्बू-डु |
| ,, | २३ | तयोदप्येते | तयोरप्येते |
| २४८ | २९ | त्रभुवनम्= | त्रिभुवनम्= |
| २४९ | ४ | विपाभा | विभापा |
| २५१ | ४ | ऽनुतप, | ऽनुतर्पे |
| २५२ | १६ | दृढेऽन्यलिङ्ग | दृढेऽन्यलिङ्ग |
| ,, | २२ | पूर्वयौरस्त्य | पूर्वपौरस्त्य |
| ,, | २३ | आभरणा , | आभरणा, |
| २५३ | ९ | फूलादौ, | पूलादौ, |
| ,, | १० | इष्वन्ता शब्दा | इष्वन्ता' शब्दाः |
| ,, | २६ | 'गौणी | 'गोणी |
| २५५ | ३ | तुणी निल्या | तूणी नील्या |
| ,, | १६ | श्लोक ४४) । . | पिठर , पिठरी,पिठरम्= उखा, स्थाली, ओदन-पचनपात्रम् । |
| ,, | २१ | स्रवादो | स्रुवादौ |
| २५७ | २१ | धूलो पुष्पराग | धूलौ पुष्पराग |
| २५९ | १९ | गन्धिधना | गन्धिघना |
| ,, | २० | त्रिलिङ्यामिति | त्रिलिङ्ग्यामिति |
| ,, | ,, | 'त्रिलिङ्याम्' | 'त्रिलिङ्ग्याम्' |
| ,, | २४ | गन्धधना | गन्धघना |
| २६२ | १२ | आचार्य्य-त्वि— | आचार्य्य-र्त्वि— |
| २६४ | ९ | रागादि " इत्यण् | रागाद् " इत्यण् |
| ,, | १९ | दस्थ-त्तिङ् | अस्म-त्तिङ्— |
| ,, | ,, | कुकुटश्च मयूरी च कुकुटमयूर्यौ | कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ |
| २७२ | ४ | पूर्वपदभूता । | पूर्वपदभूताः । |